Government Oriental Library Series

Bibliotheca Sanskrita No. 51.

# अलङ्कारमणिहारः

श्रीमद्भिः श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्रैः प्रणीतः

प्रथमो भागः

# ALANKĀRA-MAṆIHĀRA

BY

SRI KRISHNA-BRAHMATANTRA PARAKĀLASWĀMIN

## Part I

EDITED BY

L. SRINIVASACHARYA

*Pandit, Government Oriental Library, Mysore*



Published under the authority of the Government of His Highness the Maharaja of Mysore

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS

1917

# प्रस्तावना.

अथेदानीं किञ्चिदत्र प्रस्तूयते—सुप्रसिद्धं खल्वेतत् प्रेक्षावतामप्रेक्षावतां च सर्वेषां पुरुषाणां, यत्—कर्णाटजनपदसंपदधिष्ठानभूतमहीशूरमहाराजधानीमध्यविद्योतमानदिव्यरत्नसिंहासनाधिरूढश्रीमन्महाराजश्रीकृष्णराज - सार्वभौमवंशदेशिकेन्द्राः श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्राः परश्शतप्रबन्धनिर्माणधुरंधुराः सर्वतन्त्रस्वतन्त्राः अनन्यजनसामान्यमान्यतमानेककार्यनिर्वहणविचक्षणाः श्रीब्रह्मतन्त्रपरकालमहास्थानमभूषयन्निति.

ते किल महाभागाः अलंचक्रुरपि निखिलेतरशास्त्रेष्विवालंकारशास्त्रे केनचन महता प्रबन्धेन अलंकारमणिहारनामधेयेन भगवन्तं श्रीनिवासं परमं दैवतं देवतानामपि. अयं च प्रबन्धः प्रत्यलंकारमात्मीयैरेव लक्ष्यलक्षणैः केवलभगवद्विभूतिविषयकैराचितः परिहृतश्च तेन बहोः कालादापतितो महतोऽलंकारशास्त्रस्य उदाहरणगर्हणनिबन्धनो दोषः। इदानीं पुनरनेन महता प्रबन्धेन लक्ष्यलक्षणसमन्वयविषयकसङ्कोचोपि शिथिलीभविष्यति पठितॄणां पाठयितॄणां च ॥

किं चास्मिन् प्रबन्धे प्राच्योदीच्याखिलालङ्कारिकसम्मतस्सिद्धान्तः परस्परं मतभेदः तत्र साधुत्वासाधुत्वविवेकश्च स्फुटं निरूपितः प्रायः सर्वेष्वप्यलङ्कारेषु । तेन च सुशकं विज्ञातुमखिलमप्यलङ्कारसर्वस्वं, अन्तरेणैव अवलोकनं प्राचीनस्य नवीनस्य वा कस्याप्यपरस्यालङ्कारप्रबन्धस्य ॥

अस्मिंश्च पुस्तके प्रथमभागे उपमालङ्कारमारभ्य समासोक्तिपर्यन्ताः पञ्चविंशतिरलङ्काराः सविचाराः संग्रथिताः, द्वितीयभागे चावशिष्टाः, सङ्ग्रथ्यन्ते. इत्यावेदयति

मैसूरु, सज्जन विधेयः,

31—3—1917. लक्ष्मीपुरं श्रीनिवासाचार्यः.

# विषयानुक्रमणिका.

॥ श्रीरस्तु ॥

# अलङ्कारमणिहारः

श्रीहयवदनपरब्रह्मणे नमोनमः ॥

श्रीनिवासपरब्रह्मणे नमः ॥

श्रीवासब्रह्मतन्त्रोत्तमकलिमथनाल्लब्धचक्राङ्कभाष्यं
श्रीवासे देशिकेन्द्रे कलिमथनगुरावार्पितात्मीयभारम् ।
रङ्गेन्द्रब्रह्मतन्त्रादिमपदकलिजिद्देशिकेन्द्रात्तुर्यं
श्रीकृष्णब्रह्मतन्त्राग्रिमपदपरकालार्यवर्यं श्रयामः ॥

---

श्रीवेङ्कटधरणीधरशिखरालङ्कारमद्भुताकारम् । वाणी मम परिचिनुतान्नाणीयः किमपि मङ्गळं जगताम् ॥ १ ॥

अत्रालङ्कारशब्देनास्य प्रबन्धस्यालङ्कारविषयकत्वं सूचितम् ॥

हृदयभुवं मम हयमुखलक्ष्मीनारायणावलङ्कुरुताम् । राजयुवराजभूतौ परकालास्थानराज्यसीमनि यौ ॥ २ ॥

सादरमिह वेदगिरिप्रादुर्भूतं सरोजभूदयितम् । घनसारसरसभासं शिरसा हरिमानमामि परमाद्यम् ॥ ३ ॥

वेदगिरौ वेङ्कटाद्रौ 'वेदाद्रिर्गरुडाद्रिश्च' इति तन्नामसु पाठात्। प्रादुर्भूतं अभिव्यक्तं सरोजभुवः श्रियः 'साऽहं वै पङ्कजे जाता' इति महाभारतोक्तेः। दयितं वल्लभं घनसारः जलधरवरः 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः। तमिव सरसभासं आद्यं जगत्कारणं अतएव परं सर्वस्मादुत्तमं हरिं श्रीनिवासं सादरं यथा स्यात्तथा शिरसा आनमामि।

पक्षे—सरोजभूर्ब्रह्मा तस्मिन् दयाऽस्य सञ्जाता दयितः तारकादित्वादितच्। तं तथोक्तं, अतएव वेदगिरि निगमवाचि सादरं, अतएव प्रादुर्भूतं मधुकैटभनिर्वर्तितनिगमापहारनिर्विण्णे नीरजासने

> एतस्मिन्नन्तरे राजन् देवो हयशिरोधरः।
> जग्राह वेदानखिलान् रसातलगतान् हरिः॥

इति हयशिरउपाख्यानोक्तरीत्या वेदोद्धरणाय कृतावतारमित्यर्थः। घनसारः कर्पूरः 'अथ कर्पूरमस्त्रियाम्। घनसारः' इत्यमरः। तमिव सरसभासं रमणीयविशदसुषमं आद्यं शिरसा हरिं हयशिरसमित्यर्थः। 'इत्थंभूतलक्षणे' इति तृतीया। परं अत्यन्तं आनमामि। अत्र श्रीनिवासहयाननयोरुभयोरपि नन्तव्यत्वेन प्रस्तुतयोरेव श्लेषः॥ ३॥

**अन्योन्यानुगुणाधिकविकस्वरोल्लासिललितमधुरतमम्। विश्वालङ्करणं तद्विभातु मम हृदि सदातनं मिथुनम्॥ ४॥**

अन्योन्यस्य परस्परस्य अनुगुणानि अधिकं विकस्वराणि

उल्लासीनि उल्लासवन्ति यानि ललितानि विलासविशेषाः तैः मधुरतमम् । यद्वा—अन्योन्यानुगुणाधिकविकस्वरोल्लासोऽस्यास्तीति तथोक्तं भिन्नं पदम् । ललितमधुरतमं विश्वालङ्करणं सकललोकविभूषणभूतं सदातनं मिथुनं श्रीश्रीनिवासरूपं मम हृदि विभातु ।

पक्षे—अन्योन्यं अनुगुणः अधिकं विकस्वरः उल्लासश्चेत्येतेऽलङ्कारा अस्मिन् सन्तीति तथोक्तम् । ललितेन ललितनाम्नाऽलङ्कारेण मधुरतमं विश्वं सर्वं अलङ्करणं अलङ्कारशास्त्रमित्यर्थः । यद्वा—विश्वानि अलङ्करणानि यस्मिन् विषयविषयिभावसम्बन्धेन सन्ति तत्तथोक्तं तद्रूपं मिथुनमिति योजना । स्पष्टमन्यत् । विवक्षितसूचनायायं श्लेषसंरम्भः ॥ ४ ॥

**युक्त्युल्लेखविचित्रप्रौढोक्तिनिदर्शनातिगम्भीरा-न् । सपरिकरसमाधिविधीन्वचसाऽलंकृतिमणी-न्गुरून्कलये ॥ ५ ॥**

युक्तीनां उल्लेखेन ऊहेन विचित्रा आश्चर्यावहाः याः प्रौढाः प्रगल्भाः उक्तयः तासां निदर्शनेन प्रकाशनेन अतिगम्भीरान् सपरिकरः यमनियमादिपरिकरसहितः समाधिविधिः ध्यानविधानं येषां तान् अनारतपरब्रह्मध्यानबद्धादरानित्यर्थः । विशेषणद्वयेन 'द्वे विद्ये वेदितव्ये' इत्युक्तपरावरज्ञानोपादातृत्वं सूचितम् । कृतिमणीन् विद्वद्वरिष्ठान् गुरून् लक्ष्मीनाथाद्यस्मदाचार्यपर्यन्तान् अलं वचसा कलये स्तौमीत्यर्थः ।

पक्षे—युक्तिः उल्लेखः विचित्रं प्रौढोक्तिः निदर्शनेत्येतैरलङ्कारविशेषैः अतिगम्भीरान् परिकरः समाधिः विधिरित्येतैरल-

ङ्कारैस्सह वर्तन्त इति तथोक्तान् गुरून् श्रेष्ठान् अलङ्कृतयो मणय इव अलङ्कृतिमणयः तान् वचसा कलये ग्रश्नामीत्यर्थः । अत्र सूच्यार्थस्य श्लेषेण सूचनम् ॥ ५ ॥

**वकुलसरालङ्कारं सकलभवामयभरागदङ्कारम् ।**
**अशठान्तरङ्गसेव्यं शठारिमभ्येम्यहं दृढाभक्तिः ॥**

दृढा भक्तिर्यस्य सः दृढाभक्तिः । अत्र दृढाशब्दस्य न पुंवद्भावः 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावविधौ 'अपूरणीप्रियादिषु' इति पर्युदस्ते प्रियादौ भक्तिशब्दस्य पाठात् । अत्राप्यलंकारशब्देन वक्ष्यमाणसूचनम् ॥ ६ ॥

**उपमोत्प्रेक्षागोचरमुद्धृतविषमप्रतीपदृष्टान्तम् ।**
**नाथमुनिं कलयेऽलं क्रियावतां ब्रह्मवेदिनां मान्यम् ॥ ७ ॥**

उपमोत्प्रेक्षायाः साम्यसम्भावनायाः अगोचरं असदृशमिति यावत् । उद्धृताः निर्मूलिताः विषमैः प्रतीपैः प्रतिमतकथकैः दृष्टाः अन्ताः निश्चयाः तेषां दृष्टान्ताश्शास्त्राणि वा येन तं निरस्तसकलविमतसिद्धान्तमित्यर्थः । 'अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे' इति रत्नमाला, 'दृष्टान्तावुभे शास्त्रनिदर्शने' इत्यमरः । पक्षे—उपमोत्प्रेक्षे अलङ्कृती गोचरौ प्रतिपाद्यौ यस्य तं उद्धृताः स्थापिताः विषमं प्रतीपं दृष्टान्त इत्येतेऽलङ्कारा येन तं, अलं पर्याप्तं यथा स्यात्तथा क्रियावतां अननुसंहितफलकर्मानुष्ठानशालिनां अतएव ब्रह्मवेदिनां ब्रह्मविदां मान्यम्, अनेन

'क्रियावानेष ब्रह्मविदां वरिष्ठः' इति मुण्डकश्रुतिः प्रत्यभिज्ञाप्यते। पक्षे—अलङ्क्रियावतां आलङ्कारिकाणां, अन्यत्सुगमम्। अत्रापि श्लेषमहिम्ना विवक्षितं सूचितम् ॥ ७ ॥

साधुकलिताल्पसारावज्ञं यामुनमुनीन्द्रमामनवै।
छेकोक्तिपरिग्रन्थितसाक्षेपप्रत्यनीकवक्रोक्तिम् ॥८॥

साधु यथा स्यात्तथा कलिता कृता अल्पसारेषु ऐहिकफलसाधनकर्मप्रतिपादकवेदपूर्वभागेषु अवज्ञा तिरस्कारो येन तं 'असारमल्पसारं च सारं सारतरं त्यजेत्' इत्युक्तरीत्या परित्यक्ताल्पसारमित्यर्थः। अनेन असाररूपबाह्यकुदृष्टिशास्त्रावज्ञानं कैमुतिकन्यायसिद्धम्। इदं आमुष्मिकफलप्रतिपादकवेदभागरूपसारावज्ञायाः आत्मतत्प्राप्तिसाधनमात्रप्रतिपादकांशलक्षणसारतरावज्ञायाश्चोपलक्षणम्। अनेनैव 'भजेत्सारतमं शास्त्रे रत्नाकर इवामृतम्' इत्युक्तरीत्या परमात्मतत्प्राप्तितत्साधनप्रतिपादकवेदप्रदेशरूपसारतमनिष्ठता चार्थसिद्धा। छेकाः विदग्धाः याः उक्तयः ताभिः परिग्रन्थिताः बाधिताः क्रान्ता इति वा, साक्षेपाः आक्षेपसहिताः प्रत्यनीकानां प्रतिमतकथकानां वक्रोक्तयः अनृजुव्याहाराः येन तं तथोक्तं 'ग्रन्थितं गुम्भिते क्रान्ते हिंसिते च त्रिलिङ्गकम्' इति मेदिनी। पक्षे—साधु यथा स्यात्तथा कलिताः रचिताः अल्पं सारः अवज्ञा चेत्येता अलङ्कृतयो येन तं; छेकोक्तिः तन्नामालङ्कृतिः तया परिग्रन्थिते गुम्भिते मिश्रिते इत्यर्थः। आक्षेपेण तन्नाम्नाऽलङ्कारेण सह वर्तेते इति साक्षेपे, प्रत्यनीकं च वक्रोक्तिश्चेत्येते अलङ्कृती येन तं तथोक्तम्। यामुनमुनीन्द्रं आमनवै ध्यायानि। मनु अवबोधने, लोट्, उत्तमैकवचनम्। सूचनं पूर्ववत् ॥

यश्चक्षुश्श्रुतिनाथस्त्रातुं वेदान्मुनित्वमभिपद्य । श्रुतिचक्षुरग्रगण्यो बभूव तमिमं भजेय भाष्यकृतम् ॥ ९ ॥

चक्षुश्श्रुतिनाथः शेषः वेदान् त्रातुं अर्थतः शब्दतश्च रक्षितुं मुनित्वं रामानुजमुनित्वं पतञ्जलिमुनित्वं चाभिपद्य प्राप्य श्रुतिचक्षुषां वेदविदां अग्रगण्यो बभूव । आदौ चक्षुश्श्रुतिनाथः मुनित्वे श्रुतिचक्षुरग्रगण्य इत्येतदेव वैलक्षण्यमिति भावः । भाष्यकृतं श्रीभाष्यकारं महाभाष्यकारं च भजेय ॥ ९ ॥

स्मृतिसन्देहभ्रान्तिमदसंगतिविकल्पमीलनोल्लासी । वेदान्तदेशिकमणिर्मोदान्विदधातु जगदलङ्कारः ॥ १० ॥

स्मृतिषु मानवादिधर्मसंहितासु सन्देहभ्रान्तिमतां संशयभ्रमवतां कौतस्कुतानां असङ्गतयः सङ्गतिरहिताः असम्बद्धा इत्यर्थः । ये विकल्पाः तेषां मीलने निरासे उल्लासी । पक्षे— स्मृत्याद्युल्लासान्तास्सप्तालङ्काराः ते सन्त्यस्मिन्निति तथोक्तः । इदमुपलक्षणं सर्वालङ्कारवत्तायाः ॥ १० ॥

श्रीब्रह्मतन्त्रकलिरिपुगुर्वास्थानीधुरन्धरानखिलान् । हृदि भावयेऽत्युदारान्वसुधालङ्कारमणिहारान् ॥ ११ ॥

वसुधालङ्कारमणिहारानित्यनेन अलङ्कारमणिहार इति विवक्षितप्रबन्धनामसूचनम् ॥ ११ ॥

अतिमात्रा प्रतिपत्तिश्श्रीशे यस्याद्भुता जनै-र्ददृशे । सुमहान्परकालमुनिस्स मदन्वयशेखरो गुरुर्जयतात् ॥ १२ ॥

यस्य गुरोः श्रीशे भगवति विषये अतिमात्रा मात्रामतिक्रान्ता अतिवेला प्रतिपत्तिः गौरवं प्रबोधो वा—

प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च ।
संप्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति ॥

इति मेदिनी । पक्षे—अविद्यमानं तिमात्रं तिवर्णमात्रं यस्यां सा प्रतिपत्तिः प्रपत्तिः भरन्यसनमित्यर्थः । प्रतिपत्तिशब्दे तिवर्णापनयने प्रपत्तिरिति निष्पत्तेः, शब्दार्थयोस्तादात्म्यमिह शरणम् । अद्भुता आश्चर्यावहा सती जनैः ददृशे । भगवति यस्य गौरवं ज्ञानं प्रपदनं चात्याश्चर्यावहतया जनैर्दृष्टानीत्यर्थः । प्रपदनस्याश्चर्यत्वं च अनेनाचार्येणातिमात्रार्ततया प्रपदनमनुष्ठाय स्वाभीप्सित एव समये मोक्षसाम्राज्यस्यासादितत्वादिति तद्वैभवप्रकाशिकादिषु सुस्पष्टम् । ददृशे इत्यनेन सर्वलोकसाक्षिकत्वमीदृशप्रपदनस्य दर्शितम् । मदन्वयस्य विद्यया जन्मना च मद्वंशस्य शेखरः । उभयोरपि श्रीशैलघनगिर्यप्पलार्यवंश्यत्वात्तथोक्तिः ॥ १२ ॥

वादाः कुदृशां शमिता जलदेनेव प्रतीपताभाजः । येन स गुरुर्विजयतां श्रीवासब्रह्मतन्त्रपरकालः ॥ १३ ॥

जलदेन प्रतीपताभाजः प्रतिलोमतां प्राप्ता वादाः दावाः

इत्यर्थः। त इव, अर्थगतं बहुत्वं शब्दे आरोप्यते। येन आचार्येण प्रतीपताभाजः प्रातिकूल्यभाजः कुदृशां वादाः शमिताः। स्पष्टमन्यत् ॥ १३ ॥

शरणगतजनपुनर्भवभयापनेता जयाय मे भवतात् । श्रीवासदेशिकेन्द्रोपपदश्रीब्रह्मतन्त्रयतिनेता ॥ १४ ॥

एकेन येन बुधता गुरुता कविता च दर्शिता विधुता । दुर्ग्रहबाधां शमयतु स श्रीरङ्गेन्द्रकलिरिपुयतीन्द्रः ॥ १५ ॥

येन एकेनैव विधुता चन्द्रता पक्षे अविधुता अप्रकम्पिता अन्यापरिभावनीयतेत्यर्थः। बुधता सौम्यता प्राज्ञता च, गुरुता वाक्पतिता आचार्यता च कविता भार्गवता काव्यकर्तृता च दर्शिता। दुर्ग्रहबाधां दुष्टग्रहाणां कुजादीनां पीडां दुराग्रहव्यसनितां च शमयतु । एकस्यैवास्य चन्द्रबुधादिशुभग्रहरूपत्वात् दुर्ग्रहबाधाशमनपटीयस्त्वमस्तीति भावः। अन्यत्सुगमम् ॥१५॥

तातार्यस्य गुरोर्मे ख्यातात्मगुणस्य चरणनलिनयुगे। अतिवेलं लगतु मनः प्रतिलोमं वाऽनुलोमं वा ॥ १६ ॥

प्रतिलोमं मनः नम इत्यर्थः। प्रतिलोमानुलोमशब्दयोः 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यच् ॥ १६ ॥

नवदुर्गतातदेशिककृष्णाम्बासूनुरातनोतीमम् । श्रीशैलान्वयजन्मा कृष्णोऽलङ्कारमणिहारम् ॥ १७

श्रीश्रीनिवासमनुपममुपमाद्यैरखिलजगदल-ङ्कारम्। अश्रामोऽलङ्कारैर्वाञ्छामस्माकमेष सफ-लयतात् ॥ १८ ॥

चपलोसावुद्युङ्क्ते विपुलालङ्कारवर्णनव्याजात्।
भगवत्स्वरूपरूपप्रभावगुणविभवलेशमभिधातुम् ॥

वाणीं हरिगुणभणनात्कृतार्थयितुमेव कृतिरि-यं क्रियते। ललिततया बालानामुपकुर्याच्चेत्प्रका-ममुपकुरुताम् ॥ २० ॥

आरचये कृतिमेतामात्मीयैर्लक्ष्यलक्षणैरेव ।
यक्षाधिपो नवनिधिर्भिक्षाक इवान्यवसु किमा-दत्ते ॥ २१ ॥

आनुष्टुभेन लक्षणमार्याजातेन लक्ष्यजातमपि।
वृत्तेन विरचयेऽहं यत्तेन प्रीयतां फणिगिरीशः॥२२

श्रीपतिरहिगिरिनिलयः प्रापयतु नितान्तहृद्य-तामेनम्। स्वोपज्ञलक्ष्यलक्षणरूपमलङ्कारमणिहा-रम् ॥ २३ ॥

देवच्छन्दोऽनुगुणो दीव्यादुपमादिसरससरशत-भाक्। लक्ष्मीवल्लभहृदये ललितोऽलङ्कारमणि-हारः ॥ २४ ॥

देवस्य श्रीनिवासस्य छन्दसः अभिलाषस्य अनुगुणः अनुरूपः 'छन्दः पद्येऽभिलाषे च' इति सान्तनानार्थेष्वमरः। श्रीनिवासप्रीत्युचित इत्यर्थः। पक्षे अनुगतो गुणेन अनुगुणः 'अत्यादयः क्रान्ताद्यर्थे तृतीयया' इति समासः। उपमादयः अलङ्कारा एव सरसाः रमणीयाः सराः यष्टयः तेषां शतं भजतीति तथोक्तः। 'लतिका लडिका यष्टिस्तुल्यार्थास्स्युस्सरस्सरिः' इत्युक्तेः। अत एव देवच्छन्दः तन्नामा, 'देवच्छन्दोऽसौ शतयष्टिकः' इत्यनुशासनात्। ललितः अलङ्कारमणिहारः एतन्नामा प्रबन्धः। पक्षे—अलङ्काररूपश्चासौ मणिहारश्च लक्ष्मीवल्लभस्य हृदये मनसि वक्षसि च दीव्यात् प्रकाशताम् ॥ २४ ॥

सिन्धुमिवास्मद्ग्रन्थं मन्थानेनेव चेतसा मथ्नन्। विषमिव दोषं हित्वा मणिमिव गुणमाददातु विबुधेन्द्रः ॥ २५ ॥

इत्यलङ्कारमणिहारे अलङ्कारप्रबन्धे उपोद्घातः.

---

जयतु श्रीवृषाद्रिस्थं जगत्त्रितयरक्षणम्।
वदान्यं परमं ब्रह्म वक्षोऽलङ्कारलक्षणम् ॥ १ ॥

वक्षसः अलङ्कारः आभरणभूतं लक्षणं श्रीवत्सचिह्नं यस्य तत्। अनेनालङ्कारलक्षणत्वमस्यानुष्टुभप्रबन्धस्य सूचितम्। अयमलङ्कारलक्षणारम्भश्लोकः ॥

# अथोपमालङ्कारसरः (१).

## उद्भूता भाति साम्यश्रीरुभयोर्यत्र सोपमा ।

यत्र काव्ये उभयोरुपमानोपमेययोस्सहृदयहृदयाह्लादिनी सादृश्यलक्ष्मीः चारुसादृश्यमिति यावत्, उद्भूता व्यङ्ग्यभावमन्तरेण स्फुटतमा सती भाति निषेधाप्रतियोगितया लसति तत्रोपमालङ्कार इत्यर्थः । अत्र यत्र द्वयोस्सादृश्यं वर्ण्यते तत्रोपमालङ्कार इत्येतावदुक्तौ 'प्रश्नामि काव्यशशिनं विततार्थरश्मिम्' इत्यादौ उपमालङ्कारापत्तिः, तत्र काव्यशशिनोरर्थरश्मीनां च सहृदयहृदयाह्लादिधर्मसाम्येन सादृश्यप्रतीतेः । अत उपमानोपमेययोरित्युक्तम् । कविसमयप्रसिद्ध्या उपमानोपमेयत्वयोग्ययोरित्यर्थः । न हि काव्यशशिनोरुपमानोपमेयत्वयोग्यताऽस्तीत्यदोषः । 'गोसदृशो गवयः' इत्यादौ गोगवययोस्तथात्वेऽपि नोपमालङ्कार इति तत्रातिव्याप्तिवारणाय सहृदयहृदयाह्लादिनीति । इदं सहृदयहृदयाह्लादित्वविशेषणं सर्वालङ्कारलक्षणानुयायि । अतएव 'गौर्वाहीकः' इत्यादौ न रूपकं, 'स्थाणुर्वा पुरुषो वा' इति न सन्देहः 'इदं रजतम्' इति न भ्रान्तिमान्, 'नेदं रजतं किं तु शुक्तिः' इत्यादौ नापह्नव इत्याद्याहुः । उद्भूतेति व्यङ्ग्योपमाव्यावृत्त्यर्थम्—

समराङ्गणमारूढं भवन्तं पश्यतां नृणाम् ।
भवं कल्पान्तसंक्रुद्धं द्रष्टुं नोत्कण्ठते मनः ॥

इत्यादौ तथाभूतं त्वां दृष्टवतस्तथाभूतभवदर्शनमासीदिति प्रतीतेः किञ्चित्कुर्वतोऽशक्यवस्त्वन्तरकृतिरूपविशेषालङ्कारः । तेन च तथाभूतो भव इव तदा त्वं स्थित इत्युपमा व्यज्यते ।

अत्रोपमाया व्यङ्ग्यायाः प्राधान्येनालङ्कार्यता, न त्वलङ्कारता। अत उद्भूतेत्यस्याव्यङ्ग्यत्वपर्यवसानादस्य न व्यङ्ग्योपमायामतिव्याप्तिः। निषेधाप्रतियोगित्वविवक्षणात् व्यतिरेकव्युदासः। ततश्च सहृदयहृदयाह्लाददायित्वे सत्यव्यङ्ग्यं सादृश्यमुपमेत्येतावदेव लक्षणमिह विवक्षितम्, न तूपमानोपमेयत्वयोग्ययोरित्यपि, 'ग्रथ्नामि काव्यशशिनम्' इत्यादौ चारुत्वाभावादेवातिव्याप्त्यसंभवात्। अतएव उभयोस्साम्यश्रीरित्येवोक्तं, तदप्यनन्वयेऽतिव्याप्तिनिरासाय।

न चैवमप्युपमेयोपमाप्रतीपयोरतिव्याप्तिः। तयोरुक्तसादृश्यवर्णनसत्त्वेनोपमालङ्कारान्तर्भावस्येष्टत्वात्, तृतीयसदृशव्यवच्छेदस्य प्रसिद्धोपमानप्रातिलोम्येन प्रसिद्धोपमेयोत्कर्षस्याधिकस्य तत्र फलस्य सद्भावेन तत एव तयोरुपमायाः पृथगुक्तेः, उपमेयोपमायां प्रकृताप्रकृतगोचरोपमाद्वयरूपतया प्रतीपे अप्रकृतविषयतया च तस्याः प्रतीतेः। अन्यथा अप्रकृतविषयस्मृत्यादेरपि प्रकृतविषयस्मरणादितोऽलङ्कारान्तरत्वापत्तेश्च। अतएव 'प्रतीपमुपमेयोपमा चेत्युभयमपि सङ्ग्राह्यमेवेति न तद्व्यापनं लक्षणस्य दोषः' इति चित्रमीमांसायामुपमालक्षणपरिष्करणावसरे कण्ठरवेणैव प्रतिपादितम्।

केचित्तु—सादृश्यप्रतीतिमात्रोद्देश्यककविसंरम्भविषयीभूतचारुसादृश्यमुपमेति विवक्षितम्। तेन अनन्वयोपमेयोपमाप्रतीपेषु न काप्यातिव्याप्तिः, तत्र सादृश्यस्यानुपमत्वद्योतनतृतीयसदृशव्यवच्छेदोपमेयोत्कर्षफलकत्वेन कविसंरम्भगोचरतया सादृश्यबोधमात्रोद्देश्यककविसंरम्भविषयत्वविरहादित्याहुः॥

इदं कुवलयानन्दकृदनुरोधेन। रसगङ्गाधरकृदनुरोधेन त्वेवं लक्षणम्—

**वाक्यार्थोपस्कारकं यत्सादृश्यं चारु सोपमा ॥ २ ॥**

सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालङ्कृतिः। चारुत्वं च चमत्काराधायकत्वं, चमत्कारश्चानन्दविशेषस्सहृदयहृदयसाक्षिकः। 'सागरस्सागरोपमः' इत्याद्यनन्वये सादृश्यस्य द्वितीयसतीर्थ्यनिवर्तनमात्रार्थमुपात्ततया स्वयमप्रतिष्ठानादचमत्कारित्वमेव। अतएव तस्यान्वयाभावादनन्वयं तमभिदधते। 'नाथ त्वद्वदनौपम्यं कथं धत्तां सुधाकरः' इत्यादिव्यतिरेके चमत्कारिणो निषेधस्य निरूपणाय प्रतियोगिनस्सादृश्यस्य निरूपणमचमत्कारकमेव। एवमभेदप्रधानेष्वपि रूपकापह्नुतिपरिणामभ्रान्तिमदुल्लेखादिषु, भेदप्रधानेषु दृष्टान्तप्रतिवस्तूपमादीपकतुल्ययोगितादिषु चमत्कारिषु तत्तन्निष्पादकत्वेनावस्थितस्यापि सादृश्यस्य चमत्कारितावैधुर्येण नास्त्युपमालङ्कारत्वम्। 'मुखमिव चन्द्रः' इति प्रतीपे, 'चन्द्र इव मुखं मुखमिव चन्द्रः' इत्युपमेयोपमायां च सादृश्यस्य चमत्कारित्वान्नातिप्रसङ्गश्शङ्क्यः, तयोस्सङ्ग्राह्यत्वात् ॥

ननु—'त्वयि कोपो ममाभाति सुधांशाविव पावकः' इत्यादावुपमानस्यातिमात्रमसम्भाविततया न तावत्सादृश्यमेव शक्यं प्रतिपत्तुं, चमत्कारः पुनर्दवीयानेवेति चेत्—कविना हि खण्डशः पदार्थोपस्थितिमता यथेप्सितं संभावितत्वेनाकारेण सुधाकराधिकरणकं पावकं परिकल्प्य तेन सह साम्यस्यापि कल्पने बाधकाभावात्। न च कल्पितमसत्सादृश्यं कथंकारं चमत्कार-

मारचयेदिति वाच्यम् । सुकुमारसुन्दरतरसुवर्णप्रतिमात्वेन भावनया पुरतस्स्थतायाः वनितायाः परिरम्भस्य प्रियम्भावुकतादर्शनात् । उपमानोपमेययोस्सत्त्वस्य लक्षणे प्रवेशाभावान्नात्र दोषगन्धोऽपि ॥ अतएव—

स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः ।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥

इत्यादावपि नानुपपत्तिः ॥

परे तु—अस्याः कल्पितोपमाया उपमानान्तराभावफलकत्वेनालङ्कारान्तरतामाहुः । तन्न—सादृश्यस्य चमत्कारितयोपमान्तर्भावस्यैवोचितत्वात्, सन्निरूपितत्त्वस्य लक्षणे प्रवेशाभावात् । उपमानान्तराभावफलकत्वं ह्युपमाविशेषत्वे साधकं न तूपमाबहिर्भावे इति ॥

**पूर्णा लुप्तेत्यलंकारतत्त्वज्ञैस्सा द्विधोदिता ।**
**उपमानं चोपमेयं धर्मो वाचकमित्यदः ।**
**चतुष्टयमुपात्तं चेत्सा हि पूर्णोपमा मता ॥ ३ ॥**

यथा—

**आनन्दनिलयनामनि विमानधामनि विभासमानं तत् । धाम चिरत्नं रत्नं श्यामलमिव हैमसंपुटे जयति ॥ २६ ॥**

अत्र श्यामलं रत्नं चिरत्नं धाम विभासमानं इवशब्दश्चे-

त्येतेषामुपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामुपादाना-दियं पूर्णोपमा । इदं कुवलयानन्दानुसारेणोदाहरणम् ॥

रसगङ्गाधरानुसारेण तु यथा—

कृपया सुमहाजालाकृष्टान्मीनानिवाहिशैलम-णे । मोचयसि मोहजालाविष्टान्दीनान्कदा नु खल्वेनान् ॥ २७ ॥

अत्र प्रतीयमाना उपमा समग्रवाक्यार्थस्य कदेति शान्त-रसस्य सूचितचिन्तोपस्करणद्वारा उपस्कारकतयाऽलङ्कारः ॥

वर्ण्योपमानयोर्धर्मोपमावाचकयोरपि ।
एकद्विऽयनुपादाने भवेल्लुप्तोपमाऽष्टधा ॥ ४ ॥

वर्ण्यमुपमेयं उपमेयादीनामेकस्य द्वयोस्त्रयाणां वाऽनुपा-दाने लुप्तोपमा । सा चाष्टविधा भवेत् ॥

वाचकस्यात्र धर्मस्य धर्मवाचकयोस्तथा ।
वर्ण्यवाचकयोर्लोपे तत्तल्लुप्ताः खलूपमाः ॥५॥
उपमानस्य लोपे तु तल्लुप्ता पञ्चमी स्मृता ।
प्रोक्ता षष्ठी वाचकोपमानलुप्तेति कोविदैः ॥ ६ ॥
धर्मोपमानलुप्ताऽन्या लोपे धर्मोपमानयोः ।
अष्टमी धर्मोपमानवाचकानां विलोपने ॥ ७ ॥

तामेव विभजते—अत्र वाचकादीनां लोपे तत्तल्लुप्ताः । तथाहि—१. वाचकलुप्ता । २. धर्मलुप्ता । ३. धर्मवाचकलुप्ता ।

४. उपमेयवाचकलुप्ता । एवमुपमानलोपरहिताश्चत्वारो भेदाः । ५. उपमानलुप्ता । ६. वाचकोपमानलुप्ता । ७. धर्मोपमानलुप्ता । ८. धर्मोपमानवाचकलुप्ता । एवमुपमानलोपसहिताश्चत्वारो भेदाः इति लुप्तोपमा अष्टविधाः ॥

तत्र वाचकलुप्ता यथा—

चन्दिररुचिरनिटालं सुन्दरतरवार्षिकाम्बुदविनीलम् । मन्दरधरमहिगिरिपतिकन्दरधामास्तु नाम हृदि धाम ॥ २८ ॥

अत्र चन्दिररुचिरनिटालं सुन्दरतरवार्षिकाम्बुदविनीलमित्युभयत्रापि वाचकलोपः चन्दिर इव रुचिरं वार्षिकाम्बुदमिव विनीलमित्यर्थे 'उपमानानि सामान्यवचनैः' इति समासविधायकशास्त्रनिबन्धनः ॥

धर्मलुप्ता यथा—

शरदिन्दुसदृशवदनं स्फुरदिन्दिरमहिगिरीन्द्रकृतसदनम् । कुन्दसुमोपमरदनं बृन्दं महसां धुनोतु भयकदनम् ॥ २९ ॥

भयकदनं भवभयसंमर्दं 'कदनं मर्दने पापे' इति विश्वः । अत्र शरदिन्दुसदृशवदनं कुन्दसुमोपमरदनमित्युभयत्रापि धर्मलोपः । स त्वैच्छिकः न तु शास्त्रविहितः, आह्लादनादिना शरदिन्दुसदृशवदनमित्यादेरपि सुवचत्वात् ॥

यथा वा—

कुसुमसमे लावण्ये सरिज्झरीवेगसदृशि तारुण्ये । आयुषि तृणानलनिभे फणाभृदद्रीश नैव विश्वसिमः ॥ ३० ॥

अत्र क्षिप्रम्लानत्वमेकथाऽनवस्थानं सद्योनिर्वाणत्वं च समानधर्मा अनुपात्ताः ॥

धर्मवाचकलुप्ता यथा—

चन्दनगिरिकन्दरचरसुन्दरतरगन्धवाहशावन्ती। भिन्तामपाङ्गरेखा सन्तापं दन्दशूकगिरिनेतुः ॥३१

अत्र गन्धवाहशावन्तीत्यत्र धर्मवाचकलुप्ता । गन्धवाहशाव इवाचरन्तीत्यर्थे विहितस्य गन्धवाहशावचदानन्दनात्मकाचारार्थकस्य क्विपः इवशब्देन समं लोपात् । अत्र धर्मलोप ऐच्छिकः आनन्ददायितया गन्धवाहशावन्तीति तदुपादानस्यापि सम्भवात् । भिन्तां भिनत्तु । भिदेः रौधादिकस्य स्वरितेत्त्वात्तङि लोट् ॥ ३१ ॥

उपमेयवाचकलुप्ता यथा—

मुनिमनसामपि दूरे स्वकृतविहारेऽलमुपनिषत्सारे । परमपदीयति विभवैः परमे न रमेत फणिगिरौ को वा ॥ ३२ ॥

उपनिषत्सारत्वेनाध्यवसिते श्रीनिवासे स्वकृतविहारे सति—
मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम् ।
स्वामिपुष्करिणीतीरे रमया सह मोदते ॥

इत्युक्तप्रकारेण स्वस्मिन्विहरमाणे सतीत्यर्थः । परमपदीयतीत्यत्र वाचकोपमेयलोपः आत्मानमित्युपमेयस्योपमावाचकेन सहानुपादानात् । नच—'उपमानादाचारे' इत्युपमानादाचारार्थे क्यचो विधानात्परमपदमिवाचरतीत्यर्थावगमेऽप्यात्मानमित्यस्य कथं निर्णयः अन्यस्यापि तत्सम्भवादिति वाच्यम् । परमपदानुरूपाचरणस्य विभवकरणकत्वरूपविशेषणसामर्थ्येन तदवगमात्, तथाविधाचरणे विभवानां स्वारसिकतया स्वकीयत्वावगतेः । अयं च लोप ऐच्छिकः, स्वात्मानं परमपदीयतीत्युपमेयोपादानस्यापि सम्भवात् ॥ ३२ ॥

उपमानलुप्ता वाचकोपमानलुप्ता च यथा—

**द्विरदसमालसगमनं सुरगिरिगुरुधैर्यमखिलभयशमनम् । हरिमीडे रिपुदमनं द्विरसनगिरिसदनमिन्दिराकमनम् ॥ ३३ ॥**

अत्राद्ये पादे द्विरदसमालसगमनमित्यत्र द्विरदगमनस्योपमानस्यानुपादानादुपमानलुप्ता । द्वितीयपादे सुरगिरिगुरुधैर्यमित्यत्र वाचकस्य इवादेस्सुरगिरिधैर्यस्योपमानस्य चानुपादानाद्वाचकोपमानलुप्ता ॥

धर्मोपमानलुप्ता धर्मोपमानवाचकलुप्ता च यथा—

**जलनिधिनिभगाम्भीर्यं कलये हृदि कल्पका-**

गमौदार्यम् । निखिलयितशेषाहार्यं जलधिसुताचि-
त्तहारि सौन्दर्यम् ॥ ३४ ॥

सौन्दर्यमेतदिदं भिन्नं पदं, तत्त्वेनाध्यवसितो भगवान् श्रीनिवास इत्यर्थः । अत्र जलनिधिनिभगाम्भीर्यमित्यत्र निरवधिकत्वादेस्साधारणधर्मस्य जलनिधेगाम्भीर्यस्योपमानस्य चानुपादानाद्धर्मोपमानलुप्ता । कल्पकागमस्यौदार्यमिवौदार्यं यस्य तदितिविग्रहे निरवशेषाभीष्टार्थपरिपूरणादेर्धर्मस्य कल्पकागमौदार्यस्योपमानस्य इवादेर्वाचकस्य चानुपादानाद्धर्मोपमानवाचकलुप्ता । अन्यदग्रे वक्ष्यते ॥

एवं कुवलयानन्दप्रकारेणोपमोदिता ।
प्राचां मते विभागोऽस्या उपमायाः प्रपञ्च्यते ॥
पूर्णा लुप्तेति भेदेन द्विविधा सा तयोः पुनः ।
श्रौत्यार्थीति द्विधा पूर्णा वाक्यगा च समासगा ।
तद्धितस्थेति च त्रेधा ते द्वे स्यातां पृथक्पृथक् ॥८

प्राचीनानामालंकारिकाणां मते उपमा पूर्णा लुप्तेति द्विविधा । तयोर्मध्ये पूर्णा श्रौती आर्थीति द्विविधा ते श्रौत्यार्थ्यौ द्वे अपि पृथक्पृथक् वाक्यगा समासगा तद्धितगेति त्रेधा स्यातामिति पूर्णोपमा षड्विधा भवतीत्यर्थः ॥

यथेववादिशब्दानां साक्षात्सादृश्यवाचिनाम् ।
उपादाने भवेच्छ्रौतीत्याहुश्शास्त्रविचक्षणाः ॥ ९ ॥

ये धर्म्यव्यवधानेन सादृश्यप्रतिपादकाः ।
सदृङ्निभादिशब्दानां तेषामार्थी प्रयोगतः ॥ १० ॥

श्रौतीमार्थीं च लक्षयति यथेत्यादिना—साक्षात्सादृश्यप्रतिपादकयथेवादिशब्दानां प्रयोगे श्रौती श्रुत्या सादृश्यप्रतिपादनात् । वादीत्यादिशब्देन 'तत्र तस्येव' इति विहितवतेर्ग्रहणम् । तस्य इवार्थे विहितत्वात् । सादृश्यविशिष्टधर्मिपर्यन्ततुल्यसदृशसदृङ्निभसङ्काशादिशब्दानां प्रयोगे आर्थी, अर्थसिद्धत्वात् । निभादीत्यादिशब्देन 'तेन तुल्यं' इति विहितवतेर्ग्रहणम् । तस्य तुल्यार्थे विहितत्वात् । यद्यपि यथेववादिपदानि यस्माच्चन्द्रादिपदात्पराणि प्रयुज्यन्ते, तानि तदर्थस्य चन्द्रादेरुपमानत्वप्रतीतेरुपमानविशेषणानि सन्ति स्वसमभिव्याहृतपदार्थस्योपमानत्वप्रतीतिप्रयोजकानि । न तु मुखादेरुपमेयत्वप्रतीतिप्रयोजकानि । तथाऽपि यथा राज्ञः पुरुष इत्यत्र षष्ठ्यास्स्वसमभिव्याहृतप्रातिपदिकार्थे राज्ञः स्वार्थभूतसम्बन्धप्रतियोगित्वप्रतीतिप्रयोजकत्वेऽपि पुरुषपदसमभिव्याहारे सति व्युत्पत्तिमहिम्ना तदनुयोगित्वप्रतीतिरपि तथा मुखादिसमभिव्याहारे मुखाद्यनुयोगित्वप्रतीतिरपि सम्भवति । एतेन पद्ममिव मुखमित्यत्र पद्मसादृश्यं मुखमिति प्रतीतिस्स्यात्, न तु पद्मसदृशं मुखमिति परास्तम् । यथा राज्ञः पुरुष इत्यत्र प्रकृतिप्रत्ययपुरुषपदैः राजा संबन्धः पुरुष इति प्रतीतावपि समभिव्याहारवशाद्राजसम्बन्धी पुरुष इति प्रतीतिः, तथैव व्युत्पत्तेः । एवमत्रापि विशिष्टप्रतीत्युपपत्तिरित्याहुः प्राञ्चः ।

वस्तुतस्तु—इवार्थस्सादृश्यमेव । तच्च नोपमानस्य चन्द्रादेर्विशेषणम् । किं तु उपमानभूतश्चन्द्रादिरेव सादृश्ये प्रतियोगि-

तासम्बन्धेन विशेषणम्। चन्द्रादिविशेषितं च सादृश्यं मुखादावनुयोगितासम्बन्धेनान्वेति। चन्द्रप्रतियोगिकसादृश्यानुयोगिमुखमित्याकारकश्चन्द्र इव मुखमित्यादौ बोध इति बोध्यम्॥

तत्र श्रौती त्रिविधा यथा—

**गगनं यथा फणीश्वरनगपतिहृदयं विनीलमुज्ज्वलति। तारावळिरिव हारावळिरार्द्रावच्च कौस्तुभे शोभा (कौस्तुभस्य श्रीः)॥ ३५॥**

अत्र गगनं यथेत्यादिविनीलमित्यन्ते श्रौती वाक्ये पूर्णा यथेत्यसमस्तस्य वाचकस्य गगनमित्युपमानस्य फणीश्वरनगपतिहृदयमित्युपमेयस्य विनीलमिति साधारणधर्मस्य चोपादानात्। तारावळिरिव हारावळिरित्यत्र समासे श्रौती पूर्णा। 'इवेन सह समासो विभक्त्यलोपश्च' इति इवशब्दयोगे समासस्य विभक्त्यलोपस्य च स्मरणात्। वाचकादीनां चतुर्णामुपादानाच्च। आर्द्रावत्कौस्तुभे शोभेत्यत्र तद्धिते श्रौती पूर्णा। सप्तमीसमर्थाद्वतेः 'तत्र तस्येव' इति सूत्रेण इवार्थविहितवतेर्वाचकस्य उपमादीनां त्रयाणां चोपादानात् आर्द्रायामिव आर्द्रावदिति विग्रहः। कौस्तुभस्य श्रीरिति पाठे आर्द्राया इवेति विग्रहः षष्ठीसमर्थादप्युक्तसूत्रेणैव वतेर्विधानात्॥ ३५॥

आर्थी त्रिविधा, पूर्णा यथा—

**शशधरबिम्बेन समो विशदतया कुन्दबृन्दसङ्काशः। धवळसरोरुहवदयं प्रविलसति करोदरे हरेश्शङ्खः॥ ३६॥**

शशधरबिम्बेन समो विशदतयेत्यत्रार्थी पूर्णा वाक्ये । विशदतयेत्येतत्सर्वत्रान्वेति । कुन्दबृन्दसङ्काश इत्यत्रार्थी समासे पूर्णा । धवळसरोरुहवदित्यत्रार्थी तद्धिते पूर्णा 'तेन तुल्यं क्रिया चेद्वतिः' इति तुल्यार्थविहितस्य तद्धितस्य वतिप्रत्ययस्योपादानात् । एवं षड्विधाऽपि पूर्णा संक्षेपत उदाहृता ॥

अथ लुप्तास्सामान्यतो विभजते—

**त्रिविधा स्यादेकलुप्ता द्विलुप्ता तु चतुर्विधा ।**
**एकरूपा त्रिलुप्तेति लुप्ता सामान्यतोऽष्टधा ॥११॥**
**धर्मस्याथोपमानस्य वाचकस्य विलोपने ।**
**त्रिविधा स्यादेकलुप्ता द्विलुप्ता तु चतुर्विधा ॥१२॥**
**धर्मवाचकयोर्लोपे तथा धर्मोपमानयोः ।**
**वर्ण्यवाचकयोस्तद्वद्वाचकावर्ण्ययोरपि ॥ १३ ॥**
**त्रिलुप्ता त्वेकधा धर्मवाचकावर्ण्यलोपतः ॥**

धर्मलुप्ता, उपमानलुप्ता, वाचकलुप्ता चेति त्रिविधा एकलुप्ता । द्विलुप्ता तु—धर्मवाचकलुप्ता, धर्मोपमानलुप्ता, उपमेयवाचकलुप्ता, वाचकोपमानलुप्ता चेति चतुर्विधा । त्रिलुप्ता तु—धर्मवाचकोपमानलुप्तेत्येकविधेति सामान्यतो लुप्ताऽष्टविधा ॥

यथा—

**त्वं निधिरिव तव सदृशो नैव विभुर्जलदनील जलजाक्ष । तव सौशील्यमतुल्यं मित्रीयसि नतजनेऽब्धिगाम्भीर्यः ॥ ३७॥**

त्वं निधिरिवेत्यत्र भोग्यत्वादिधर्मानुपादानाद्धर्मलुप्ता ॥१॥ तव सदृशो विभुर्नैवेत्युपमानस्य सामान्यतो निषेधादुपमानलुप्ता॥२॥ जलदनीलेत्यत्र जलद इवेति वाचकानुपादानाद्वाचकलुप्ता ॥३॥ जलजाक्षेत्यत्र जलजे इवाक्षिणी यस्येति प्रसन्नतादेर्धर्मस्य वाचकस्य चानुपादानाद्धर्मवाचकलुप्ता ॥४॥ तव सौशील्यमतुल्यमित्यत्र लोकोत्तरत्वादेर्धर्मस्य अतुल्यमिति निषेधेनोपमानस्य चानुपादानाद्धर्मोपमानलुप्ता ॥५॥ मित्रीयसि नतजने इत्यत्र मित्रमिवात्मानमाचरसीत्युपमेयभूतस्यात्मनो वाचकस्य चानुपादानादुपमेयवाचकलुप्ता ॥६॥ वाचकोपमानलुप्ता त्वग्रे उदाहरिष्यते ॥ अब्धिगाम्भीर्यं इत्यत्र अब्धेर्गाम्भीर्यमिव गाम्भीर्यमित्यस्मिन्नर्थे उपमानस्य वाचकस्य धर्मस्याप्यनुक्तेर्धर्मवाचकोपमानलुप्ता ॥७॥ इति सामान्यतस्सप्त लुप्तोदाहरणानि संगृहीतानि॥

**क्रमेण धर्मलुप्तादेर्विभागोऽथ प्रदर्श्यते ॥१४॥**

**पूर्णावद्धर्मलुप्ताऽपि श्रौत्यार्थीति द्विधा भवेत् ॥**
**तत्र श्रौती तद्धिते तु न स्यादन्वयहानतः ॥१५॥**

शुद्धधर्मलुप्ता पूर्णावदेव श्रौती आर्थी चेति द्विधा भवेत्। वाक्य समासे तद्धिते च भवेत् । तत्र श्रौती धर्मलुप्ता तु तद्धिते न सम्भवेत् षष्ठीसमर्थात्सप्तमीसमर्थाद्वा विहितस्य वतेर्धर्मोपादानं विनाऽन्वयसौकर्याभावात् न हि भवति मधुरावत्पाटलिपुत्रे पाटलिपुत्रस्य वेत्यत्र प्राकार इति धर्मोपादानं विनाऽन्वयसौकर्यम्। तद्धिताधिकारविहितकल्पब्देश्यादिप्रयोगेऽपि कृष्णकल्पः कृष्णदेश्य इत्यादौ धर्मिसामानाधिकरण्यप्रतीतेरार्थ्येवेति श्रौत्या धर्मलुप्ताया असंभवात्सा पञ्चविधैव ॥

ननु—'इवे प्रतिकृतौ' इत्यधिकारे इवार्थविहितच्छादिप्रत्ययान्तानां 'कुशाग्रीया बुद्धिः, शैलेयं दधि' इत्यादीनां पदानां प्रयोगे धर्मोपादानं विना नैराकाङ्क्ष्यसद्भावात्संभवति श्रौती धर्मलुप्ताऽपीति चेन्न । 'इवे प्रतिकृतौ' इत्यधिकारविहितानां प्रत्ययानां तुल्यार्थ एव विधानाभ्युपगमावश्यंभावात् । अन्यथा तेषां सादृश्यविशिष्टधर्मिपर्यन्तत्वाभावेन कुशाग्रीया बुद्धिरित्याद्युपमेयसामानाधिकरण्यासम्भवात्सादृश्यविधानमपि सदृशे पर्यवस्यतीति सूत्रे इवग्रहणं न विरुध्यत इति वदन्ति ॥

श्रौती धर्मलुप्ता वाक्ये यथा—

जलदो यथा तथा त्वं नाकिन इह केकिनो यथैव तथा । जलधिर्यथा तथा त्वं नरा ननु सरिज्झरा यथैव तथा ॥ ३८ ॥

अत्र हे भगवन्निति सम्बुद्धिस्सामर्थ्याल्लभ्यते । जलदो यथा केकिनो यथेत्यादौ यथेत्यसमस्ततया निर्देशाद्वाक्ये श्रौती धर्मलुप्ता, यथाक्रममानन्दावहत्वादेरुल्लासित्वादेश्च । एवं जलधिर्यथेत्यादौ प्राप्यत्वादेः नरा इवेत्यादौ तत्प्रवणत्वादेश्च साधारणधर्मस्यानुपादानात् ॥

श्रौती धर्मलुप्ता समासे यथा—

चिन्तामणिधरणीभृति रन्तारं भुवि जगन्नियन्तारम् । चिन्तामणिमिव मनुजास्त्वां तावत्संश्रिता हरे सर्वे ॥ ३९ ॥

अत्राभीप्सितदातृत्वादिधर्मानुपादानात् चिन्तामणिमिवेति समासे श्रौती धर्मलुप्ता। तद्धिते त्वियं न सम्भवतीत्यवोचाम। चिन्तामणिधरणीभृदिति वेङ्कटाद्रेरेव नामान्तरम्। तथा चोच्यते वामनपुराणे—

चिन्तितस्य तु सिद्ध्यर्थमिमं चिन्तामणिगिरिं विदुः ॥ इति ॥
ब्रह्माण्डपुराणान्तर्गते वेङ्कटाद्रिमाहात्म्ये च--

श्रीवेङ्कटगिरिर्नाम क्षेत्रं पुण्यं महीतले। इत्युपक्रम्य—
अञ्जनाद्रिर्वृषाद्रिश्च वेदाद्रिर्गरुडाचलः।
तीर्थाद्रिश्श्रीनिवासाद्रिश्चिन्तामणिगिरिस्तथा।
वृषभाद्रिर्वराहाद्रिर्ज्ञानाद्रिः कनकाचलः।
आनन्दाद्रिश्च नीलाद्रिः क्रीडाद्रिः पुष्कराचलः।
सिंहाचलश्च श्रीशैलस्तथा नारायणाचलः॥
वैकुण्ठाद्रिश्शेषशैल इति नामानि विंशतिः ॥ इति ॥

आर्थी धर्मलुप्ता वाक्यसमासतद्धितगा यथा—

**वृषशिखरिशिखरधरणी सदृशी रमणीमणेर्मुरारातिः। मृगमदतिलकनिकाशः पुष्करिणी दर्पणीकल्पा ॥ ४० ॥**

अत्र सदृशी रमणीमणेरिति वाक्यगा, मृगमदतिलकनिकाश इति समासगा, दर्पणीकल्पेति तद्धितगा चार्थी धर्मलुप्ता; रामणीयकश्यामलिमनैर्मल्यादिधर्माणामनुपादानात् ॥

क्वचित्पटुपटुरित्यादौ द्विर्भावेऽपि धर्मलुप्ता दृश्यत इति चित्रमीमांसाकाराः। तदेदमुदाहरणम्—

आभाति मधुरमधुरं स्वर्गादिफलं न जातु त-
न्मधुरम् । फणधरधराधरधुरंधरं भजत तज्जना-
श्रिरं मधुरम् ॥ ४१ ॥

अत्र 'प्रकारे गुणवचनस्य' इति सादृश्ये द्विर्भावविधा-
नाद्यत्स्वभावतोऽमधुरमेवापाततो मधुरवद्भाति तद्वचनोऽयं मधु-
रशब्दो मधुरसदृशे वर्तत इत्यार्थी धर्मलुप्ता । न चैषा वाक्ये
समासे वा, मधुरमधुरमित्येकपदत्वात् ॥

रसगङ्गाधरकारस्तु—पटुपटुरित्यादौ वाचकस्याप्यनुपादाना-
द्वाचकधर्मलुप्तायामेतदाधिक्यमुद्भावयितुमुचितं, न तु धर्मलुप्तायां,
धर्ममात्रलुप्ताया एव धर्मलुप्ताशब्देन तैर्विवक्षणात् । अन्यथा ए-
कलुप्तात्वेन द्विलुप्तानां त्रिलुप्तायाश्च ग्रहणात्पृथगुपादानमसंबद्ध-
मेव स्यात् । न चात्र वाचकस्य द्विर्भावस्यैव सत्त्वान्नास्ति लोपः
अपि तु धर्ममात्रस्यैवेति शक्यं वक्तुं, द्विर्भावस्य भाष्यकैय-
टादौ सादृश्यद्योतकताया एवाङ्गीकारेण तद्वाचकताया अस-
म्भवादित्यवादीत् ॥

लुप्तोपमाना द्विविधा वाक्यगा च समासगा ॥

लुप्तोपमाना वाक्यगा यथा—

विचिते निखिलेऽपि जगत्युचितं श्रीवेङ्कटाद्रि-
णा सदृशम् । नूनं नोपलभेत स्थानं जातोऽथ
जायमानो वा ॥ ४२ ॥

अत्र सदृशानिषेधादुपमानलुप्ता वाक्ये । अत्र 'वेङ्कटाद्रिसमं

स्थानं ब्रह्माण्डे नास्ति किञ्चन' इति वचनं स्मर्तव्यम् । न चात्रोपमानाभावेन सादृश्याभावस्य पर्यवसानात्सादृश्यपर्यवसानस्य चोपमाजीवितत्वादलङ्कारान्तरमेव नोपमानलुप्तेति वाच्यम् । वेङ्कटाद्रिणा सदृशं स्थानं जातो वा जायमानो वा नोपलभेतेत्युक्त्या जनिष्यमाणेन येन केनचित् किमपि स्थानमेतत्तुल्यमुपलप्स्येतेति सादृश्यपर्यवसानमस्तीत्युपमानलुप्तैवेयमुपमा, नालङ्कारान्तरमिति वक्तुं युक्तत्वात् ॥

उपमानलुप्ता समासगा यथा—

नास्तीह वस्तु धन्यं कस्तूरीसदृशमिति वयं विद्मः । भुजगगिरीशस्य मुखं त्रिजगत्तिलकस्य तिलकितं ह्यनया ॥ ४३ ॥

अत्र सदृशनिषेधादुपमानलुप्ता समासे ॥

वादिलुप्ता समासे स्यात्कर्माधारक्यचोः क्यङि ।
कर्मकर्त्रोर्णमुलि च णिनौ क्विपि च तद्धिते ॥
एवं नवप्रकारैषा ज्ञेया वाचकलोपिनी ॥ १७ ॥

वाचकलुप्तां विभजते—वादिलुप्ता उपमानवाचकवायथेवादिलुप्ता समासे 'उपमानादाचारे' इति विहितकर्मक्यचि, 'अधिकरणाच्च' इति विहिते अधिकरणक्यचि, 'कर्तुः क्यङ्सलोपश्च' इति कर्तृक्यङि, 'उपमाने कर्मणि च' इति कर्मणमुलि, चात्कर्तृणमुलि, 'कर्तर्युपमाने' इति विहिते णिनौ, 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इत्याचारार्थविहिते क्विपि च तद्धिते च भवन्ती नवविधा भवति ॥

अत्र वाचकलुप्ता समासगा यथा—

विदलितवलरिपुमणिवरशकलविनीलं श्रयन्त-
महिशैलम् । वारं वारं हृदये स्मेरं कलयेय कमपि
शृङ्गारम् ॥ ४४ ॥

अत्र शकलविनीलमित्यत्र समासे वाचकलोपः। 'चन्द्रिररुचिरनिटालम्' इति पूर्वमुदाहृतमप्यस्योदाहरणम् ॥

कर्मक्यचि वाचकलुप्ता यथा—

हर्यङ्के विहरन्ती पर्यङ्कीयति तमेतमुत्तुङ्गम् । उ-
पधानीयति कमला तस्य भुजं भुजगभोगसुकु-
मारम् ॥ ४५ ॥

अत्र पर्यङ्कीयति उपधानीयतीत्युभयत्रापि पर्यङ्कमिवाचरति उपधानमिवाचरतीत्यर्थे कर्मक्यचि हर्यङ्कपर्यङ्कयोः भुजोपधानयोश्च उत्तुङ्गं भुजगभोगसुकुमारमिति साधारणो धर्मः। पर्यङ्कीयतीत्यादौ 'उपमानादाचारे' इति कर्मणस्सुबन्तादाचारार्थे क्यचि 'क्यचि च' इत्यकारस्य ईत्वम्। हर्यङ्के पर्यङ्कमिवाचरतीत्यत्र वाक्ये प्रक्रान्तं कर्मद्वयं, तत्रोपमानकर्मणोऽन्तर्भूतत्वात्तदपेक्षयाऽसावकर्मको धातुः। तदुक्तं—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मका क्रिया ॥

इति। अन्यकर्मापेक्षया तु सकर्मक एव। यदाह भगवान् भाष्यकारः—'द्वे ह्यत्र कर्माणी उपमानकर्मोपमेयकर्म चेति। उप-

मानकर्मान्तर्भूतं उपमेयकर्मणा सकर्मको भवति ' इति। एवमन्यत्रापि द्रष्टव्यम् ॥

यथा वा—

इन्द्रीयन्ति दृशस्ते स्पृशन्ति यांस्तान्विशो भृशं विभवैः । चन्द्रीयन्ति दिशस्ते यशःप्रकाशा विशालविशदिम्ना ॥ १६ ॥

इदमपि कर्मक्यचि वाचकलुप्ताया एवोदाहरणम् । इन्द्रीयन्ति चन्द्रीयन्तीत्युभयत्रापि इन्द्रमिवाचरन्ति चन्द्रमिवाचरन्तीत्यर्थे कर्मक्यचि इन्द्रस्य विशां च विभवैरिति साधारणो धर्मः चन्द्रस्य दिशां च विशालविशदिम्नेति साधारणो धर्मः। विशः मनुजानित्यर्थः। 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः। द्वितीयपादे भृश विभवैरित्यत्र 'भृशमुदाराः' इति, चतुर्थचरणस्य 'यशः प्राकाशास्तु काशनीकाशाः' इति 'शेषशैलेन्दोः' इति वा निर्माणे उभयत्रापि धर्मस्याप्यनुपादानाद्धर्मवाचकलुप्ताऽपीयं भविष्यतीति ध्येयम्॥ एवंचात्र धर्मोपादानानुपादाने ऐच्छिके इति ध्येयम्। अस्य पूर्वोदाहरणादयमेव विशेषः॥

अधिकरणक्यचि वाचकलुप्ता यथा—

जलधौ जननगृहीयति जलजे केळीगृहीयति मनोज्ञे। सौधीयति वेङ्कटपतिविशङ्कटोरस्थलेऽमले कमला ॥ १७ ॥

मनोज्ञे इत्येतज्जलधावित्यत्राप्यनुषञ्जनीयम् । अत्र जलधौ जननगृहीयतीत्याद्यधिकरणक्यचि जलधिजननगृहयोः जलजकेळीगृहयोश्च मनोज्ञे इति, भगवद्वक्षस्थलसौधयोः अमले इति च साधारणधर्मः । मनोज्ञे इत्यस्य जलधावित्यत्रानन्वये धर्मवाचकलुप्तायास्तदुदाहरणं भविष्यति इतरद्वाचकलुप्तायाः । एवं चात्रापि धर्मोपादानानुपादाने वैवक्षिके एवेति ध्येयम् ॥

कर्तृक्यङि वाचकलुप्ता यथा—

भगवन्भवच्चरित्रं भवतप्तानां विधूयते नृणाम् ।
अदसीयरसज्ञानां तदसीम मधूयते रसज्ञानाम् ॥

अदसीयरसज्ञानां एतद्भगवच्चरित्रसम्बन्धिरसविदां जनानां सम्बन्धसामान्ये षष्ठी रसज्ञानां रसनानां असीम अनवधिकं तच्चरित्रं मधूयते इत्यन्वयः । अत्र विधुरिवाचरति मध्विवाचरतीत्यर्थे विधूयते मधूयत इति क्यङि भगवच्चरित्रस्य विधुमधुनोश्च आचारस्साधारणो धर्मः, स चोपात्तः । आचारमात्रार्थकतया क्यच्क्यङोः प्रकृत्यैव लक्षणया स्वस्वार्थसादृश्यप्रतिपत्तिरितिनये सादृश्यवाचकाभावाद्वाचकलुप्ता । पर्यङ्कीयतीत्यादिसमुदायस्यैव पर्यङ्कादिसादृश्यप्रयोजकाचरणकर्तृशक्तत्वमितिनयेऽपि सादृश्यसादृश्यविशिष्टान्यतरमात्रवाचकाभावाद्वाचकलुप्ता ॥

यथावा—

राधायन्ते भामाः कामाधिकरूप तव विलोकनतः ।
वेधायन्ते पुरुषाः पुरुषोत्तम वृषगिरीश तत एव ॥

तत एव विलोकनत एवेत्यर्थः । आदौ कर्मणि षष्ठी । ततः

कर्तरीति विशेषः । अत्रापि राधेवाचरन्ति वेधा इवाचरन्तीत्यर्थे राधायन्ते वेधायन्ते इति क्यङि भामापुरुषयोराचारस्साधारणो धर्मः । कामाधिकरूपेति सम्बुद्धिर्भामानां राधावदाचरणौपयिकी, पुरुषोत्तमेत्येतत्तु पुरुषाणां वेधोवदाचरणौपयिकी । वेधायन्त इत्यत्र 'कर्तुः क्यङ् सलोपश्च' इति क्यङस्सलोपो विशेषः। इदं तु आचारस्य साधारणधर्मतामभ्युपयतां प्राचां मते उदाहरणद्वयम् । ये तु क्यजाद्यर्थ आचारो न साधारणो धर्मः धर्ममात्ररूपस्याचारस्य उपमाप्रयोजकत्वाभावात् 'नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य ललितानि सपत्नसेना' इत्यादौ वृत्त्यन्तरनिवेदितैः कातरत्वादिभिरभिन्नतयाऽध्यवसितस्याचारस्योपमानिष्पादकत्वात् । यदि च क्यजाद्यर्थ आचारमात्रमुपमानिष्पादकस्स्यात् तदा 'त्रिविष्टपं तत्खलु भारतायते' इत्यादौ सामान्येनाचारोपस्थितावप्युपमालङ्कृतेरनिष्पत्तिः तस्यैव 'सुपर्वभिश्शोभितमन्तराश्रितैः' इति चरणान्तरनिर्माणे तस्या निष्पत्तिश्च न स्यात् तस्मात् क्यजाद्यर्थस्साधारणोऽपि नोपमां प्रयोजयति उपमाप्रयोजकतावच्छेदकरूपेण साधारणधर्मवाचकशून्यत्वस्यैव धर्मलोपशब्देनाभिधानात्, अन्यथा 'मुखरूपमिदं वस्तु प्रफुल्लमिव पङ्कजम्' इत्यादौ पूर्णोपमापत्तेरित्याचारमात्रस्य साधारणधर्मतां नाभ्युपगच्छन्ति, तेषां मते तु नेदं वाचकमात्रलुप्ताया उदाहरणं भवितुमर्हति धर्मस्यापि लुप्तत्वात् । किन्त्वन्यदेव ॥

यथा—

**त्रिभुवनलोभनविभवं विभुमहिशैले भवन्तमाभान्तम् । अनिमेषमीक्षमाणास्सनिमेषा अपि नरास्सुरायन्ते ॥ ५० ॥**

अत्र सुरनरयोरनिमेषेक्षणं साधारणो धर्म उक्त इति कर्तृक्यङि वाचकमात्रस्य लोप इति बोध्यम् ॥

कर्मकर्तृणमुलोर्वाचकलुप्ता यथा—

**गर्भनिधायंनिदधद्गर्भे भुवनान्यनन्यशरणानि ।**
**जननीरक्षंरक्षसि घननीरदनील नीरजाक्ष त्वम् ॥**

अत्र गर्भानिव निदधदित्यर्थे गर्भनिधायमिति कर्मणमुलि गर्भाणां भुवनानां च निधानमनन्यशरणत्वं च साधारणो धर्मः 'गर्भे भुवनानि युगविगमसमये' इति द्वितीयपादे पठितेऽपि निधानं साधारणो धर्मः । जननीव रक्षसीत्यर्थे जननीरक्षमिति कर्तृणमुलि रक्षसीति भगवज्जनन्योस्साधारणो धर्मः 'उपमाने कर्मणि च' इति णमुलि 'कषादिषु यथाविध्यनुप्रयोगः' इति णमुल्प्रकृतेर्धातोरनुप्रयोगः ॥

णिनौ वाचकलुप्ता यथा—

**मदमधुरद्विपगामी कामी कस्यांचिदम्बुधिविभूतौ ।**
**मदकलहंसालापी कोपीहापीनदोश्श्रियं दत्ताम् ॥**

कस्यांचिदम्बुधिविभूतौ अम्बुधिविभूतित्वेनाध्यवसितायां लक्ष्म्यामित्यर्थः । कामी कामुको भगवान् मदकलहंसालापी 'मत्तहंसस्वरो युवा' इति श्रीरामायणोक्तेः । आपीनाः अतिमात्रपीवराः दोषः भुजाः यस्य तथोक्तः । अत्र द्विपगामी हंसालापीत्युभयत्रापि द्विप इव गच्छति हंस इवालपतीत्यर्थे 'कर्तर्युपमाने' इति विहितणिनौ वाचकलुप्ता । गमनं आलपनं च समानधर्मः । केचित्तु—कोकिलालापिनीत्यादिस्थले 'उप-

पदमतिङ्' इति समासस्य सद्भावेन समासगणनयैवैतस्यापि क्रोडीकाराद्वाचकलुप्ताविभागे णिनेः पृथग्ग्रहणं नाद्रियन्ते ॥५२॥

किपि वाचकलुप्ता यथा—

**अळिवाळति हरिनीळति घनजाळति सन्ततं तमाळति च। नीला तव रुचिमाला नीलाचलमौलिविहृतिलोलात्मन् ॥५३॥**

नीलाचल इति वेङ्कटाद्रेरेव नामान्तरम्—

नीलस्य वानरेन्द्रस्य यस्मान्नित्यमवस्थितिः।

तस्मान्नीलाचलं नाम्ना वदन्त्येनं महर्षयः ॥

इति वाराहीयवेङ्कटाचलमाहात्म्योक्तेः। अत्र अळिवालतीत्यादौ अळिवाल इवाचरतीत्यर्थे किपि नीलत्वं भगवद्रुचिमालायास्तेषां च साधारणो धर्मः। आत्मन्निति पृथक्पदं परमात्मन्निति भगवतस्सम्बोधनम् ॥

तद्धिते वाचकलुप्ता यथा—

**वेङ्कटपतिपदपङ्कजकिङ्करतायां न जातु यस्य रुचिः। दुर्विषयेष्वेव सदा वर्वर्ति नरोऽशुचिः खरकुटी सः ॥ ५४ ॥**

खरकुटी खरनिवासक्षुद्रतमस्थानविशेषः। अत्र खरकुटीव पुरुष इत्यस्मिन्नर्थे 'इवे प्रतिकृतौ' इति विहितस्य कनः 'लुम्मनुष्ये' इति मनुष्यार्थे लुब्विधानात् खरकुटीत्यत्र वाचकलोपस्तद्धिते। 'लुपि युक्तवद्व्यक्तिवचने' इति युक्तवद्भावेन प्रकृतिलिङ्गता। अशुचित्वं साधारणो धर्मः। 'वर्वर्ति स एव खरकुटी-

मनुजः' इति चतुर्थचरणनिर्माणे तदनुपादानेन धर्मवाचकलोपश्चात्र संभवति । 'लुम्मनुष्ये' इति सूत्रे चञ्चेतिवत् खरकुटीत्यप्युदाहृतं काशिकादौ ॥

## धर्मवाचकलुप्ता तु वर्णिता क्विप्समासयोः ॥१८॥

यथा—

हृदये तव माऽलासीत्तदपाङ्गालिस्तु परममालासीत् । त्वं पितरसि मातरसि भ्रातरसि च देवपुङ्गव नतानाम् ॥ ५५ ॥

तव हृदये वक्षसि मा लक्ष्मीः अलासीत् अराजीत् तस्याः अपाङ्गालिः कटाक्षरेखा तु परं अतिशयितं यथातथा अमालासीत् मालेवाचारीत् मालातुल्याऽभूदित्यर्थः । मालाशब्दादाचारार्थे क्विपि लुङि सिचि 'यमरमनमातां सक्' इति इट्सकौ ॥ पितेवाचरसि पितरसि । एवमन्यदपि । अत्र 'माता पिता भ्राता' इत्यादिश्रुतिरनुसंहिता ॥ अत्र मालेवाचारीत् पितेवाचरसीत्याद्यर्थे अमालासीत् पितरसीत्यादौ मालादिशब्दाः क्वौ लुप्ते धातवः । तत्र मालादिशब्दाः लक्षणया मालादिसादृश्यं बोधयन्ति । लुप्तोपि स्मृतः क्विबाचारं बोधयतीति पक्षे वाचकधर्मलोपस्स्पष्ट एव । मालादिशब्दा एव लक्षणया सादृश्याभिन्नमाचारं बोधयन्तीति पक्षेऽपि सादृश्यस्येव धर्मस्यापि तन्मात्रबोधकाभावाल्लोप एवेति वदन्ति । देवः पुङ्गव इवेति समासे वाचकलोपस्साधारणधर्माप्रयोगश्चेति धर्मवाचकलुप्ता । इयं च कर्माधिकरणक्यचोः खरकुटीत्यत्र तद्धितेऽपि धर्माप्रयोगे सम्भवतीत्यवोचाम ॥

**धर्मोपमानलुप्ता तु वाक्ये वृत्तौ च तद्धिते ॥**

वृत्तौ समासे इत्यर्थः ॥

वाक्ये धर्मोपमानलुप्ता यथा—

**येन समानः कश्चन मानवलोके क्वाऽपि न लुलोके । तेन मयाऽपि दयाब्धे श्रीनिलय प्रार्थ्यसेऽपवर्गमहो ॥ ५६ ॥**

अत्र येन मया समानो मानवलोके न लुलोके इति विशिष्योपमानानुपादानाद्धर्मानुपादानाच्च वाक्ये धर्मोपमानलुप्ता ॥

समासे धर्मोपमानलुप्ता यथा—

**क्वापि सुदर्शनसदृशो नादर्शि न दृश्यते न च द्रष्टा । येन पुरा वनमाली मालिशिरस्तत्सुमालिवदलावीत् ॥ ५७ ॥**

अत्र क्वापि सुदर्शनसदृशो नादर्शीत्यादिना उपमानस्य समासगतस्य निषेधात्समासगा धर्मोपमानलुप्ता । द्रष्टेति कर्मणि लुट् । तत् दुश्छेदतया प्रसिद्धं मालिनः तन्नाम्नोऽसुरस्य शिरः । सुमालिवत् सुमानां कुसुमानां आळिवत् पङ्क्तिवत् सुमालिनामासुरशिरोवत् इत्यपि प्रतीयते । अलावीत् अच्छिनत् । अनयोश्च नोपमानस्वरूपमेव प्रतिषिध्यते । किन्तूपमानदर्शनमिति नानन्वयालङ्कृतिभ्रमः कार्यः । नापि वक्ष्यमाणचतुर्थप्रतीपशङ्का युक्ता, तस्य वर्ण्येनान्यस्योपमाया अनिष्पत्तौ चमत्कारितया उपमानदर्शननिषेधेन चमत्कारिणोऽस्माद्विलक्षण्यादिति दिक् ॥

तद्धिते धर्मोपमानलुप्ता यथा—

मुचुकुन्दस्य गुहायां यदिह मुकुन्देन मेळनं यदपि । वरलाभोऽस्यामुष्मान्मन्येऽन्धकवर्तकीयमेतदिति ॥५८॥

अन्धकवर्तकीयमित्येतत् काकताळीयशब्दतुल्यतया 'समासाच्च तद्विषयात्' इति सूत्रे काशिकायामुदाहृतम् । वर्तको नाम कश्चित्पक्षिविशेषः 'तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः' इत्युपक्रम्य 'वर्तको वर्तिकादयः' इति खगविशेषवाचिषु नामलिङ्गानुशासनात् । अत्र तद्धिते धर्मोपमानलुप्ता । तथा हि—अन्धकवर्तकीयमित्यत्र समासविषये अन्धकवर्तकशब्दौ तत्समवेतक्रियावार्तिनौ । ततश्च अन्धकावस्थानमिव वर्तकागमनमिवेतीवार्थे 'समासाच्च तद्विषयात्' इति ज्ञापकात्समासः । 'सुप्सुपा' इति वा । उभयत्रोपमेयं क्रमेण मुचुकुन्दस्य गुहायां कचिदवस्थानं तत्रैव मुकुन्दस्य गमनं च । तेन मुचुकुन्दस्य मुकुन्दस्य च समागमः अन्धकवर्तकसमागमसदृश इति पर्यवस्यति । ततः पुनरन्धकवर्तकमिव अन्धकवर्तकीयमिति द्वितीयस्मिन्निवार्थे 'समासाच्च तद्विषयात्' इति सूत्रेण 'इवे प्रतिकृतौ' इत्यधिकारस्थेन छप्रत्ययः । ततश्च—अकस्मादागतो वर्तको यथा निरुद्यमेनान्धकेनासादितः तथा यदृच्छयागतो मुकुन्दो निश्चेष्टतया निद्राणेन मुचुकुन्देनासादित इति निष्पद्यते । तथाचात्र प्रत्ययार्थोपमायां अन्धककृतवर्तकोपादानरूपस्योपमानस्य साधारणधर्मस्य चानुपादानाद्धर्मोपमानलोपः । धर्मलोपस्त्वैच्छिकः ।

अत्र—

यन्मेळनं गुहायां मुकुन्दमुचुकुन्दयोर्यदस्यास्मात् ।
वरलाभो यादृच्छिकमासान्धकवर्तकीयमेवेदम् ॥

इति पद्यस्य प्रकारान्तरेण निर्माणे तु यादृच्छिकत्वरूपधर्मोपादानात्प्रत्ययार्थोपमायां केवलोपमानलोपस्यापि तद्धिते इदमेवोदाहरणं भविष्यति । अन्धकावस्थानमिव वर्तकागमनमिवेति समासार्थोपमायां तु मुचुकुन्दावस्थानमुकुन्दागमनमेळनोपमानभूतस्यान्धकावस्थानवर्तकागमनसमागमस्यानुपादानादुपमानलोपः । तथा समासवशाद्वाचकलोपः धर्मानुपादानाद्धर्मलोपश्चेति धर्मवाचकोपमानलोपस्यापीदमेवोदाहरणं भविष्यतीत्यवहितचित्तैरन्तेवासिभिरनुसन्धेयम् ॥

**क्वचिल्लुप्ता वाचकोपमेयाभ्यामपि संमता ॥ १९**

यथा—

**श्रीवासीयति सर्वोऽप्यावासं प्राप्य तस्य वृषशैले । अतसीसुमसमतद्रुचिकृतसीमातीतकालिमा कामम् ॥ ५९ ॥**

सर्वोऽपि जनः वृषशैले तस्य श्रीनिवासस्य आवासं दिव्यालयं प्राप्य प्रविश्य कामं यथेप्सितं अतसीसुमसमया तस्य श्रीनिवासस्य रुच्या प्रभया कृतस्संपादितः सीमातीतः अनवधिकः कालिमा श्यामता यस्य तथाभूतस्सन् श्रीवासीयति आत्मानं श्रीनिवासमिवाचरति नीलवर्णतया तद्वदाचरतीत्यर्थः। अत्र आत्मानं श्रीनिवासमिवाचरतीति सामर्थ्याद्गम्यमानतया

स्वात्मन उपमेयस्य वाचकस्य च अनुपादानाद्वाचकोपमेयलोपः। इहात्मानमित्यपि सुवचत्वादुपमेयलोप ऐच्छिकः । न चात्र सर्वं इत्युपमेयोपादानमस्तीति कथमुपमेयलोप इति वाच्यम् । कर्मविभक्त्यभावेन सर्वं इत्यस्य श्रीवासीयतीत्यत्रोपमेयसमर्पकत्वाभावात् । न चैतदनुसारेण श्रीवासीयतीत्यत्र श्रीवास इवाचरतीति समानविभक्तिकत्वकल्पनं घटते । कर्तृक्यचोऽननुशासनादिति दिक् ॥

## क्वचित्समास एव स्याद्वाचकावर्ण्यलोपिनी ॥

अवर्ण्यमुपमानम् । वाचकोपमानलुप्ता तु समास एव स्यादित्यर्थः ॥

यथा—

**रहसि व्रजसुन्दर्यास्समागमो यश्च यस्तदुपभोगः । लोलम्बाम्बुरुहीयं तदिदं शौरेर्यदृच्छयोपनतम् ॥६०॥**

लोलम्बाम्बुरुहीयमित्यत्र काकतालीयमित्यत्रेव विग्रहः । तथाहि—लोलम्बाम्बुरुहशब्दौ वृत्तिविषये तद्गतक्रियावर्तिनौ । तेन लोलम्बागमनमिव अम्बुरुहविकसनमिव लोलम्बाम्बुरुहमिति पूर्वोक्तदिशा समासः । उभयत्रोपमेयं क्रमेण शौरेर्यत्रक्वचिन्निश्शलाकप्रदेशे गमनं तत्रैव व्रजसुन्दर्या अवस्थानं च । तेन शौरिव्रजसुन्दरीसमागमो लोलम्बाम्बुरुहसमागमसदृश इति समासार्थोपमायाः पर्यवसानात्तत्र लोलम्बागमनस्याम्बुरुहविकसनस्य च उपमानस्यानुपादानात्समासे वाचकलोपाच्च वाचकोपमानलोपः । यदृच्छयोपनतमिति धर्मोपादानान्न तल्लोपोऽपि ॥

**या धर्मवाचकावर्ण्यलुप्ता सा स्यात्समासगा॥२०**

धर्मवाचकोपमानलुप्ता तु समासगा भवति । अवर्ण्यमुपमानम् ॥

यथा—

**घनविद्युल्लावण्यं विनतसुरासुरनरावळिशरण्यम्। विलसतु किमपि वरेण्यं वृषगिरिपतिहृदयधाम तारुण्यम् ॥ ६१ ॥**

तारुण्यमिति पृथक्पदम् । तारुण्यत्वेनाध्यवसिता श्रीरित्यर्थः। अत्र विद्युतो लावण्यमिव देदीप्यमानं लावण्यं यस्येत्यस्मिन्नर्थेऽनुशिष्टो विद्युल्लावण्यमित्यत्र धर्मोपमानवाचकानां लोपः । सर्वोऽप्ययं लोपः 'सप्तम्युपमान' इति शास्त्रकृतः । अयं च त्रिलोपः—यन्मेळनं गुहायामित्यत्र समासार्थोपमायामपि भवतीत्यवोचाम प्राक् । ततश्च त्रिलोपे धर्मलोपः क्वचिदैच्छिकोऽपि भवतीति द्रष्टव्यम् । नन्वत्र विद्युतो लावण्यमिव देदीप्यमानं लावण्यं यस्येति विग्रहे सति समासे उपमेयभूतलावण्यपदस्यैव लोपः किं न स्यात् तथा च वाचकोपमेयलुप्तैवेयं सम्पद्यतां न तु धर्मवाचकोपमानलुप्तेति चेत् उपमेयलोपेऽपि न त्रिलोपवत्त्वहानिरित्येके ॥

वस्तुतस्तु—'अनेकमन्यपदार्थे' इति सूत्रस्थ 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च' इति भाष्यवार्तिकानुरोधेनोपमानपदस्यैवात्र लोपो युक्तः। तथाहि वार्तिकस्यायमर्थः—सप्तम्युपमानपूर्वपदस्येत्यत्र सप्तमी कण्ठे स्थ इत्याद्येकदेशभूता कण्ठे इत्यादिका सप्तमी उपमानं उष्ट्रमुखादिशब्दघटकं उष्ट्रेत्यादिकं उपमानं

वा पूर्वपदं यस्य तत् सप्तम्युपमानपूर्वपदमिति बहुव्रीहिः। तस्य पदान्तरेण बहुव्रीहिः, उत्तरपदस्य पूर्वसमासचरमावयवभूतस्य स्थ इत्यस्य मुखमित्यस्य च लोपश्च वाच्य इति। तथाच तत्र भाष्यम्। 'सप्तमीपूर्वस्योपमानपूर्वस्य च बहुव्रीहिर्वक्तव्यः। उत्तरपदस्य च लोपो वक्तव्यः। कण्ठेस्थः कालो यस्य कण्ठेकालः उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः' इति। अत्र वार्तिके उपमानशब्देन मुख्योपमानभूतस्य उष्ट्रमुखस्याश्रय उष्ट्रो लक्ष्यते। अन्यथा उष्ट्रमुखमित्यस्योपमानपूर्वत्वं न स्यात्। अतएव 'उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः' इति प्रकृतवार्तिकोदाहरणभाष्यप्रतीकमादाय 'अवयवधर्मेण समुदायस्य व्यपदेशादुष्ट्रस्योपमानत्वेनुपमानपूर्वं उष्ट्रमुखशब्दः' इति कैयटे व्यव्रियत। एवंचात्र यथा कण्ठस्थः कालो यस्य स इति बहुव्रीहौ कण्ठशब्दोत्तरवर्तिस्थशब्दस्य लोपः यथा वा उष्ट्रमुखमिव मुखमित्यत्र षष्ठीतत्पुरुषचरमावयवभूतमुखशब्दलोपश्च, तथा घनविद्युल्लावण्यमिव लावण्यं यस्येति बहुव्रीहौ विद्युच्छब्दोत्तरवर्तिमुख्योपमानवाचकलावण्यपदस्यैव लोपः न तूपमेयभूतलावण्यपदस्येति धर्मवाचकोपमानलुप्ताया एवेदमुदाहरणं बोध्यम्। इदं सर्वमपि हंससन्देशरसास्वादिन्यामादिमपद्ये कल्पाकारामित्यस्य व्याख्यानावसरे निरूपितमस्माभिः॥

प्राञ्चस्तु केचित्—अयश्शूलसदृशेन क्रूरेणाचारेण स्वार्थमन्विच्छति खले प्रयुज्यमाने आयश्शूलिकः खल इत्यत्र क्रूराचाररूपस्योपमेयस्य तैक्ष्ण्यादेर्धर्मस्य इवादेर्वाचकस्य चाप्रयोगाद्धर्मोपमेयवाचकलुप्ताऽपि त्रिलोपे सम्भवतीत्याहुः। तत्र चतुरश्रम्—अयश्शूलपदेन क्रूराचारं निगीर्याध्यवसानेनातिशयोक्त्या

उपमेयस्योपादानात्तत्र नोपमेयलोप इति वदन्ति। आयश्शूलिक इत्यत्र 'पार्श्वेनान्विच्छति' इत्यधिकारे 'अयश्शूलदण्डाजिनाभ्यां ठक्ठञौ' इत्यन्वीच्छतीत्यर्थे ठक्। तीक्ष्ण उपायोऽयश्शूलं तेनान्विच्छतीत्यर्थः। एवमयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययविशेषगोचरतया शब्दशास्त्रव्युत्पत्तिवैदग्ध्यप्रदर्शनमात्रप्रयोजनो नातिमात्रमलङ्कारशास्त्रेऽर्हति व्युत्पादनीयतामित्याहुः॥

**एवमष्टविधा लुप्ताः प्राचां रीत्या निरूपिताः॥२०॥**

एवं मालोपमारशनोपमासावयवनिरवयवोपमादयोऽनेके भेदास्सम्भवन्तोऽप्युक्तभेद एवान्तर्गतत्वान्न लक्षणीयाः पृथक्। अथापि कांश्चिल्लक्षयामः—

**एकस्यैवोपमेयस्य यद्यनेकोपमानता।**
**तदा मालोपमामेतामाहुः केचिद्विचक्षणाः॥२१॥**

मालायां यथा एकेन पुष्पेणापरस्य पुष्पस्य ग्रथनं तथा उपमानां परस्परसम्बन्धान्मालोपमेत्येषा व्यवह्रियते। तथा च दण्डी—

पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः।
विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता॥ इति॥

एवंविधवैचित्र्य एवैषा। केवलमुपमानबाहुल्ये तु वक्ष्यमाणा बहूपमैव॥

यथा—

**व्यालीशति कालीशति काशति राकाशशिप्र-**

काशति च । कनकनगेशनखाभा कर्पूरति गाङ्गपूरति च ॥ ६२ ॥

व्यालीशश्शेषः । कालीशश्शम्भुः । कनकनगेशः वेङ्कटाद्रीशः । अत्रैकस्या एवोपमेयभूतायाश्श्रीनिवासनखप्रभायाः मालारूपेण व्यालीशाद्यनेकोपमानोपादानान्मालोपमेयम् । अत्र पूर्वं वाचकलुप्तोदाहरणतयोक्तः 'अलिबालति हरिनीलति' इत्यादिश्लोकोऽप्युदाहरणं, तत्र नीलेतिधर्मोपादानं विशेषः । सादृश्यनिमित्तधर्मोपादाने च धर्मस्यैक्ये भेदे चेयं मालोपमा भवति ॥

तत्र धर्मैक्ये यथा—

निकष इव कनकरेखा विद्रुमलतिकेव विलसति समुद्रे। अञ्जनगिरिपतिहृदये किञ्जल्कशिखेव कुवलये कमला ॥ ६३ ॥

राज्यश्रियेव राजा प्राज्यतमप्रतिभयेव कविराजः । कुसुमसमृद्ध्येव मधुर्माधवभक्त्या विराजते मनुजः ॥ ६४ ॥

प्रातरिव पद्मलक्ष्मीश्शीतज्योतिःकलेव सितपक्षे । सायमिव कुवलयश्रीः प्रायश्श्रीशाश्रिते विभाति श्रीः ॥ ६५ ॥

मधुमासीव हिमानी विधुभासीवास्तमेति ता-

पङ्क्तिः। शरदीव च जलदाभा वरद तवालोकने दुरितविततिः ॥ ६६ ॥

धान्येषु पुलाका इव पतगेषु पतङ्गिका इव श्रीमन्। मशका इव कीटेषु च वशिका नृषु ते त्वयीश ये विमुखाः ॥ ६७ ॥

अत्रोदाहरणपञ्चकेऽपि लक्ष्मीप्रभृतीनामेकैकोपमेयानां कनकरेखाद्यनेकोपमानोपादानान्मालोपमा। निकष इवेत्यादिना धर्मस्य बिम्बप्रतिबिम्बभावेन विलसतीत्यादिना अनुगामितया च निर्देशः पूर्वोदाहरणापेक्षया विशेषः। वशिका इत्यस्य तुच्छा इत्यर्थः। 'वशिकं तुच्छरिक्तके' इत्यमरः। अत्राप्याद्योदाहरणत्रितये श्लाघ्यान्युपमेयानि। अन्तिमोदाहरणद्वितये गर्ह्ये उपमेये इति वैलक्षण्यं बोध्यम्। इयमेव स्तबकोपमा मालारूपा। यथोक्तं दण्डिना—

अनेकस्यार्थयुग्मस्य सादृश्यं स्तबकोपमा।
श्रितोऽस्मि चरणे विष्णोर्भृङ्गस्तामरसे यथा ॥

इति। नच विधुभासीव पतङ्गिका इवेत्यादौ लिङ्गभेद उपमादोष इति शङ्क्यम्। सहृदयहृदयानुद्वेगदायितया तस्यादोषत्वात्। यथाऽऽह दण्डी—

न लिङ्गवचने भिन्ने न हीनाधिकते अपि।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥
स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ॥

भवानिव महाराज देवराजो विराजते ।
अलमंशुमतः कक्ष्यामारोढुं तेजसा नृपः ॥

इत्येवमादि सौभाग्यं न जहात्येव जातुचित् ।
अस्ति च क्वचिदुद्वेगः प्रयोगे वाग्विदां यथा ॥

हंसीव धवळश्चन्द्रस्सरांसीवामलं नभः ।
भर्तृभक्तो नरश्श्वेव खद्योतो भाति भानुवत् ॥
ईदृशं वर्ज्यते सद्भिः कारणं तत्र चिन्त्यताम् । इति ॥

धर्मभेदे यथा—

जलधिवदतिगम्भीरा जलरुहदळवन्नितान्तसुकुमाराः । कल्पागमवदुदाराः कल्पन्तां नश्शुभाय हरिदाराः ॥ ६८ ॥

पूर्वोदाहरणेषु सर्वत्र साधारणधर्म एक एव । इह तु भिन्नभिन्नः । पूर्वत्र समासगा वाक्यगा च पूर्णोपमा । इह तु तद्धितगा सेति भेदः । मालारूपत्वं तु तुल्यमेव ॥

रुद्रटस्तु धर्मभेदे सत्येव मालोपमां मन्यते । तथा च काव्यालंकारे—

मालोपमेति सेयं यत्रैकं वस्त्वनेकसामान्यम् ।
उपमीयेतानेकैरुपमानैरेकसामान्यैः ॥

इति । उदाजहार च—

श्यामा लतेव तन्वी चन्द्रकलेवातिनिर्मला सा मे ।
हंसीव कलालापा चैतन्यं हरति निद्रेव ॥ इति ।

मते त्वस्मिन् 'जलधिवत्' इत्यादिकमेव मालोपमोदाहरणं बोध्यम् ॥

भरतस्तु—

एकस्यैकेन सा कार्याऽनेकेनाप्यथवा पुनः ।
अनेकस्य तथैकेन बहूनां बहुभिस्सह ॥

इत्युपमायाश्चातुर्विध्यं प्रादर्शयत् । सा उपमेत्यर्थः । तत्र एकस्यैकेनोपमारूपः प्रथमप्रकारः 'गगनं यथा फणीश्वरनगपतिहृदयम्' इत्यादिप्रागुदाहृतपद्येषु द्रष्टव्यः ॥

एकस्य बहुभिरुपमारूपो द्वितीयप्रकारस्तु तेनेत्थं प्रदर्शितः तथाहि—

श्येनबर्हिणभासानां तुल्याक्ष इति या भवेत् ।
एकस्य बहुभिस्साम्यादुपमा सा प्रकीर्तिता ॥

इति । दण्डी च इममेव प्रकारं बहूपमेति व्यवाहार्षीत् । तथाच काव्यादर्शे—

चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥

इति । तदनुरोधेनेदमुदाहरणम् । यथा—

**कुवलयजलधरयमुनातमालसब्रह्मचारिरुचिररुचिः । सरसिजकिसलयविद्रुमसहचरचरणो ममाऽच्युतश्शरणम् ॥ ६१ ॥**

अत्र सब्रह्मचारिसहचरशब्दौ उपमानार्थकौ । तथाच दण्डी—

इववद्वायथाशब्दास्समाननिभसन्निभाः ।
तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ॥

प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।
सदृक्सदृशसंवादिसजातीयानुवादिनः ॥

प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः ।
सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥

कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये वाऽ(चा)न्यूनार्थवाचकाः ॥

समासश्च बहुव्रीहिश्शशाङ्कवदनादिषु ।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥

आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति ॥

तस्य पु(मु)ष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ॥
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥

तत्पदव्यां पदं धत्ते तस्य कक्ष्यां विगाहते ।
बन्धुश्चोरस्सुहृद्वादिसतीर्थ्यसहचारिणः ॥

तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ।
तस्य वाऽनुकरोतीति शब्दास्साधर्म्यबोधकाः ॥

उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ इति ॥

अत्र तस्य वाऽनुकरोतीत्यत्र इतिशब्दः प्रकारवाची । एवंप्रकाराश्शब्दास्साधर्म्यबोधका इत्यर्थः । तेन सगोत्रसब्रह्मचारिदायादप्रभृतीनामप्युपमानबोधकत्वं सिध्यति । अत्र इवादयो निपाताः । वदिति इवार्थे तुल्यार्थे च विहितो वतिप्रत्ययः । कल्पदेश्यदेशीयास्तद्धितप्रत्ययाः । यद्यप्येते ईषदसमाप्त्यर्थे विहिताः तथाऽपि तुल्यार्था एव । ईषदसमाप्तेरपि सादृश्ये पर्यवसानात् ।

यथोक्तं कैयटेन—'गुड इवेषदसमाप्ता द्राक्षा गुडकल्पा। यद्यप्यत्रोपमानं नोपात्तं, तथाऽपि सामर्थ्यादुपमानोपमेयभावः' इति। तत्र प्रत्ययानामुपमानोत्तरमेव प्रयोगः तस्यैव तत्प्रकृतित्वात्। निभादीनां पदानां तु—'वाच्यलिङ्गास्समस्तुल्यः' इत्यारभ्य 'स्युरुत्तरपदे त्वमी। निभसङ्काशनीकाशप्रतीकाशोपमादयः' इति नित्यसमासविषयतानुशासनात् चन्द्रेण समं चन्द्रनिभमित्यस्वपदेन विग्रहः प्रदर्शनीयः। तदुक्तं क्षीरस्वामिना—'उत्तरपदे इत्युक्तेश्चन्द्रेण निभमिति न भवति' इति। वैरिसुहृद्वाचकास्सादृश्यार्थाः। शशाङ्कवदनेत्यादौ उपमानपूर्वपदो बहुव्रीहिः। प्रतिबिम्बः स्पर्धत इत्यादयस्सादृश्याक्षेपका इत्यलम्। प्रकृतमनुसरामः। अनेकस्यैकोपमारूपस्तृतीयप्रकारश्च भरतेनैवं प्रदर्शितः—

चन्द्रवत्सम्प्रकाशन्ते ज्योतिर्भाजो द्विजोत्तमाः।
एकेन सा त्वनेकेषामुपमा संप्रकीर्तिता॥ इति॥

तत्रेदमुदाहरणम्—

**अमृतमयलोकबान्धवदृष्टिप्रथिता जगत्स्थितिकृतास्थाः। हृदि सच्छ्रियं दधाना भगवत्तुल्या विभान्ति भागवताः॥ ७०॥**

अमृतमयलोकः अप्राकृतलोकः परमं पदमित्यर्थः। तस्य बान्धवी प्रापयित्रीति यावत्। दृष्टिः ज्ञानं दर्शनं वा येषां ते तथाविधा इति प्रथिताः निश्श्रेयसप्रदाननिदानज्ञानपौष्कल्यवत्तया प्रसिद्धाः तथाविधदर्शना इति प्रसिद्धा इति वाऽर्थः। पक्षे—अमृतमयश्चन्द्रमाः लोकबान्धवो भानुः तावेव दृष्टी अक्षिणी यस्य तथोक्त इति प्रथित इति वचनविपरिणामेन योज्यम्। जगतः

स्थितिः वर्णाश्रमादिधर्ममर्यादा 'स्थितिः स्त्रियामवस्थाने मर्यादायां च सीमनि' इति मेदिनी । तस्यां कृतास्थाः 'अविप्लवाय धर्माणां मर्यादास्थापनाय च' इत्यारभ्य 'मनीषी वैदिकाचारं मनसाऽपि न लङ्घयेत्' इत्युक्तरीत्या स्वानुष्ठानादिना जगन्मर्यादापालयितार इत्यर्थः । पक्षे—जगतां स्थितौ पालने कृतास्थः ॥

नहि पालनसामर्थ्यमृते सर्वेश्वरं हरिम् ।
स्थितौ स्थितं महाप्राज्ञ भवत्यन्यस्य कस्यचित् ॥
सृजत्येष जगत्स्रष्टा स्थितौ पाति सनातनः ॥

इत्युक्तेः । हृदि मनसि सतां श्रीः सच्छ्रीः तां त्रयीमित्यर्थः । 'ऋचस्सामानि यजूꣳषि । सा हि श्रीरमृता सताम्' इतिश्रुतेः। दधाना हृद्गतसकलवेदतदर्था इत्यर्थः । पक्षे—सतीं श्रियं लक्ष्मीं दधान इति । भागवताः भगवत्तुल्याः विभान्ति । अत्रानेकेषां भागवतानां भगवानेक एवोपमानं समानधर्मश्श्लेषमूलकः । भगवत्तुल्या इत्यत्रोपमानवाचिपदगतवचनस्य वृत्तिलुप्ततयाऽनुद्रेजकत्वान्न भिन्नवचनतालक्षणदोष इति ध्येयम् । इयं सामान्यधर्मस्यैक्य एव भवति उपमानस्यैकत्वादिति ध्येयम् ॥

बहूनां बहुभिरुपमारूपस्तुरीयः प्रकारस्तु पूर्वमुदाहृते 'धान्येषु पुलाका इव' इत्यादौ द्रष्टव्यः ॥

## पूर्वपूर्वोपमेयस्य भवेद्यद्युत्तरोत्तरम् ।
## उपमानत्वमेषोक्ता कविभी रशनोपमा ॥ २२॥

प्रथमोपमायां यदुपमेयं तच्चेदुत्तरोपमायामुपमानं भवति सा रशनोपमेत्यर्थः ॥

यथा—

हृदयमिव हारि वदनं वदनमिवानन्ददायि तव वचनम् । वचनमिव ललितवर्णं नयनं नयनश्रुतीन्द्रशिखरिमणे ॥ ७१ ॥

अत्र पूर्वपूर्वं प्रत्युपमेयत्वेनोपात्तस्य वदनादेरुत्तरोत्तरं प्रत्युपमानत्वेनोपादानमुत्तरोत्तरस्य शृङ्खलायामिव पूर्वपूर्वसम्बन्धितयेति रशनोपमा । हृदयवदनयोः हारीति हारवत्त्वमनोहरत्वरूपार्थद्वयक्रोडीकारेण समानधर्मः । एवं वचननयनयोरपि ललितवर्णमिति मधुराक्षरत्वरमणीयविशदतादिवर्णवत्त्वरूपार्थद्वयाभेदाध्यवसायेन । वदनवचनयोस्तु आनन्ददायीत्यनुगामितयेति वैलक्षण्यमनुसन्धेयम् ॥ इयं धर्मभेदे रशनोपमा ॥

धर्मैक्ये यथा—

ऐश्वर्यमिव स्थैर्यं स्थैर्यमिवौदार्यमहिगिरिसुरद्रोः । औदार्यमिवावार्यं शौर्यं शौर्यमिव हन्त गाम्भीर्यम् ॥ ७२ ॥

अत्रावार्यमित्येक एव धर्मः । एवं धर्मलोपेऽप्युदाहार्यम् ॥

इयमुपमाऽपि रूपकवत्केवलनिरवयवा मालारूपनिरवयवा समस्तवस्तुविषयसावयवा एकदेशविवर्तिसावयवा केवलश्लिष्टपरम्परिता मालारूपश्लिष्टपरम्परिता केवलशुद्धपरम्परिता मालारूपशुद्धपरम्परिता चेत्यष्टधा । तत्रोपमायां केवलत्वं मालानन्तर्गतत्वं निरवयवत्वं चोपमान्तरनिरपेक्षत्वम् । इयं च बहुधा

पूर्वमेवोदाहृता । मालारूपनिरवयवाऽपि 'अलिबालति हरिनील ति, व्याळीशति कालीशति' इत्यादावुदाहृतैव ॥

समस्तवस्तुविषया सावयवा यथा—

**रचितोदया कळिन्दाद्रुचिरोदारा गिरेरिव मुकुन्दात् । सरिदिव सुषमाल्हरिर्हरते परितापमिव घनं पापम् ॥ ७३ ॥**

यथा वा—

**यमुनाह्लदमिव हृदयं कमलमिवावैमि कौस्तुभममुष्मिन् । डिण्डीरा इव हाराः कुण्डलिशिखरीन्द्रमण्डन तवैते ॥ ७४ ॥**

समस्तानि वस्तूनि अवयवी अवयवाश्च विषया यस्यास्सा समस्तवस्तुविषयेत्यर्थः । अत्र श्लोकद्वयेऽपि अवयविनोऽवयवानां चोपमानानां शब्दैरेव सामस्त्येनोपादानात्समस्तवस्तुविषयताऽस्याः, अवयवोपमाननिष्पाद्यमानत्वाच्च सावयवता च । अत्राद्ये पद्ये धर्मस्योपादानं द्वितीये तु तन्नेति विशेषः । इयमनेकेवशब्दा वाक्यार्थोपमेति दण्डी । यथोक्तं काव्यादर्शे तेन—

वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा ॥

त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।

मया मधुव्रतेनेव पायंपायमरम्यत ॥

इति। एकेवशब्दवाक्यार्थोपमा त्वग्रे प्रदर्शयिष्यते ॥

एकदेशविवर्तिनी सावयवा यथा—

**ननु भवदाहितगर्भा प्रकृतिः प्रासूत नाथ हंसीव। कोशमिव ब्रह्माण्डं श्रीश ततोऽजनि विधातृकादम्बः ॥ ७५ ॥**

अत्र—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवस्सर्वभूतानां ततो भवति भारत ॥

सर्वयोनिषु कौन्तेय मूर्तयस्सम्भवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥

इति गीताश्लोकार्थोऽनुसंहितः। "कृत्स्नस्य जगतो योनिभूतं मम महद्ब्रह्म यत् या प्रकृतिः तस्मिन् गर्भं दधामि 'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूताम्' इति निर्दिष्टाचेतनपुञ्जरूपा या परा प्रकृतिः सेह सकलप्राणिबीजतया गर्भशब्देनोच्यते। तस्मिन्नचेतने योनिभूते महति ब्रह्मणि चेतनपुञ्जरूपं गर्भं दधामि अचेतनप्रकृत्या भोगक्षेत्रभूतया भोक्तृवर्गपुञ्जभूतां चेतनप्रकृतिं संयोजयामीत्यर्थः। ततः तस्मात्प्रकृतिद्वयसंयोगान्मत्सङ्कल्पकृतात्सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां संभवो भवति। सर्वासु योनिषु देवगन्धर्वादियोनिषु तत्तन्मूर्तयो यास्सम्भवन्ति तासां ब्रह्म महद्योनिः कारणं मया संयोजितचेतनवर्गा महदादिविशेषान्तावस्था प्रकृतिः कारणमित्यर्थः। अहं बीजप्रदः पिता तत्रतत्र तत्तत्कर्मानुगुण्येन

चेतनवर्गस्य संयोजकश्चाहमित्यर्थः" इति भाष्यम् । कोशमिव अण्डमिव 'पेशी कोशो द्विहीनेऽण्डम्' इत्यमरः । अत्रोत्तरार्धे विधातृकादम्ब इत्यत्र उपमितसमास एव, विशेषणसमासवेद्यस्य तादात्म्यस्य प्रकृतेऽनुपयोगात् । उपमानप्रायपाठाच्च । 'श्रीश ततोऽजनि मराळ इव धाता' इति तुरीयपादपाठे तु स्पष्टैवोपमा । अत्र भगवतः कलहंसोपमा शब्देनानभिहिताऽप्यङ्गोपमाभिराक्षिप्ता प्रतीयत इत्येकदेशविवर्तिनीयमुपमा । अवयवावयविनोरेकदेशे विशेषेण वाच्यतया वर्तेत इत्येकदेशविवर्तिनीति ध्येयम् । अत्र विधातृकादम्ब इति जीवसमष्टिभूतचतुर्मुखजननवर्णनादन्येषामपि जननमर्थसिद्धमित्युदाहृतवचने 'सम्भवस्सर्वभूतानां' इति सर्वभूतोत्पत्तिकथनेनेदं न विरुध्यते । एवं सति—

> अप एव ससर्जादौ तासु वीर्यमपासृजत् ।
> तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥
> तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।

इति मनुवचनमप्यनुगुणं भविष्यतीति द्रष्टव्यम् ॥

केवलश्लिष्टपरंपरिता यथा—

**आदित्याभ्युदयस्य प्रत्यूष इव प्रकाशभूमानम् । विदधानो घनधामा श्रीमानाभाति शेषगिरिधामा ॥ ७६ ॥**

आदित्यानां देवानां आदित्यस्य भानोश्च अभ्युदयः ऐश्वर्यं उदयश्च । अत्र श्लेषोपस्थापितेन देवाभ्युदयेन सूर्योदयस्योपमा भगवतः प्रत्यूषोपमोपाय इति केवलश्लिष्टपरंपरिता ।

अन्योन्योपायतारूपस्यैव परंपरितत्वस्येह परिभाषणात् माला रूपताविरहाच्च ॥

केवला मालारूपा श्लिष्टपरंपरिता यथा—

**सत्त्वस्य हिमालय इव रजसस्त्वं प्रावृषेण्यजलद इव। तमसो महसां निधिरिव कमलेक्षण भासि कनकशिखरीन्दो ॥ ७७ ॥**

सत्त्वस्य सत्त्वगुणस्य मृगादिजन्तुजातस्य च। जात्यभिप्रायकमेकवचनम्। हिमालय इव यथा हिमाद्रिस्सर्वसत्त्वपोषणधुरीणः तथाऽयं भगवान् स्वाश्रितानां सत्त्वपोषणधुरीण इति भावः। 'महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः' इति हि श्रूयते। रजसः रजोगुणस्य पांसोश्च प्रावृषेण्यजलद इव निर्वापक इति भावः। तमसः तमोगुणस्य तिमिरस्य च महसां निधिरिव निश्शेषनिवर्तक इति भावः। अत्र श्लेषोत्थापितैः जन्तुपांसुतिमिरैस्सत्त्वरजस्तमोगुणानामुपमाः हिमाचलप्रावृषेण्यजलदभानुभिर्भगवत उपमानामुपायाः। नन्वत्र जन्तुपांसुतिमिराणामिव सत्त्वरजस्तमसामित्येतादृशी उपमा कथमिव सुशका प्रत्येतुम्। उपमानोपमेयशब्दानां पृथगदर्शनादिति चेत्—श्लेषस्थले ह्येकपदोपात्तत्वेन रूपणाभेदाध्यवसानस्येव तेनैव साधर्म्येण सादृश्याध्यवसानस्यापि सुवचत्वात्। तस्यैव प्रकृते प्रयोज्याया उपमाया उपायत्वादिति वक्ष्यन्ति ॥

यथा वा—

**शाखिकुलामोदानां माधव इव माधवाहिधर-**

धामन्। सुकविरिवास्तोकानां श्लोकानां घन इ-
वासि भुवनानाम् ॥ ७८ ॥

अहिधरधामन् हे माधव श्रीनिवास माधव इति श्रीनि-
वासस्य नामान्तरं 'माधवं वेङ्कटगिरौ' इति भगवच्छास्त्रोक्तेः।
शाखा एषां सन्तीति शाखिनः तरवः वेदभेदाध्येतारो द्विजाश्च
तेषां कुलस्य आमोदाः परिमळाः आनन्दाश्च तेषां 'शाखा
पक्षान्तरे बाहौ वेदभागद्रुभागयोः' इति मेदिनी। माधव इव
वसन्त इव प्रवर्तक इति भावः। अस्तोकानां श्लोकानां प-
द्यानां यशसां च सुकविरिव निदानभूत इति भावः। 'तस्य
नाम महद्यशः' इति श्रुतेः। 'पद्ये यशसि च श्लोकः' इत्य-
मरः। भुवनानां जलानां जगतां च घन इव आधारभूत इति
भावः। अत्र श्लेषोन्मीलितैः तरुकुलपरिमळपद्यजलैः वैदिकप-
रिषदानन्दयशोलोकानामुपमाः वसन्तसुकविघनाघनैर्भगवदुपमा-
नामुपायाः॥

यथा वा—

उल्लासयसि निकामं शरदागम इव शुचिद्वि-
जान् श्रीमन्। कल्याणानां महतामाधारस्त्वं सु-
मेरुरिव भूमन् ॥ ७९ ॥

हे भूमन् भगवन् 'यत्र नान्यत्पश्यति नान्यच्छृणोति ना-
न्यद्विजानाति स भूमा' इति श्रुतेः। शुचिद्विजान् हंसान्। पक्षे—

योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिश्शुचिः।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता॥

इत्युक्तप्रकारसर्वविधशुद्धिमतो विप्रान् कल्याणानां सुवर्णानां मङ्गळानां च 'कल्याणं हेम्नि मङ्गळे' इति हेमचन्द्रः । अत्र श्लेषोपस्थापिताभ्यां हंससुवर्णाभ्यां शुद्धविप्रमङ्गळयोरुपमे शरदागमसुमेरुभ्यां भगवत उपमयोरुपायः । पूर्वोदाहरणयोर्धर्मोनुक्तः इह तूक्त इति भिदा । यद्यपि 'सत्त्वस्य' इति प्राथमिकोदाहरणे भासोत्यनेन साधारणधर्म उपात्त इव भाति । तथाऽपि तत्रावश्यं विवक्षितानां पोषणनिर्वापणनिश्शेषनिवर्तनानामेव समानधर्मतायास्स्वारसिकतया केवलभानस्यातथात्वेनाचमत्कारितया च स न विवक्षित इति ध्येयम् । किं च पूर्वोदाहरणयोर्बहूनां मालारूपता अन्तिमोदाहरणे द्वयोरिति भेदः । आद्ययोरपि परस्परं भेदः अनुपदमेव स्फुटीभविष्यति ॥

केवलं शुद्धपरंपरिता यथा—

**अहिपतिगिरिपतिहृदये प्रहसितलसितासिताम्बुजात इव । अलिसंहतिरिव विलसति तुलसीदलसम्भृता माला ॥ ८० ॥**

प्रहसितेति भावे क्तः । प्रहसितेन विकासेन लसिते असिताम्बुजे इन्दीवर इत्यर्थः । तुलसीदलमालाया अलिसंहत्या उपमा भगवद्वक्षस्थलस्येन्दीवरोपमायास्साधिकेत्युपमाद्वयमपि संजातपरंपरम् ॥

केवला मालारूपा शुद्धपरंपरिता यथा—

**पुंगवसि गवन्तीनां पुरा करेणवसि करिणयन्तीनाम् । नन्दव्रजसुदतीनां चन्दनसि मुकुन्द वल्लयन्तीनाम् ॥ ८१ ॥**

पुरा पुंगवसि पुंगव इवाचरसि 'पुरि लुङ्चास्मे' इति पुराशब्दयोगाद्भूते लट्। गाव इवाचरन्त्यः गवन्त्यः तासाम्। करेणुरिवाचरसि करेणवसि करिण्य इवाचरन्त्यः करिणयन्त्यः तासाम्। वल्लव इवाचरन्तीति वल्लवयन्त्यः तासाम्। सर्वत्राचारार्थे क्विप्। अत्र गोपिकानां गवादिभिरुपमा भगवतः पुंगवाद्युपमाया उपाय इत्युपमा एतास्संजातपरम्परा मालारूपाः केवलं शुद्धाः॥

यथा वा—

**नयगहनस्य पथीनति परविद्याजलनिधेर्मथीनति च। कृतमतिदिविषद्विततेः कृष्ण ऋभुक्षीणति त्वयि प्रणतः॥ ८२॥**

हे कृष्ण त्वयि प्रणतो जनः नयः शास्त्रं तत् गहनमिव दुरवगाहं वनमिव नयगहनमित्युपमितसमासः, पथीनतीत्युपमानाल्लिङ्गात्। न तु मयूरव्यंसकादिः। तस्येहानुपयोगात्। तस्य पथीनति पन्था इवाचरति पथीनति 'उपमानादाचारे' इति क्विप्। 'अनुनासिकस्य क्विझलोः' इत्युपधादीर्घः। एवमग्रेऽपि। अनेन 'तत्रापरा ऋग्वेदः' इत्याद्युक्तापरविद्याप्रवक्तृत्वं सूचितम्। परविद्या 'अथ परा यया तदक्षरमधिगम्यते' इत्युक्ता ब्रह्मविद्या। जलधिरिवेति पूर्ववत्समासः। तस्य मथीनति मन्था इवाचरति। अनेन ब्रह्मविद्यासर्वस्वपरामर्शित्वं सूचितम्। अत एव कृतमतयः वैज्ञानिकाः दिविषद इव तेषां विततेः ऋभुक्षा इवाचरतीति ऋभुक्षीणति। अत्र नयपरविद्याकृतमतीनां गहनजलनिधिदिविषदुपमाः भगवत्प्रणतस्य पथिमथिऋभुक्ष्युपमानामुपाया इत्युपमा एताः पूर्ववदेव परंपरिताः मालारूपाश्शुद्धाश्च। अत्र 'पथिमथ्यृभुक्षाम्' इति सूत्रनिबद्धपथ्यादि-

शब्दार्थानामुपमानविधया क्रमेण निबन्धनाद्वक्ष्यमाणरत्नावळ्यलङ्कारेण सङ्कीर्णत्वं पूर्वोदाहरणाद्विशेषः ॥

एवमुपमानयोरन्योन्यमुपमेययोश्चानुकूल्ये उपमेययोरेवोपायता निरूपिता ॥

प्रातिकूल्ये उपायता यथा—

**जलदायते सदा खलु निदाघदावाग्निदाहते महते । द्विपदां कुलाय विपदां पृदाकुवरगिरिमदावळेन्द्रोऽयम् ॥ ८३ ॥**

निदाघदावाग्निदाहवदाचरते महते द्विपदां मनुजानां सम्बन्धिने विपदां कुलाय जलदायते जलद इवाचरति । पृदाकुवरगिरिश्शेषाद्रिः तस्य मदावळेन्द्रः तत्त्वेनाध्यवासितश्श्रीनिवास इत्यर्थः । अत्रोपमानयोर्दवाग्निदाहजलदयोरन्योन्यमुपमेययोश्च मनुजविपत्फणिशिखरिनाथयोः प्रातिकूल्येऽपि उपमयोः परस्परमानुकूल्यादुपायतैव ॥

इयं मालारूपतायामपि भवति । यथा—

**सुत्रामाणसि महतां सपक्षशिखरिणतां सुरद्विषताम् । पूषाणसि हिमतामिह राजानसि तमस्तां च शौरे त्वम् ॥ ८४ ॥**

सुत्रामेवाचरसि सुत्रामाणसि सुत्रामन्शब्दात् ‘सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः’ इति क्विपि ‘अनुनासिकस्य क्विझलोः’ इत्युपधादीर्घः । एवं शिखरिणताभित्यादावपि । सप-

क्षशिखरिण इवाचरन्तीति सपक्षशिखरिणन्तः तेषाम् । किब-न्ताच्छता । पूषेवाचरसि पूषाणसि हिमानीवाचरन्तीति हिमन्तः तेषाम् । राजेव चन्द्र इवाचरसि राजानसि तमांसीवाचरन्तीति तमसन्तः तेषां । सर्वाणि षष्ठ्यन्तपदानि सुरद्विषामित्यस्य वि-शेषणानि । एवं केवलश्लिष्टपरंपरितमालारूपोपमाया उदाह-रणे 'सत्त्वस्य हिमालय इव' इति प्राथमिकपद्ये 'रजसस्त्वं प्रावृषेण्यजलद इव' इत्यादौ प्रातिकूल्ये उपायता द्रष्टव्या। एवं च सा आनुकूल्यप्रातिकूल्यमिश्रेति सिद्धम् । इतश्चान्येऽ-पि भेदाः कुशाग्रीयमतिभिः कृतिभिस्स्वयमेव विभावनीया इति विस्तरभयादुपरम्यते ॥

अत्रोपमायां पूर्णायां धर्मः कचिदनुगाम्येव निर्दिश्यते। कचित्केवलं बिम्बप्रतिबिम्बभावमापन्नः । कचिद्वस्तुप्रतिवस्तुभावेन करम्बितं बिम्बप्रतिबिम्बभावमापन्नः । कचिच्छुद्धवस्तुप्रतिवस्तु-भावमापन्नः । कचिदसन्नप्युपचरितः । कचिच्छब्दात्मकः, अयमेव श्लेषात्मकः । कचित्समासान्तराश्रयणमूलकः । कचिदेषां यथास-म्भवं मिश्रणेन ॥

तत्रानुगामी धर्मो यथा—

**ज्योत्स्नाचन्द्रमसाविव वृषगिरिकलितौकसौ म हामहसौ । सुतरौ जगतां पितरौ बुद्धौ निदधीय नित्यसम्बद्धौ ॥ ८५ ॥**

अत्र नित्यसंबद्धाविति सकृन्निर्देशात् ज्योत्स्नाचन्द्रमसोः श्रीश्रीनिवासयोश्च साधारणो धर्मोऽनुगामी ॥

यथा वा—

कादम्बिनीव नीला काकोदरगिरिदरीविहृति-
लोला। आप्याययति सुमहती काऽप्येषा देवताऽ-
द्भुता जगतीम् ॥८६॥

अत्र नीलेति आप्याययतीति च सकृन्निर्देशात्परदेवताका-
दम्बिन्योस्साधारणधर्मोऽनुगामी ॥

यथा वा—

निधिमनवधिमिव फणिगिरिनिहितपदं हितपदं
विधुतविपदम्। निर्विश्य नीरजाक्षं नितरां को
नाम भवति दीनात्मा ॥८७॥

हितपदं हिताधायकं अत्र हितपदत्वादिर्धर्मोऽनुगामी ॥

यथा वा—

तावकपदपद्मयुगीसेवकतां ये न जात्वपीप्सन्ति।
नाशायैव हि जातास्श्रीशाब्धेर्बुद्बुदा इव त एते ॥

यथा वा—

सुकृतेक्षणजनुषान्धास्सकृदपि न नमन्ति ये
रमाकान्तम्। अकृतहिता व्यर्थममी शकृदुदिताः
क्रिमय इव विनश्यन्ति ॥८९॥

सुकृतेक्षणे पुण्यदर्शने विषये जनुषान्धाः जात्यन्धाः 'पुं-
सानुजो जनुषान्ध इति च' इत्यलुक्। सुकृतव्युत्पत्तिशून्या

इत्यर्थः । अत्र भगवदप्रणतानां निन्दायामेव तात्पर्यादुपमानस्य निहीनत्वं न दोषः । प्रत्युत गुण एव । उभयत्र नाशोऽनुगामीधर्मः ॥

केवलं बिम्बप्रतिबिम्बभावमापन्नो धर्मो यथा—

**कमलाभुजयुगळाश्रितपरितःपरिरम्भमद्भुतं किमपि । कनकशलाकावलयितमरकतनिभमस्तु मनसि मम वस्तु ॥ १० ॥**

कमलाभुजयुगळेन अश्रितः प्राप्तः परितः परिरम्भः सर्वतस्संश्लेषो यस्य तत् किमपि अद्भुतं वस्तु श्रीनिवासः अत्र कमलाभुजयुगळकनकशलाकादेर्बिम्बप्रतिबिम्बभावेन साधारणधर्मता ॥

ननु कमलाभुजयुगळादेरसाधारणत्वात्कथमुपमेति चेत्— अत्राहुः—उपमेयगतानामुपमानगतानां च असाधारणानामपि धर्माणां सादृश्यमूलेनाभेदाध्यवसायेन साधारणत्वकल्पनादुपमासिद्धिः । न च भ्रमात्मकेनाहार्याभेदबोधेन कथं नाम कमलाभुजयुगळकनकशलाकादेर्वस्तुतो भिन्नस्य साधारणत्वसिद्धयेऽत्यन्तमसन्नभेदश्शक्यात्सेद्धुम्, भ्रमेणार्थसिद्धेरयोगादिति वाच्यम् । 'तव कोपो समाभाति सुधांशाविव पावकः' इत्यादावप्युपमानोपमेययोरतिमात्रमसत्त्वेऽपि यथा कल्पनामात्रेण निष्पत्तिः तथैव प्रकृते साधारणधर्मस्यापीति ध्येयम् । अयमेव हि 'वस्तुतो भिन्नयोर्धर्मयोः परस्परसादृश्यादभिन्नतयाऽध्यवसितयोर्द्विरुपादानं बिम्बप्रतिबिम्बभावः' इति प्राचीनैरभिधीयते ॥

वस्तुप्रतिवस्तुभावेन करम्भितं बिम्बप्रतिबिम्बभावमापन्नस्तु धर्मस्त्रिविधः विशेषणमात्रयोः विशेष्यमात्रयोः तद्युगळयोर्वा वस्तुप्रतिवस्तुभावेन करम्भितः ॥

तत्राद्यो यथा—

**उपरिचरन्मधुकरकुलकमलनिभं वृषभशैलशि-खरशशिन् । उपरिष्टाच्चलदलकं वदनं तव विश्व-सम्पदां सदनम् ॥ ११ ॥**

अत्र उपरिचरत्वोपरिष्टाच्चलत्वयोर्वस्तुत एकविषयोरपि पृथक्छब्दाभ्यां निर्देशाद्वस्तुप्रतिवस्तुभावः तद्विशेषणकयोर्मधुकर-कुलालकयोर्बिम्बप्रतिबिम्बभाव इति तत्करम्बितत्वं धर्मस्य ॥

द्वितीयो यथा—

**स्मितरुचिमसृणितमधरं फणधरधरणीधराधि-नेतुर्नः । दुग्धोदधिमुग्धोर्मिस्निग्धं विद्रुममिवावले-ढि मनः ॥ १२ ॥**

अत्र मसृणत्वस्निग्धत्वयोर्वस्तुत एकरूपयोरपि शब्दद्वयेनो-पादानाद्वस्तुप्रतिवस्तुभावः तद्विशेष्यकयोः स्मितरुचिदुग्धोदधिमु-ग्धोर्म्योर्बिम्बप्रतिबिम्बभाव इति तत्करम्बितोऽयं साधारणधर्मः ॥

यथा वा—

**जाम्बूनदाद्रिशृङ्गे जम्बूतरुमिव चकासतं सत-तम् । कनकाभिधगिरिशिखरे कनन्तमीडीय कम-पि शुभराशिम् ॥ १३ ॥**

अत्र चकासत्त्वकनत्त्वयोर्वस्तुप्रतिवस्तुभावः तद्विशेष्यकयो-र्जाम्बूनदाद्रिशृङ्गकनकाभिधगिरिशिखरयोर्बिम्बप्रतिबिम्बभाव इ-त्ययमपि तत्करम्बित एव । कनकाभिधगिरिर्वैंकटाद्रिः । शुभ-राशित्वेनात्र भगवतोऽध्यवसानम् ॥

यथा वा—

हीरकुरुविन्दहारप्रसृमररुचिशबलिता तनुलता श्रीः । देव तव गाङ्गसारस्वतपूरविचित्रितेव मित्रसुता ॥ १४ ॥

अत्रापि शबलितत्वविचित्रितत्वयोर्वस्तुप्रतिवस्तुभावः । तद्विशेष्यकयोः हीरकुरुविन्दहाररुचिगाङ्गसारस्वतपूरयोश्च बिम्बप्रतिबिम्बभाव इत्ययमपि तत्करम्भित एव ॥

तृतीयो यथा--

शिशिरतरसलिलरुचिरा शशिशेखरमकुटवाहिनीवैषा । शीतलतरकरुणारसमधुराऽहिधुरंधराद्रिनाथवधूः ॥ १५ ॥

अत्र विशेषणयोश्शिशिरतरत्वशीतलतरत्वयोः विशेष्ययोः रुचिरत्वमधुरत्वयोश्च वस्तुप्रतिवस्तुभावेनोभयतस्संपुटितस्सलिलकरुणारसयोर्बिम्बप्रतिबिम्बभाव इत्ययमपि तत्करम्भित एव ॥

यथा वा--

सुन्दरकुरुविन्दमणीसमुद्गकान्तस्थहीरहारलताम् । मञ्जुलरदनच्छदयुगमध्यगता जयति नाथ दशनाली ॥ १६ ॥

अत्रापि विशेषणयोस्सुन्दरत्वमञ्जुलत्वयोः विशेष्ययोश्चान्तस्थत्वमध्यगतत्वयोः वस्तुप्रतिवस्तुभावेनोभयतस्संपुटितः कुरुविन्दमणीसमुद्गकदशनच्छदयुगयोर्बिम्बप्रतिबिम्बभाव इत्ययमपि तत्करम्भितः ॥

यथा वा—

**असितैः कुसुमैर्मसृणाश्शाला बिभ्रत्तमालसाल इव। नीलैर्मणिभिर्निबिडा बाहा दधदहिगिरेः पतिर्जयति ॥ १७ ॥**

अत्र कुसुममणिविशेषणयोरसितत्वनीलत्वयोस्तद्विशेष्ययोश्च मसृणत्वनिबिडत्वयोः एवमेव शालाबाहाविशेषणत्वमापन्नयोः मसृणत्वस्निग्धत्वयोः तद्विशेष्ययोर्बिभ्रत्त्वदधत्त्वयोश्च वस्तुप्रतिवस्तुभावेनोभयतस्संपुटितः कुसुमानां मणीनां शालानां बाहानां च बिम्बप्रतिबिम्बभाव इत्ययमपि वस्तुप्रतिवस्तुभावकरम्भित एव। पूर्वत्र संपुटित एको बिम्बप्रतिबिम्बभावः इह तु द्वाविति विशेषः। शालाः स्कन्धशाखाः 'स्कन्धशाखाशाले' इत्यमरः। स्कन्धान्निर्गता शाखा स्कन्धशाखा स्कन्धो नाम मूलाच्छाखावधिः प्रकाण्डः 'अस्त्री प्रकाण्डस्स्कन्धस्स्यान्मूलाच्छाखावधेस्तरोः' इत्यमरः। स्कन्धशाखा शाला चेत्येतौ शब्दौ उक्तशाखावाचिनौ। अयं तृतीयः प्रकारो रसगङ्गाधरकारेणोक्तः। चित्रमीमांसायां तु प्रागुक्तौ द्वावेव प्रकारौ दर्शितौ। यथोक्तं तत्र—'एकस्यैव धर्मस्य सम्बन्धिभेदेन द्विरुपादानं वस्तुप्रतिवस्तुभावः। स तु शुद्धो न सम्भवति किं तु विशेषणतया विशेष्यतया वा सर्वत्र बिम्बप्रतिबिम्बभावकरम्भितः' इति। एवं च शुद्धवस्तुप्रतिवस्तुभावापन्नो धर्मो न संभवतीत्येव ते मन्यन्ते॥

रसगङ्गाधरकारस्तु—'विमलं वदनं तस्या निष्कलङ्कमृगाङ्कति' इत्यत्र वैमल्यनिष्कलङ्कत्वयोर्वस्तुत एकरूपयोर्बिम्बप्रतिबिम्बभावनिर्मुक्तं वस्तुप्रतिवस्तुभावमापन्नयोरुपमानिष्पादकत्वं य-

द्यस्ति तदा शुद्धवस्तुप्रतिवस्तुभावापन्नोऽप्येष षष्ठो धर्म इत्य-वादीत् । एतदभिप्रायानुरोधेनैवास्माभिश्शुद्धवस्तुप्रतिवस्तुभावा-पन्नोऽपि भेदोऽधस्तात्परिगणितः ॥

स यथा—

**विमले विलोचने तव विशदशरद्विकसिताम्बु-जायेते। मृगराजाह्वयविलसन्नगराजाधीश्वरस्य जा-ये ते ॥१८॥**

मृगराजाह्वयविलसन्नगराजाधीश्वरस्य श्रीवेंकटाद्रिनेतुः जाये सहधर्मिणि ते विमले विलोचने विशदे स्वच्छे शरद्विकसि-ताम्बुजे इवाचरतः विशदशरद्विकसिताम्बुजायेते, क्यङन्ताल्ल-ट्प्रथमपुरुषद्विवचनम् । अत्र विमलत्वविशदत्वयोर्वस्तुत एक-रूपयोर्बिम्बप्रतिबिम्बभावनिर्मुक्तं वस्तुप्रतिवस्तुभावमापन्नयोरुप-मानिष्पादकत्वमिति शुद्धवस्तुप्रतिवस्तुभावापन्नता धर्मस्येति ध्येयम् ॥

न च 'कमलाभुजयुगळाञ्चितपरितःपरिरम्भम्' इत्यादौ मरकतभगवतोरुपमायां धर्मान्तरस्यानवगमात्कमलाभुजयुगळ क-नकशलाकयोः परिरब्धत्ववलयितत्वयोश्च बिम्बप्रतिबिम्बभावो यथाऽवश्यमभ्युपेयः प्रकृते तु न तथा वस्तुप्रतिवस्तुभावः, विलोचनाम्बुजयोर्मनोहरत्वरूपसाधारणधर्मस्य प्रतीयमानत्वेन ध-र्मान्तरानपेक्षणादिति वाच्यम् । एवं तर्हि 'यान्त्या मुहुर्वलि-तकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या' इति भवभू-तिपद्येऽपि प्रतीयमानेन सौन्दर्येणैव सामान्येन निर्वाहे कन्ध-रावृन्तयोर्बिम्बप्रतिबिम्बभावस्य वलितत्वावृत्तत्वयोर्वस्तुप्रतिव-

स्तुभावस्य च सर्वैरालंकारिकैस्स्वीकारो विरुध्येत । अतो यथाऽवस्थितमेव साधु ॥

असन्नप्युपचरितो यथा—

**द्रुहिणस्मरहरमुखसुरमहिमानोऽप्यहह तावकमहिम्नि । जलजविलोचन जलधौ कुलाचला इव किलाभिमज्जन्ति ॥ ९९ ॥**

अत्र मज्जनं मूर्तद्रव्यधर्मो महिमसूपचरितः ॥

यथा वा—

**प्रसभं प्रवेशितमपि प्रायश्चरिते तवेश शठहृदयम् । नैव द्रवति समुद्रेऽप्ययो घनतरं पयोजनयन यथा ॥ १०० ॥**

प्रसभं प्रवेशितमित्यस्य उत्तरार्धे समुद्रे इत्यत्राप्यन्वयः । घनतरं अयो यथा कालायसमिवेत्यर्थः । अत्र प्रवेशनद्रवयोर्मूर्तद्रव्यधर्मतया हृदये उपचारः ॥

श्लेषात्मको यथा—

**मञ्जुलतमालसच्छ्रीरञ्जनधरणीधरेशहृदयगता । वनमालेव विचित्रा वनमाला प्रसृमरामोदा ॥ १०१ ॥**

मञ्जुलैः तमालैः तापिञ्छैः सती प्रशस्ता श्रीश्शोभा यस्यास्सा तथोक्ता । पक्षे—मञ्जुलतमा लसच्छ्रीरिति छेदः, म-

ञ्जुलतमा अतिमनोज्ञेत्यर्थः । लसन्ती श्रीः लक्ष्मीः यस्यां सा । अञ्जनधरणीधरेशस्य अञ्जनाख्यगिरिवरस्य । पक्षे—वेंकटाद्रिनाथस्य भगवत. हृदयं मध्यभागं वक्षश्च गता प्राप्ता । प्रसृमरः विसृत्वरः आमोदः परिमळविशेषो यस्यास्सा । अन्यत्र प्रकृष्टः सृमराणां महाचमरीमृगाणां आमोदो हर्षः यस्यां सा । 'सृमरो गवयश्शशः' इति मृगविशेषनामस्वमरः । वनमालेव विपिनपङ्क्तिरिव वनमाला वैजयन्ती विभिः पक्षिभिः चित्रा विस्मयावहा । पक्षे 'पञ्चवर्णा तु या माला वैजयन्ती गदाभृतः' इत्युक्तरीत्या पञ्चवर्णतया शबलेत्यर्थः । अत्र वनपङ्क्तिवैजयन्त्योश्श्लेषकृतस्साधारणो धर्मः । अत्र उपमानोपमेयगतस्यार्थस्यैकस्याभावाच्छब्द एव साधारणधर्म इत्यन्ये ॥

यथावा—

**निजविभवमहिमगायकमयूरविभ्राडुदात्तघनतेजाः । वर्षसमय इवायं तर्षाञ्शमयति रमासखो जगताम् ॥ १०२ ॥**

निजविभवमहिमगायकाः मयवः किन्नराः यस्य स तथोक्तः । 'स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः' इत्यमरः । रविभ्राट् सूर्य इव भ्राजमानः । उदात्तं श्रेष्ठं घनं सान्द्रं तेजो यस्य स तथोक्तः इति भगवत्पक्षे । वर्षसमयपक्षे तु—निजविभवमहिम्नः गायकाः केकारवैः प्रकाशकाः ये मयूराः तैः विभ्राट् भ्राजिष्णुः । उदात्तं घनानां तेजो यस्मिन् तथोक्तः । तर्षान् आशाः उदन्याश्च शमयति । अत्रापि श्लेषकृतस्समानधर्मः ॥

समासभेदाश्रयणमूलको धर्मो यथा--

मांसलशङ्खसुदर्शनहंसावर्ता सनाभिनाळीका। शमितामितभवदमुना यमुनालहरीव तव तनुश्शौरे ॥१०३॥

मांसलौ पृथुलौ शङ्खसुदर्शनौ हंसावर्ताविव शङ्खसुदर्शन-हंसावर्तौ यस्यां सा तथोक्ता। अन्यत्र-शङ्खसुदर्शनाविव हंसा-वर्ताविति समासः। नाभेर्नाळीकं तेन सह वर्तत इति तथोक्ता। अन्यत्र नाभ्या मध्यस्थकर्णिकया सह वर्तन्त इति तथोक्तानि नाळीकानि पद्मानि यस्यां सेति वा नाभितुल्यं नाळीकं तेन सह वर्तत इति वा समासः। भवः दमुनाः अग्निरिवेति। पक्षे-भवसदृशः दमुनाः इति समासः। एवं समासभेदाश्रयणेन स-मानधर्मता। केचिदिमं साधारणधर्मं पृथङ्नाद्रियन्ते, समासभेदनि-बन्धनयोरर्थयोश्श्लेषभित्तिकाभेदाध्यवसायेनैकधर्मतासम्पादनात्। श्लेषात्मके समानधर्म एवास्याप्यन्तर्भाव इति तेषामाशयः॥

मिश्रणेष्वनुगामित्वबिम्बप्रतिबिम्बभावापन्नधर्मयोर्मिश्रणं यथा-

फलवानिव धरणिरुहो जलवानिव जाह्नवीह्रदो जगति। बलवानिव धरणिपतिर्जलजेक्षणभक्तिमान् जनश्श्लाघ्यः ॥१०४॥

अत्र भगवद्भक्तिमत्त्व फलवत्त्वादि च बिम्बप्रतिबिम्बभाव-भापन्नौ धर्मौ श्लाघ्यत्वे अनुगामिनि धर्मे अभेदमासाद्य स्थितौ॥

यथावा —

**अपि सुमनःकुलजाताः खेटास्त्वन्महिमसम्पदनभिज्ञाः । अपि सुमनःकुलजाताः कीटा इव दूरतस्त्याज्याः ॥ १०५ ॥**

सुमनःकुले विद्वद्वंशे द्वितीयार्धे कुसुमसमुदये जाताः खेटाः गर्ह्या जनाः 'कुपूयकुत्सितावद्यखेटगर्ह्याणकास्समाः' इत्यमरः । अत्र भगवन्महिमसम्पदनभिज्ञानां गर्ह्यजनानां कीटानां च दूरतस्त्याज्यत्वरूपोऽनुगामी धर्मः विद्वद्वंशजातत्वकुसुमसमूहभवत्वयोर्बिम्बप्रतिबिम्बभावमपेक्ष्य लब्धात्मकः ॥

यथावा—

**परतासौशील्याभ्यां दुरधिगमो नाथ भवसि सुगमश्च । उच्चैस्त्वफलित्वाभ्यामुत्तमनग इव नृणां खगगिरीन्द्रो ॥ १०६ ॥**

अत्र दुरधिगमत्वं सुगमत्वं च परत्वसौशील्ययोरुच्चैस्त्वफलित्वयोश्च बिम्बप्रतिबिम्बभावमपेक्ष्य लब्धात्मकमनुगामी साधारणो धर्मः । अत्राद्यं मालारूपं, द्वितीयं यमकेन तृतीयं यथासङ्ख्येन सङ्कीर्णमिति विशेषः ॥

यथा वा—

**सम्राज इवानम्रा भूपाला नित्यमप्यनतिवेलाः । शिरसा दधते शासनमरविंदासनमुखाश्च तव भूमन् ॥ १०७ ॥**

सम्राज इति षष्ठ्यन्तं पदम् । अत्रानम्रत्वादिकं सामा-

न्यधर्मस्सम्राड्भगवतोर्बिम्बप्रतिबिम्बभावमुपजीव्याधिगतसत्ताकामिति ध्येयम् ॥

यथावा—

फणिशैलनाथ मसृणितमणिवरमौक्तिकसरो हरे भवतः । प्रतिभाति हृदयदेशः प्रतिबिम्बितचन्द्रतार इव सिन्धुः ॥ १०८॥

मणिवरः कौस्तुभः । एवं पूर्वमुदाहृते 'आनन्दनिलय' इति पद्येऽपि मिश्रणं द्रष्टव्यम् । इदं शुद्धबिम्बप्रतिबिम्बभावानुगामिनोर्मिश्रणम् ॥

अनुगामित्ववस्तुप्रतिवस्तुभावकरम्भितबिम्बप्रतिबिम्बभावयोर्धर्मयोर्मिश्रणं यथा—

उपसृप्यते जनैरभ्युदितस्त्वज्ज्ञानभजनवैराग्यैः।
पादप इव परमात्मन्प्रसूनफलपल्लवैस्समुल्लसितः॥

अभ्युदितः अभ्युदयं प्राप्तः । अत्राभ्युदितत्वसमुल्लसितत्वयोर्वस्तुप्रतिवस्तुभावः । तद्विशेष्यकाणां भगवज्ज्ञानभजनवैराग्याणां प्रसूनफलपल्लवानां च बिम्बप्रतिबिम्बभाव इति तत्करम्भितोऽयं धर्म उपसर्पणे अनुगामिनि धर्मे अभेदमापन्नः ॥

यथावा—

वृजिनव्रजविनिमग्नो गज इव सीदामि मकरमुखलग्नः । त्वामन्तरेण को मे कामं क्षेमंकरो हरे भविता ॥ ११०॥

हरे इति करिवरदत्वाभिप्रायकं, हर्यवतार एव गजेन्द्र-मोक्षणात्। अत्र विनिमग्नत्वलग्नत्वयोर्वस्तुप्रतिवस्तुभावः, तद्विशेष्यकयोः वृजिनव्रजमकरमुखयोर्बिम्बप्रतिबिम्बभावः। तदवलम्बनेनसीदामीत्यनुगामी प्राप्तसत्ताक इत्यनयोर्मिश्रणम्। न च विनिमग्नत्वलग्नत्वयोर्विभिन्नत्वान्न वस्तुप्रतिवस्तुभावस्सम्भवतीति वाच्यम्। वृजिनव्रजे निमज्जनस्यासम्भवात्तत्रापि सम्बन्धमात्रस्यैव विवक्षणेन तयोरेकरूपत्वात्॥

यथावा—

**अविरळदळकुसुममयस्तबकस्तिमितो द्विरेफराज इव। घनघृणिहरिमणिमयफणिशिखरिविलीनो हरिर्मनो हरति॥ १११॥**

अत्र अविरळत्वघनत्वयोर्वस्तुत एकरूपयोरपि शब्दद्वयेनोपादानाद्वस्तुप्रतिवस्तुभावः। तद्विशेषणकानां दळानां घृणीनां च। एवं स्तिमितत्वविलीनत्वयोर्वस्तुप्रतिवस्तुभावः। तद्विशेष्यकयोः कुसुममयस्तबकहरिमणिमयफणिशिखरिणोश्च बिम्बप्रतिबिम्बभाव इति तत्करम्भितोऽयं धर्मो मनोहरणे अनुगामिनि धर्मे अभेदमासाद्य स्थित इत्यनयोर्मिश्रणम्। पूर्वोदाहरणद्वये विशेष्ययोर्वस्तुप्रतिवस्तुभावः। इह तु विशेष्यस्य विशेषणस्य चेति द्विविधो वस्तुप्रतिवस्तुभाव इति भिदा॥

कचिद्धेतुहेतुमद्भावेन यथा—

**सौलभ्यजनिस्थानं सेव्यस्सर्वैर्नरैस्सरोजाक्षः। सौरभ्यजन्मभूमिस्सरसीरुहनिवह इव मधुकरौघैः॥**

अत्र जनिस्थानत्वजन्मभूमित्वयोर्वस्तुप्रतिवस्तुभावः। तद्विशेष्यके सौलभ्यसौरभ्ये बिम्बप्रतिबिम्बभावापन्ने सरोजाक्षसरसीरुहनिवहयोस्सेव्यत्वेऽनुगामिनि हेतुः। इदं मिश्रणं शुद्धबिम्बप्रतिबिम्बभावेऽपि भवतीति ध्येयम्॥

अनुगामित्वश्लेषयोर्मिश्रणं यथा—

**नरसिंहगिरिवरोऽयं शिरसा सुकलाभिपूर्णविधुबिम्बम्। उदयाद्रिरिव दधानः प्रददात्यानन्दमखिललोकानाम्॥ ११३॥**

सुकलाभिपूर्णं 'मन्त्रमन्त्रेश्वरन्यासात्साऽपि षाड्गुण्यविग्रहा' इत्युक्तरीत्या सकलकलापरिपूर्णमिति भगवद्बिम्बपक्षेऽर्थः। अन्यत्र तु स्फुट एव विधुबिम्बं श्रीनिवासार्चा

सर्वातिशायि षाड्गुण्यं संस्थितं मन्त्रबिम्बयोः।
तेनार्च्यो भगवान् साक्षान्नोपचारधिया क्वचित्॥

इति भगवच्छास्त्रवचनान्यत्रानुसन्धेयानि। अन्यत्र चन्द्रबिम्बमित्यर्थः। अत्र सुकलाभिपूर्णविधुबिम्बशब्दश्लेषोपजीवनेन प्राप्तात्मस्थितिकमखिललोकानन्दप्रदत्वमनुगामी साधारणो धर्मः॥

श्लेषवस्तुप्रतिवस्तुभावबिम्बप्रतिबिम्बभावमिश्रणं यथा—

**वैशद्यं नैति नरो विद्यां संशिक्षितोऽप्यसुरशीलः। शाणोल्लिखितोऽप्यच्युत मलिनप्रकृतिर्यथेङ्गालः॥ ११४॥**

असुरशीलः—

द्विविधो भूतसर्गोऽयं दैव आसुर एव च।

विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः॥

इत्युक्तप्रकारेणासुरप्रकृतिरित्यर्थः। विद्यां 'सा विद्या या विमुक्तये' इत्युक्तां ब्रह्मविद्यां संशिक्षितोऽपि सम्यगनुशिष्टोऽपि वैशद्यं परतत्त्वबोधनं नैति।

जन्मान्तरसहस्रेषु या बुद्धिर्भाविता पुरा।

तामेव भजते जन्तुरुपदेशो निरर्थकः॥

नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम्।

इत्याद्युक्तेरिति भावः। पक्षे—वैशद्यं धावल्यं अन्यत्सुगमम्। अत्रासुरशीलत्वमलिनप्रकृतित्वयोर्वस्तुप्रतिवस्तुभावकरम्बितः बिम्बप्रतिबिम्बभावः शीलप्रकृत्योर्वस्तुत एकरूपयोर्विभिन्नशब्दाभ्यां निर्देशात्, तद्विशेष्यकयोः असुरमलिनयोर्वस्तुतोऽभिन्नयोरपि सारूप्येणैकत्वाध्यवसानाच्च। विद्यासंशिक्षितत्वशाणोल्लिखितत्वयोः केवलं बिम्बप्रतिबिम्बभावः। वैशद्यं नैतीति श्लिष्टस्समानधर्मस्ताभ्यामुत्तेजित इति द्रष्टव्यम्॥

श्लेषोपचारबिम्बप्रतिबिम्बभावमिश्रणं यथा—

## प्रेक्षावत इव साक्षात्परमस्य ब्रह्मणो वृषगिरीन्दोः। विद्येव श्रीर्हृद्या चेतोहृत्पद्यमुज्ज्वलयतीयम्॥

प्रेक्षावतः प्रज्ञाशालिनो जनस्येव साक्षात्परमस्य ब्रह्मणः श्रीनिवासस्य विद्येव काव्यच्छन्दोव्याकरणादिविद्येव श्रीः लक्ष्मीः हृदयस्था चित्तधृता अयातयामा सतीत्यर्थः। अत्रार्थे हृदयशब्दाद्दिगादित्वाद्यत्। अन्यत्र हृदयप्रिया सती 'हृदयस्य

प्रियः' इति यत्। उभयत्र 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः। चेतोहृत् मनोहरं पद्यं श्लोकं काव्यमित्यर्थः। उज्ज्वलयाति प्रवर्तयतीति यावत्॥

श्रीपक्षे—च इतः हृत् इति त्रिपदतया छेदः। चशब्दो भिन्नक्रमः। इत इति सार्वविभक्तिकस्तासिः। अस्य श्रीनिवासस्येत्यर्थः। हृत् वक्षः पद्यं पदं चरणमस्मिन् दृश्यमिति पद्यं, यावकविलिप्तनिजचरणतलाङ्कितं सदित्यर्थः। पद्यं यथा स्यात्तथेति वा। 'पदमस्मिन् दृश्यम्' इति पदशब्दादुक्तार्थे यत्। उज्ज्वलयति च कौस्तुभाद्यपेक्षया उत्कृष्टत्वेन प्रकाशयति चेत्यर्थः। ज्वलतेर्णिजन्ताल्लुटि घटादित्वेन मित्त्वाद्ध्रस्वः। अत्र 'पूर्णं तेजस्स्फुरति भवतीपादलाक्षारसाङ्कम्' इत्यादिकमनुसन्धेयम्। अत्र प्रेक्षावत्परब्रह्मणोर्बिम्बप्रतिबिम्बभावः। हृद्या चेतोहृत्पद्यमिति श्लेषः, उज्ज्वलयतीत्युपचार इत्येतेषां मिश्रणम्॥

केवलबिम्बप्रतिबिम्बभाववस्तुप्रतिवस्तुभावकरम्भितबिम्बप्रतिबिम्बभावश्लेषानुगामितानां यथा—

**भवन इवाखिलभुवने सुदीप्तिनिधयस्सुकीर्तिशेवधयः। दीपा इवाभिरूपाश्श्रीपरिवृढ संचरन्ति भवदीयाः॥ ११६॥**

सुदीप्तिनिधयः दीपा इव सुकीर्तिशेवधयः भवदीयाः अभिरूपास्सन्तः भवनेष्विव भुवनेषु संचरन्तीति योजना। अभिरूपाः मनोहराः विद्वांसश्च। 'प्राप्तरूपसुरूपाभिरूपा बुधमनोज्ञयोः' इत्यमरः। अत्र भवनभुवनयोः केवलं बिम्बप्रतिबिम्बभावः, निधिशेवध्योः वस्तुप्रतिवस्तुभावः, तद्विशेष्यकयोः दी-

सिकीत्योर्बिम्बप्रतिबिम्बभावः, तत्करम्भितः अभिरूपा इति श्लेषः, संचरन्तीत्यनुगामित्वमित्येतेषां मिश्रणम् ॥

अनुगामित्वश्लेषबिम्बप्रतिबिम्बभावोपचाराणां मिश्रणं यथा—

**जगति समन्तात्प्रथितं प्रविततसारस्वतोदितं नियतम् । अमृतमिव त्वच्चरितं सुरा इव नराः पिबन्ति मुरवैरिन् ॥ ११७ ॥**

सारस्वतं सरस्वत आगतं 'तत आगतः' इत्यर्थे प्राग्दीव्यतीयोऽण् । उदितं उदयः आविर्भावो यस्य तत्, प्रविततं च तत् सारस्वतोदितं चेति विग्रहः, विस्तृतं दुग्धाब्धिजनितं चेत्यर्थः । पक्षे—प्रविततानि यानि सारस्वतानि सरस्वतीविभूतिभूतानि शास्त्राणि 'यत्सारस्वतदुग्धसागर' इत्यादिप्रयोगात् । तैः उदितं उदीरितम् । अत्र समन्तात्प्रथितत्वमनुगामी, प्रविततसारस्वतोदितमिति श्लिष्टः, अमृतचरितयोर्बिम्बप्रतिबिम्बभावापन्नः पिबन्तीत्युपचरितस्साधारणधर्म इत्येतेषां मिश्रणम् । एवमन्यैरपि व्यामिश्रणं सुधीभिरुन्नेयमतिभूमित्वादेषां दिङ्मात्रमुदाहार्ष्म । तथाचोक्तं काव्यालोके—

अपर्यन्तो विकल्पनां रूपकोपमयोर्यतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ इति ॥

'पूर्णायामेवेमे धर्मभेदाः । लुप्तायां तु नैवं भेदाः तस्यां साधारणधर्मस्यानुगामित्वनियमात्' इति चित्रमीमांसाकृतः । रसगङ्गाधरकारस्तु नेमं नियममभ्युपैति । तथाच तद्ग्रन्थः—"यच्चाप्पदीक्षितैः लुप्तायां तु नैवं भेदाः तस्यां साधारणधर्म-

स्यानुगामितानियमादिति। तन्न—'मलय इव जगति पाण्डुर्वल्मीक इवाधिधरणि धृतराष्ट्रः' इत्यत्रानुगामिधर्मस्याप्रत्ययाच्चन्दनानां पाण्डवानां सर्पाणां दुर्योधनादीनां बिम्बप्रतिबिम्बभावस्यैव प्रतिपत्तेः। न च शब्देनोपात्तत्वं बिम्बप्रतिबिम्बभावे तन्त्रमित्याग्रहो विदुषामुचितः, श्रौतत्वार्थत्वाभ्यां बिम्बप्रतिबिम्बभावस्य द्वैविध्यौचित्यात्। अतएवाप्रस्तुतप्रशंसादौ प्रकृताप्रकृतवाक्यार्थयोरौपम्यमवयवबिम्बप्रतिबिम्बभावमूलं संगच्छते" इत्यभाणीत्। अयं चात्र विशेषः—'उभयमध्ये प्रतिबिम्बस्यैवोपादाने उपमाने धर्महानिर्दोषः तत्र तत्स्थानीयधर्मानुक्तेः। बिम्बमात्रोपादाने तूपमाने धर्माधिक्यं दोषः उपमेये तत्स्थानीयधर्मानुक्तेः। तस्माद्बिम्बप्रतिबिम्बभावापन्नयोर्द्वयोरेव शाब्दत्वं द्वयोरेव वाऽर्थत्वं विवक्षितं, न त्वेकस्य शाब्दत्वमन्यस्यार्थत्वमिति तत्त्वम्' इति वदन्ति। एवंच क्वचिदर्थगम्योऽपि बिम्बप्रतिबिम्बभावापन्नो धर्मस्संभवतीति सिद्धम्॥

यथा—

संक्रन्दननन्दनवनभूमिरिवानन्दभूमिधरभूमिः।
व्यालेशाचलरमणः प्रालेयाचलवरेण्य इव॥११८

आनन्दभूमिधरश्शेषाद्रिः आनन्दाद्रिरिति तन्नामसु पाठात्। वचनं त्वेकोनत्रिंशे 'चिन्तामणिधरणीभृति' इति श्लोके उदाहाष्मार्धस्तात्। अत्र नन्दनवनशेषाचलभूम्योः हिमाचलश्रीनिवासयोश्चानुगाम्यादिधर्मान्तराप्रत्ययेन कल्पतरोश्श्रीनिवासस्य च गङ्गाया दयायाश्च बिम्बप्रतिबिम्बभावस्यैव गम्यमानत्वादुपमानिष्पत्तिः॥

यथावा—

पवनाशनाचलाग्रं धनाधिनाथस्य कोशभवन-
मिव । खनिरिव जलनिधितनयाप्रणयवती देवता
परा सैषा ॥ ११९ ॥

जलनिधितनयायां प्रणयवती परा देवता श्रीनिवास इत्य-
र्थः । अत्र शेषाचलाग्रधनदकोशभवनयोः खनिपरदेवतयोश्चानु-
गाम्यादिधर्मान्तराप्रतीत्या भगवतो निधेश्च गुणानां मणीनां च
बिम्बप्रतिबिम्बभावस्यैव प्रतीयमानत्वान्निष्पत्तिरुपमाया इति ध्ये-
यम् ॥

इत्यलङ्कारमणिहारे उपमासरः प्रथमः.

## अथोपमेयोपमा.

उपमेयोपमा सा स्यादुपमानोपमेययोः ।
पूर्वयोर्वैपरीत्यं चेत्परतः पुनरुच्यते ॥ २३ ॥

पूर्वोपमायामुपमेयस्य द्वितीयोपमायामुपमानत्वं तत्रोपमा-
नस्योपमेयत्वं च यत्र वर्ण्यते सा उपमेयोपमेत्यर्थः ॥

यथा—

श्रीवासहृदयलोला वननिधिबालेव कनति व-
नमाला । वनमालेव विराजति वननिधिबाला
विभासिगुणजाला ॥१२०॥

अत्र वननिधिबालावनमालयोर्वाक्यभेदेन उपमानत्वमुपमेयत्वं च वर्णितम् । तत्र प्रथमे वाक्ये श्रिय उपमानत्वं वनमालाया उपमेयत्वं, द्वितीये तु व्यत्ययेनेति लक्षणसमन्वयः । लक्ष्मीवनमालयोः कस्याश्चित्कयाचित्साहश्येऽभिहिते तस्या अप्यन्यया साहश्यमर्थसिद्धमपि कण्ठरवेणाभिधीयमानं तृतीयसदृशव्यवच्छेदं फलति । अत्रोदाहरणे प्रकृतयोरेवोपमानोपमेयत्व कल्पनं, प्रकृताप्रकृतयोरप्येषा सम्भवतीति कुवलयानन्दे स्थितम् ॥

तत्रेदमुदाहरणम्—

**घनपतिरिव भुवनपतिर्भुवनपतिरिवैष घनपतिर्लसति । चपलेवैषा कमला कमलेव चकास्ति चपलाऽपि ॥ १२१ ॥**

भुवनपतिः भगवान्, चपला विद्युत् । अत्र भुवनपतिः कमला च प्रकृतौ, एषः एषेति निर्देशात् । इयं च तावद्द्विविधा उक्तधर्मा व्यङ्ग्यधर्मा चेति । उक्तधर्मा तावदनुगाम्यादिभिः प्रागुक्तैर्धर्मैरनेकधा । तत्रानुगामी धर्मस्त्वव्यवहितोदाहरणे लसति चकास्तीत्युक्त एव ॥

बिम्बप्रतिबिम्बभावापन्नो धर्मो यथा—

**शरदम्बुदपरिवीतः कलशाम्बुधिराजवीचिमध्यगतः । भुजगधरो मन्दर इव स मन्दरो भुजगधर इव विभायात् ॥ १२२ ॥**

विभायादिति सम्भावनायां लिङ् । अत्र परिवीतत्वमध्यगतत्वाभ्यां विशेष्याभ्यां परस्परं वस्तुप्रतिवस्तुभावमापन्नाभ्यां

करम्भितः शरदम्बुदकलशाम्बुधिवीचिरूपः परस्परं बिम्बप्रतिबिम्बभावमापन्नो धर्मः ॥

केवलं वस्तुप्रतिवस्तुभावापन्नो यथा—

कमलालयाकपोलौ विमलौ सुस्निग्धवज्रमुकुरसखौ । सुस्निग्धवज्रमुकुरौ सुविमलकमलालयाकपोलनिभौ ॥ १२३ ॥

अत्र विमलत्वसुस्निग्धत्वयोः केवलं वस्तुप्रतिवस्तुभावः ॥

उपचरितो यथा—

मधुमथनभक्तचरणा विधुकिरणा इव जगद्विशदयन्ति । विधुकिरणा इव शिशिरिममसृणा मधुमथनभक्तचरणाश्च ॥ १२४ ॥

अत्र शिशिरिममसृणा इत्येतत्पूर्वार्धेऽप्यन्वेतव्यम् । शिशिरिममसृणा विशदयन्तीति चोपचरितः । भक्तचरणा इत्यत्र चरणशब्दो गुरुचरणा इत्यादाविव पूज्यवाची ॥

श्लेषात्मको यथा—

विकसितपुष्करविसृमरतररसशीकरतरङ्गितात्मरुचिः । करिणी वा पुष्करिणी पुष्करिणीवाहिशैलगा करिणी ॥ १२५ ॥

अहिशैलगा पुष्करिणी स्वामिपुष्करिणी करिणी वा, वाशब्द उपमावाचकः । विकसितानि यानि पुष्कराणि कमलानि

तेभ्यः, अन्यत्र विकसितं यत्पुष्करं शुण्डाग्रं तस्मात् विसृमरैः रसशीकरैः मकरन्दकणैः सलिलकणैश्च तरङ्गिता अतिशायिता आत्मनो रुचिः प्रभा स्वादुता च यस्यास्सा तथोक्ता । अत्र विकसितेत्यादिश्लेषरूपः पुष्करिणीकरिण्योस्समानधर्मः ॥

व्यङ्ग्यधर्मो यथा—

कल्पलतेवाम्भोनिधिसुताऽब्धिदुहितेव हन्त कल्पलता । नन्दनवनमिव शौरेर्हृदयं हृदयमिव नन्दनवनं च ॥ १२६ ॥

इयमेव परम्परितरूपाऽपि । एवं धनपतिरिवेति प्रागुदाहृते पद्येऽपि । एषा सर्वाऽपि स्फुटे वाक्यभेदे प्रपञ्चिता ॥

आर्थे तु वाक्यभेदे यथा—

यद्वेङ्कटगिरिभाग्यं सौभाग्यं दौग्धसैन्धवं यदपि तन्मिथुनं भुवनेऽस्मिन्नुन्मिषति परस्परोपमैश्वर्यम् ॥

अत्र परस्परोपमैश्वर्यमिति संक्षिप्ताद्वाक्यादिदमीयमैश्वर्यमेतदीयैनैश्वर्येण एतदीयमिदमीयेन च सदृशं भवतीति वाक्यद्वयं विवरणरूपमुन्मिषति । सौभाग्यं दौग्धसैन्धवमित्यत्र 'हृद्भगसिन्ध्वन्ते' इत्युभयपदवृद्धिः । एवं पूर्णालुप्तादयोऽप्यस्या उपमाया इव प्रायशस्सर्वेऽपि भेदास्सम्भवन्ति ॥

तत्र दिङ्मात्रमुदाह्रियते—

नीतिर्यथा विनीतिर्यथा विनीतिस्तथैव नीति-

रपि । ख्यातिरिव भूतिरच्युत भूतिरिव ख्यातिरपि तव जनानाम् ॥ १२८ ॥

आयत्या तुल्याऽऽहृतिराहृत्याऽप्यायतिस्तथा तुल्या । सन्नतिरुन्नतिसदृशी सन्नतिसदृशी तथोन्नतिश्चापि ॥ १२९ ॥

धृतिवन्मतिर्विजयते मतिवद्धृतिरहिपतिक्षितिधरेन्दो । एतावती समृद्धिस्स्फीता भविता किमभवदीयानाम् ॥ १३० ॥

इदं पद्यत्रयमेकान्वयत्वाद्विशेषकम् । 'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिश्श्लोकैर्विशेषकम्' इति लक्षणात् । अन्तिमपद्ये विद्यमानं विजयत इत्येतत् पूर्वेषु सर्वेष्वपि वाक्येषु समानधर्मतयाऽन्वेति । अत्र श्रौतीं ताद्धितगामन्तरेण यथाक्रमं प्रथमेऽर्धे श्रौती वाक्यगा, द्वितीयेऽर्धे श्रौती समासगा इवेन सह समासविधानात्, तृतीयेऽर्धे आर्थी वाक्यगा, तुरीयेऽर्धे आर्थी समासगा, पञ्चमे आर्थी तद्धितगा चेति श्रौत्यार्थी च पञ्चविधा पूर्णोपमेयोपमा द्रष्टव्या । अत्रैव तृतीयश्लोकप्रथमार्धे 'धृतिदेशीया मतिरपि मतिदेशीया धृतिः फणिगिरीन्दो' इति पठिते धर्मस्यानुपादानात्पञ्चविधाऽपि वाचकलुप्ता भविष्यति । श्रौती धर्मलुप्ता तु ताद्धितगा न संभवतीत्यवोचाम ॥

मेरवति वेङ्कटाद्रिर्मेरुश्श्रीवेङ्कटाद्रयति कामम् । गङ्गायतेऽभ्रगङ्गा सुरपथगङ्गायते गङ्गा ॥ १३१ ॥

अभ्रगङ्गासुरपथगङ्गेत्याभ्यां वेङ्कटाद्रिगता आकाशगङ्गोच्यते 'स्वामिपुष्करिणी चैव वियद्गङ्गा ततःपरम्' इति ब्राह्मोक्तेः । अत्र क्विपि क्यङि च धर्मवाचकलुप्तोपमेयोपमा । अनयैव दिशा प्रतिभाशालिभिरन्येऽपि तत्प्रभेदा यथासम्भवमुन्नेयाः ॥

इत्यलङ्कारमणिहारे उपमेयोपमासरो द्वितीयः.

## अथानन्वयसरः.

### अनन्वयो यदेकस्यैवोपमानोपमेयता ॥

यत्रैकस्यैवोपमानोपमेयभावो निबध्यते तत्रानन्वयः । वर्ण्यमानमपि स्वस्य स्वेन साधर्म्यं नान्वेतीति व्युत्पत्तेः । यथा रुद्ररोदनवपोच्छेदनाद्यर्थवादे स्तुतिनिन्दाभूतस्यासदर्थस्य निबन्धनं स्तुतिनिन्दयोरुपयुज्यते तथैवात्रानन्वयिनोऽपि स्वस्य स्वेन सादृश्यवर्णनं द्वितीयसब्रह्मचारिव्यवच्छेदेनानुपमत्वद्योतनायोपयुज्यते । एवंच द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतमेकोपमानोपमेयकं सादृश्यमनन्वय इति पर्यवस्यति । स च कस्याप्युपस्कारकत्वेऽलंकारः । अन्यथा तु स्ववैचित्र्यमात्रविश्रान्तः । एवमलंकारान्तरेष्वपि ॥

**सविधे विचरति भगवति समुदितमेचकिम वृषशिखरिशिखरम् । प्रावृषि विजृम्भमाणैरम्भोदैरिव करम्बितं भाति ॥ १३२ ॥**

अत्र श्रीनिवासदिव्यविग्रहरुचिमेचकितं भुजगशिखरिशिखरं स्वेनैव प्रावृषि नीलाम्बुदैः करम्भितेनोपमीयत इति तत्साद‍ृश्यवारणाय भूतान्तं विशेषणम् । न ह्यत्र साद‍ृश्यवर्णनस्य फलं द्वितीयसब्रह्मचारिव्यवच्छेदः तस्याप्रतिपत्तेः ॥

**वदने पृदाकुगिरिवरसदनस्य हरेस्स्मितप्रभा लसति। शारदरविकरविकसितनीरज इव चन्द्रचन्द्रिका सान्द्रा ॥ १२३ ॥**

इति कल्पितोपमानिकायामुपमायामतिप्रसङ्गवारणायैकोपमानोपमेयकमिति । अत्रासत उपमानस्य कल्पनया सदुपमानं नास्तीति द्वितीयसद‍ृशव्यवच्छेदस्यास्ति प्रतीतिः ॥

उदाहरणं—

**विधुतत्रिविधावधिकं वेदस्त्वां वदतु निस्समं भगवन् । निपुणं विचिन्तने पुनरुपमा भवतोऽस्ति ननु भवानेव ॥१२४॥**

विधुतः त्रिविधोऽवधिः देशकालवस्तुपरिच्छेदो यस्य तं तथोक्तं 'सत्यं ज्ञानमनन्तम्' इति श्रुतेः । त्वां वेदः 'न तत्समश्चाभ्यधिकश्च द‍ृश्यते' इति श्रुतिः निस्समं द्वितीयसद‍ृशवस्तुरहितं वदतु । उपमासद‍ृश इत्यर्थः 'प्रतिकृतिरुपमोपमानं स्यात्' इत्यमरः । 'सहकार न प्रपेदे मधुपेन तवोपमा जगति' इति प्रयोगश्च ॥

यथा वा—

**अखिलं भुवनं विचितं तेषां स्वरूपमपि विदि-**

**तम् । अर्थिजनेप्सितदाने तीर्थगिरीश त्वमेव तव सदृशः ॥१३५॥**

तीर्थगिरिरिति शेषाद्रेरेव नामान्तरम् । 'सर्वतीर्थमयत्वाच्च तीर्थाद्रिं प्राहुरुत्तमाः' इति वाराहे तन्नामनिर्वचनात् । पूर्वस्मिन् पद्ये सर्वोत्कृष्टत्वरूपो धर्मोऽनुगामी व्यङ्ग्यः, इह तु अर्थिजनेप्सितदाने इति वाच्य इति वैलक्षण्यम् । उभयत्रापि भगवद्विषयकरत्युपस्कारकत्वादलंकारोऽयम् । बिम्बप्रतिबिम्बभावापन्नो धर्मस्त्वत्र नास्ति, तस्मिंश्च सति किंचिद्धर्मावच्छिन्नेन स्वेन सादृश्यस्य धर्मान्तरावच्छिन्ने स्वस्मिन्नन्वये बाधकाभावात्सदृशान्तरव्यवच्छेदाप्रतिपत्तेश्चानन्वय एव न स्यात् । अयं चानन्वयः पूर्णो लुप्तश्चेति तावद्द्विविधः । पूर्णस्तूपमावत् षड्विधोऽपि संभवति॥

यथा—

**श्रीश्श्रीर्यथा घनकृपा कमला कमलेव पूर्णसौभाग्या । नाथोऽच्युतेन सदृशोऽच्युत एव हरिर्हितो हरिसदृक्षः ॥ १३६ ॥**

**श्रीवेङ्कटाद्रिपतिवद्ध्येयश्श्रीवेंकटाद्रिपतिरेव । श्रीश्रीनिवासपदवद्भक्तिनश्श्रीनिवासपद एव ॥**

अत्र युग्मे आद्यपादे श्रौतः पूर्णो वाक्यगोऽनन्वयः । द्वितीयपादे समासगश्श्रौतः पूर्णः । इवेन सह समासविधानात् । नाथ इत्याद्यच्युत एवेत्यन्ते आर्थस्समासगः पूर्णः । शिष्टे तुरीयपादे हरिरित्यादौ समासग आर्थः पूर्णः । द्वितीयश्लोकाद्यार्धे 'तेन तुल्यम्' इति वतेस्सत्त्वादार्थस्तद्धितगः पूर्णः । तद्द्विती-

यार्थे 'तत्र तस्येव' इति वतेस्सत्त्वाच्छ्रौतस्तद्धितगः पूर्ण इति ध्येयम् । लुप्तेष्वपि धर्मलुप्तः पञ्चविधोऽपि संभवति, स च प्रागुक्तपद्यैरेव धर्मवाचकपदमपनीय कमला यथैव कमले- त्यादिरीत्या पदान्तरन्यासे भविष्यति ॥

वाचकलुप्तोऽपि तथा संभवति, यथा—

वेङ्कटभूमिधरोऽयं वेङ्कटभूमीधरायते सुमहान्।
तत्र वसन् भगवानपि तत्रवसद्भगवदुज्ज्वलो जयति॥

अत्र क्यङ्समासयोर्वाचकलुप्तः—

वृषभाद्रिनाथदर्शी वृषभाचलनाथमग्रतः पश्यन्।
विततप्रमोदबाष्पस्सततं नन्दामि मन्नन्दम्॥१३९

वृषभाद्रिनाथमिव वृषभाद्रिनाथदर्शी पश्यन् अहमिव म- न्नन्दं नन्दामि । अत्र कर्मकर्तृणमुलोर्वाचकलुप्तः ॥

कौस्तुभति कौस्तुभोऽयं लक्ष्माणति लक्ष्म हारति च हारः । वक्षसि फणिगिरिबन्धोस्सिन्धो- र्दुहिता च सिन्धुदुहितरति ॥ १४० ॥

अत्र धर्मवाचकयोर्लोपः । अयमेव मालारूपोऽप्यनन्वयः ॥

सलिलनिधिं गाम्भीर्ये तुलयन्तस्सन्ति कति कति न देवाः। एष तु शेषगिरीशश्शेषगिरीशान- गाम्भीर्यः ॥ १४१ ॥

अत्र वाचकधर्मोपमानानां लोपः। अत्र चोपमानलुप्तादयोऽन्ये भेदास्त्वसंभवादचारुत्वाच्च नोदाहृताः॥

इदं तावदत्रावधेयम्—प्रायेणोपमादिरलङ्कारो यदा समग्रेण वाक्येन प्रधानतया ध्वन्यते तदा परास्तालङ्कारभावो ध्वनिव्यपदेशभाग्भवति। अस्मिंश्चालंकारव्यपदेशः कदाचिदप्यलङ्कारभावमनापन्नेषु समुद्गकाद्यन्तर्निहितेषु हारकेयूरकटककुण्डलादिष्विवालंकुर्वाणहारादिगतधर्ममात्रसंस्पर्शनिबन्धनः। तत्रादावुपमाध्वनिरुदाहार्या। एषा चोपमा क्वचिच्छब्दशक्तिमूलानुध्वननविषयः, क्वचिदर्थशक्तिमूलानुध्वननविषयः॥

तत्राद्या यथा—

**कटकोज्ज्वलपुन्नागो गन्धर्वकुलैरुदीर्णसौभाग्यः।**
**धरणीभृच्चूडामणिरनणीयश्श्रीनिवासतां धत्ते॥**

कटकेषु सानुषु राजधानीषु च उज्ज्वलाः पुन्नागाः तरुविशेषाः पुंगजाश्च यस्य स तथोक्तः। 'कटकं वलये सानौ राजधानीनितम्बयोः' इति विश्वः। गन्धर्वाणां देवयोनिविशेषाणां तुरगाणां च कुलैः। धरणीभृतां गिरीणां नृपाणां च चूडामणिः अनणीयान् श्रीनिवासो यस्मिन् तस्य भावं अनणीयस्याः श्रियः संपदः निवासतां धत्ते॥

यथा वा—

**तापातुरा निकामं तमसा प्रत्यस्तदृष्टयः स्थित्वा। दैवाद्विधूदये सति नन्दन्तितरां द्विजाः कतिचिदेव॥ १४३॥**

निकामं तापैः आध्यात्मिकादिभिः आतपजनितैश्च आतुराः, तमसा तमोगुणेन तिमिरेण च प्रत्यस्ता निरस्ता दृष्टिः ज्ञानं चक्षुश्च येषां ते तथोक्ताः स्थित्वा कंचित्कालमिति भावः। दैवात् भाग्यविशेषात् विधोः भगवतः उदये अनवरतभावनामूलकप्रत्यक्षतापत्तौ। पक्षे—विधोः चन्द्रमसः आविर्भावे सति कतिचिदेव द्विजाः भाग्यशालिनो विप्रादय एव नान्ये भाग्यदवीयांस इति भावः। पक्षे—चकोरादयः खगविशेषा एव नन्दन्ति अत्रोदाहरणद्वयेऽनेकार्थानामपि पदानां प्रकरणेन कृतेऽपि शक्तिसंकोचे तन्मूलकेन ध्वननेन प्रतीयमानस्य महाराजरूपस्य खगविशेषरूपस्य चार्थान्तरस्याप्रस्तुतस्याभिधानं मा प्रसाङ्क्षीदिति प्रकृताप्रकृतयोरुपमानोपमेयभावः प्रधानवाक्यार्थतया कल्प्यते। अत्र श्लिष्टानां कटकादिशब्दानां नितम्बादिशब्दपारवृत्त्यसहिष्णुतया शब्दशक्तिमूलानुध्वननविषयोऽसावुपमा॥

अर्थशक्तिमूलानुध्वननविषयो यथा—

**असमानरोचिरहमित्यभिमानस्तव घनाघन महीयान्। ननु नामाढौकिष्ठा न मनागपि वा फणाभृदचलशिखाम्॥ १४४॥**

यथा वा—

**रत्नाकर इति गर्वं यत्नाद्विजहीहि मम गिरो दन्वन्। न चलसि पदात्पदं वा ना(का)द्राक्षीश्श्रीनिवासकोशगृहम्॥ १४५॥**

अत्र मूढादिपदाप्रयोगादसूयादेरप्रत्ययात्प्राधान्येनार्थशक्त्या उपमैव ध्वन्यते॥

एवम्—

गङ्गां कुतो जिगमिषस्यङ्गात्र विसृत्वरीमिमां स्वैरम्। सङ्गाहस्व वृषाचलशृङ्गारदयाझरीमिमां गाढम् ॥ १४६ ॥

इत्यत्राप्यर्थशक्तिमूलोपमाध्वनिर्द्रष्टव्या ॥

अलङ्कारेणोपमाध्वनिर्यथा—

फणिशिखरिणि विलसन्तं वीक्ष्य हरिं तं रमा-समाश्लिष्टम्। सचपलजलदनिरीक्षणनिरास्थतां दधिरे मयूरगणाः ॥ १४७ ॥

अत्र मयूराणां सविद्युज्जलदनिरीक्षणास्थासम्बन्धेऽपि तद्-संबन्धोक्तिरूपातिशयोक्त्या भगवतश्श्रीनिवासस्य तदुपमा ध्व-न्यते एवमुपमाध्वनिदिगुदाहृता ॥

अथोपमेयोपमाध्वनिदिगुदाह्रियते—

शरदिजविकर्तनस्य हि मुरवैरिसुदर्शनो द्विती-योऽयम्। मुररिपुसुदर्शनस्य तु शरदुदितविकर्त-नोऽपि तथा ॥ १४८ ॥

अत्र द्वितीयशब्दस्य सादृश्यविशिष्टे शक्त्यभावाद्व्यक्तिरेव ॥

यदि तु लक्षणा तदेदमुदाहरणम्—

हरिपदयुगनखरेखा शरदुदितसुधामयूखरेखा च। गर्वायेतेऽन्योन्यं लावण्याध्यापनाय भृशमन्तः ॥

अत्र हरिपदयुगनखरेखादिकर्तृकस्यान्योन्याध्यापनस्य बाधालावण्यसंक्रान्तिविशेषस्य लक्षणया प्रतीयमानस्य प्रयोजनं स्वप्रयोज्यान्योन्योपमानोपमेयभाव इति ध्येयम् ॥

अथानन्वयध्वनिरुदाह्रियते—

दर्शंदर्शं सम्यङ्मर्शंमर्शं मयाऽद्य विश्रान्तम् ।
भिन्नतया पन्नगपतिसन्नगनेतुस्तुला यतो नैक्षि ॥

अत्र भिन्नतया तुला नैक्षीत्यनेन अभिन्नतया ऐक्षीति ध्वन्यते ॥

यथा वा—

कति कति न सन्ति गिरयः कतमो दध्रेऽच्युतेन चरमाङ्गे । प्रादुरकरोच्च कमलां येनान्ये मन्दरस्य सदृशास्स्युः ॥ १५१ ॥

अत्र को वा मन्दरेतरो महीधरो भगवता चरमाङ्गे धृतः को वा श्रियमब्धेः प्रादुरभावयत् येनान्ये गिरयो मन्दरसदृशास्स्युरित्यर्थेन तस्य पुनर्भगवता चरमाङ्गधृतत्वे श्रीप्रादुर्भावयितृत्वे च स एव तत्तुल्य इत्यर्थोऽनन्वयात्मा मन्दरानिरुपमत्वपर्यवसायी अन्यपदमहिम्ना व्यज्यते ॥

एवं—

परमं पदमपि हित्वा चिरमवसत्कस्य शिख-

रिणश्शिखरे। परमस्सरमस्स पुमान् फणिधर यस्मिंस्तवोपमां विद्मः ॥ १५२ ॥

इत्यत्राप्यनन्वयध्वनिर्द्रष्टव्यः । अत्र 'मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम्' इत्याद्यर्थोऽनुसंहितः ॥

इत्यलङ्कारमणिहारे अनन्वयसरस्तृतीयः.

## अथासमालंकारसरः.

उपमायास्सर्वथैव निषेधोऽसम उच्यते ॥२४॥

सर्वथैवोपमानिषेधोऽसमाख्योऽलंकारः । अयं चानन्वये व्यङ्ग्योपि तच्चमत्कारानुगुणतया रूपकदीपकादावुपमेव न भजते पृथगलंकारव्यपदेश्यताम् । वाच्यतायां तु स्वातन्त्र्येण चमत्कारितया पृथग्व्यपदेशभाग्भवति ॥

यथा—

सब्रह्मचारि किंचिन्न ब्रह्मापीक्षितुं तव पटीयान्। यस्य तव निस्समत्वं निस्संदिग्धं श्रुतिर्ब्रवीति हरे ॥१५३॥

यथा वा –

ऐश्वर्यवीर्यधैर्यस्थैर्यौदार्यादिमैर्गुणैर्भगवन् । कस्त्वत्तुलनाकलनायोग्यस्संभाव्यतां कदा क नु वा॥

नासीन्नास्ति च भवतो नाथ समं वस्तु वेधस-स्सर्गे । अग्रेऽपि यथापूर्वं स्रष्टाऽयं किं तदाऽपि त-ल्लभ्यम् ॥ १५५॥

तद्वस्तु नैव ससृजे न सृज्यते स्रक्ष्यतेऽपि वि-श्वसृजा । यत्र भवतः प्ररोहेदुपमालवलेशगन्धो-ऽपि ॥ १५६ ॥

यथा वा—

अस्ति समानं शौरेर्वस्त्विति मूर्खो ब्रवीति चे-द्भूताम् । यत्र क्व वा समानं लभेत किमसावट-न्नपि जगन्ति ॥ १५७॥

सोऽसौ मूर्खः जगन्ति सर्वाण्यटन्नपि यत्र क्व वा मानं भगवत्समानवस्तुसत्तायां प्रमाणं लभेत किं न लभेतैवेत्यर्थः । यद्वा मानं पूजां लभेत किं, भगवत इतरसाधर्म्यं वक्तुः क्वापि पूज्यता न स्यादेवेति भावः । पक्षे असौ मूर्खः समानं भग-वतस्सदृशं वस्तु यत्र क्व वा न लभेतैवेत्यर्थः । अत्र श्लेषच्चम-त्कारः पूर्वोदाहरणेभ्यो विशेषः ॥

यथा वा—

त्वं सद्वितीय एव हि सृजसि जगत्पासि संह-रिष्यसि च । तदपि श्रुतिरब्जेक्षण वदति त्वाम-द्वितीयमेव बत ॥ १५८॥

सद्वितीयः द्वितीयवस्तुना सहितः चिदचिद्विशिष्ट एवेत्यर्थः । द्वितीयया सहधर्मिण्या श्रिया सहित एवेत्यप्यर्थः । श्रीविशिष्टस्यैव जगज्जन्मादिकारणत्वात्सद्वितीय एव सृजसीत्याशुक्तिः । तदपि तथाऽपि श्रुतिः 'एकमेवाद्वितीयम्' इति श्रुतिः अद्वितीयं द्वितीयवस्तुरहितं असदृशमिति तु वास्तवार्थः ॥

यथा वा—

**असदृश इति निगदंस्त्वां जनोऽभिनन्द्येत सदृशमाहेति । सदृगस्ति तवेति वदन्न सदृगिति जनैर्विनिन्द्यते चित्रम् ॥ १५९ ॥**

हे भगवन्! त्वां असदृश इति वदन् जनः सदृशमाह अनुरूपं युक्तमाहेति जनैरभिनन्द्यते। तवासदृशत्वस्य वस्तुसतो यथावदुक्तत्वादिति भावः । तव सदृक् सदृशः अस्तीति वदन् जनः न सदृक् सदृशो न योग्यो न अननुरूपार्थकथनादिति भावः। दृशा सह वर्तत इति सदृक् न अन्ध एव ज्ञानहीन एवेत्यर्थः। यद्यस्य दृष्टिरेवाभविष्यत्तर्हि तव सदृगस्तीति नावदिष्यदेवेति भावः । इति जनैर्विनिन्द्यते, चित्रं असदृशं वक्तुस्सदृशवक्तृत्वेन सदृशं वक्तुरसदृक्त्वेन च कथनमाश्चर्यावहमिति भावः । अनयोरुदाहरणयोःश्लेषमूलकाविरोधसंकीर्णत्वं पूर्वेभ्यो वैलक्षण्यं बोध्यम् ॥

एवम्—

**न किमपि कौस्तुभतेजस्समभवद्भवति वाऽथ भविता वा। यत्र किल मित्रशशधरकृशानुतारास्स्फुलिङ्गकाकाराः ॥ १६० ॥**

**नासीदस्ति भविष्यति विधातृसर्गे क्व वाऽपि मादृक्षः । त्वयि सति शुभगुणविपणौ योऽन्यं पिपणायिषामि कृपणमनाः ॥ १६१ ॥**

इत्यादावपि काव्यलिङ्गादिसंकीर्णता द्रष्टव्या । सर्वेष्वेतेषूदाहरणेषु सर्वथैवोपमाननिषेधादसमालंकारः, क्वचित्कस्सदृशप्रतिषेध उपमानलुप्ताया विषयः । अस्य त्वात्यन्तिकसदृशप्रतिषेध इति नोपमानलुप्तोपमया चारितार्थ्यम् । सर्वात्मनैवोपमानप्रतिषेधेन सादृश्यस्याप्रतिष्ठानान्नात्रोपमागन्धोऽपि ।

नन्वसमालंकारध्वननेनैव चमत्कारोपपत्तेरनन्वयस्य पृथगलंकारता कथमिति चेत्—सत्यं, दीपकादेरप्युपमाभिव्यक्त्यैव चमत्कारोपपत्तौ कथंनाम पृथगलंकारत्वमिति तुल्यम् । न च दीपकादावुपमाव्यङ्ग्यत्वेऽपि गुणीभावात् प्रकृते तु स्वसादृश्यस्य स्वस्मिन्नतितमां तिरस्कारेणासमालंकारस्यैव मुख्यतया ध्वननाद्वैषम्यमिति वाच्यम् । यथा हि दीपकसमासोक्त्यादौ गुणीभूतव्यङ्ग्यसत्त्वेऽप्यलंकारत्वं न हीयते एवमनन्वये प्रधानव्यङ्ग्यसत्त्वेऽपि न किंचिद्विरुद्धम् । अनन्वयशरीरस्य सादृश्यमात्रस्य वाच्यत्वेन वाच्यालङ्कारव्यपदेशोऽपि मुख्य एव । दीपकाद्यलङ्कारकाव्ये गुणीभूतस्य व्यङ्ग्यस्य सत्त्वादस्तुनाम गुणीभूतव्यङ्ग्यत्वम् । ध्वनित्वं पुनर्न काप्यलङ्कृतिकाव्ये दृष्टमिति चेत् पर्यायोक्तसादृश्यमूलाप्रस्तुतप्रशंसादिकाव्ये ध्वनित्वस्य स्फुटत्वात्, इति वदन्ति ॥

**प्राञ्चो नेदमलङ्कारान्तरमित्येव मन्वते ॥**

अयमसमालंकारो व्यज्यमानोऽपि सम्भवति । यथा—

सर्वज्ञोपि गिरीशस्तव सदृशं वस्तु किमपि निजिगदिषुः। श्रीश तदप्रतिपत्तेरद्यापि स्थाणुतां न विजहाति ॥ १६२ ॥

अत्र यस्त्वां तुष्टूषुस्सर्वज्ञो गिरीशोऽप्येतावन्तं समयं त्वत्तुल्यवस्त्वप्रतिभानात् स्थाणुरेवासीत् सोऽग्रेऽप्येवमेव स्यात्। अन्यथाभावे मानाभावादिति सर्वथैव त्वत्सदृशं वस्तु नैवास्तीति गम्यते। एवंच व्यज्यमानोऽप्यत्रासमालंकारः प्रधानीभूतभगवत्स्तुत्युत्कर्षोपस्कारकतयाऽलंकार एव ॥

मुख्यतया ध्वन्यमानो यथा—

दर्वीकराद्रिशेखर सर्वं पदमर्थवत्त्वया व्यरचि। तुल्याभिधायि तु पदं कालत्रितयेऽपि नार्थवदहो ते ॥

त्वया सर्वं पदं सुप्तिङन्तात्मकं इन्द्रादिस्थानं च अर्थवत् अभिधेयवत् विभववच्च व्यरचि। ते तव तुल्याभिधायि सदृशार्थाभिधायि पदं तु कालत्रितयेऽपि नार्थवत् न धनवत् नाभिधेयवच्च कस्मादित्याश्चर्यम् ॥

यथा वा—

गगनलिखितेषु पन्नगनगवरधौरेय चित्रपुरुषेषु। स गणयितव्यः पुरुषोऽनुगुणो यस्त्वदुपमालवस्यापि ॥ १६४ ॥

अनयोरुदाहरणयोरसमत्वं प्राधान्येन व्यज्यते। अयं क्वचिदुपमानस्य निषेधात्, क्वचिच्च साक्षादुपमाया एव। तत्राद्य उपदर्शितः ॥

द्वितीयो यथा—

अन्तर्बहिरपि कमलाकान्त समन्तात्त्वयैव प-
रिपूर्णम् । जगदिदमखिलं भवतो जगदीश तुला
पदं क निदधीत ॥ १६५॥

हे जगदीश! भवतस्तुला उपमा कर्त्री क पदं निदधीत। सर्वस्य जगतस्त्वयैवान्तर्बहिश्च परिपूर्णत्वात्त्वदुपमायाः पदन्यासस्यापि नावकाश इति भावः॥

इत्यसमालंकारसरश्चतुर्थः.

## अथोदाहरणालंकारसरः.

सामान्योक्तसुबोधाय तदेकांशनिरूपणात् ।
उक्ते तयोरवयवावयवित्वे उदाहृतिः ॥ २५॥

सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोस्सामान्यैकदेशयोरवयवावयविभावे उक्ते उदाहृतिः उदाहरणं नामालंकारः । अत्रार्थान्तरन्यासवारणायोक्त इति। वचनं च इवयथानिदर्शनदृष्टान्तप्रमाणोदाहरणसाक्ष्यादिशब्दैः काव्येषु व्यक्तम्। अर्थान्तरन्यासे ह्यवयवावयविभावो व्यङ्ग्यः। न च इवयथाशब्दयोस्सादृश्यवचनयोरवयवावयविभावे विशेषसामान्यात्मके नास्ति वृत्तिरिति वाच्यम्। लक्षणायास्साम्राज्यात्। अन्यथा ह्युत्प्रेक्षाबोधकताऽपि दुर्घटा स्यात् । अत्रालंकारे सामान्यविशेषयोर्विशेषणानि पृथग्वा सकृद्वा निर्दिश्यन्त इति ध्येयम्॥

यथा—

मलिनमपि गुणमहिम्ना महति पदे वस्तु मान्यतामेति । मृगनाभिस्सुरभितया भगवत इव निटिलफलकसीमायाम् ॥ १६६ ॥

न त्वत्र मलिनवस्तुमृगनाभ्योरुपमा शक्या वक्तुम् । तयोस्सामान्यविशेषभावेन सादृश्यस्यानुन्मेषात् । तथा सति तु इवादिशब्द इव सदृशादिशब्दा अप्यलंकारेऽस्मिन् प्रयुज्येरन् । अत्र मृगनाभिसुरभिताभगवद्वदनानि मलिनवस्तुगुणमहिममहापदानां विशेषाः । अत्र पद्ये इवशब्देनावयवावयविभावोक्तिः ॥

यथा वा—

संसर्गान्महतामिह सर्वज्ञेनापि लाल्यते कश्चित् । गरुडध्वजपदसङ्गाद्गङ्गापूरो यथा पुरामरिणा ॥

अत्र गरुडध्वजपदसङ्गादयो महत्संसर्गादीनां विशेषाः । अत्र यथाशब्देनावयवावयविभावोक्तिः ॥

यथा वा—

लोकोत्तरवस्तु वहन्नेको लोके महोन्नतिं धत्ते । काकोदरशिखरीन्द्रो निदर्शनं बिभ्रदत्र लोकेशम् ॥

एक इत्यस्य पदार्थ इति विशेष्यमुपस्कार्यम् । एवं पूर्वपद्ये कश्चिदित्यस्यापि । अत्र निदर्शनशब्देन ॥

यथा वा—

यत्र क्व वाऽस्तु जातस्तेजस्वी भवति भूषणं

महताम् । उदधौ जातश्श्रीपत्युरस्स्थितः कौस्तु-
भोऽत्र दृष्टान्तः ॥ १६९ ॥

अत्र उदधिजातकौस्तुभौ यत्र क्व वा जाततेजस्विनोर्विशे-
षौ । एवमग्रेऽपि द्रष्टव्यम् । अत्र दृष्टान्तशब्देन ॥

यथा वा—

उत्तमचेतनसंश्रयदत्तातिशयो गिरीशतां धत्ते ।
कश्चिदचेतनभावेऽप्याश्चर्यमिह प्रमाणमहिशैलः ॥

उत्तमचेतनः श्रेष्ठो जीवः, अन्यत्र भगवानित्यर्थः । गिरी-
शतां वाग्विषये ईश्वरत्वं, अन्यत्र शैलेन्द्रताम् । अविद्यमाना
चेतना ज्ञानं यस्य तस्य भावे अज्ञत्वे इत्यर्थः । अन्यत्र चेतन-
भिन्नत्वे गिरेरचेतनत्वादित्यर्थः । अत्र प्रमाणशब्देन ॥

यथा वा—

त्वामन्तर्निदधानश्श्रीमन् खेटोपि भवति ते-
जस्वी । अम्बुजकदम्बबन्धोर्बिम्ब इह स्यादुदाहर-
णम् ॥ १७१ ॥

खेटः कुत्सितः 'कुपूयकुत्सितावद्यखेटगर्ह्याणकास्समाः'
इत्यमरः । पक्षे—खे अटतीति खेटः गगनचारीत्यर्थः । 'तत्पुरुषे
कृति' इत्यलुक् । अत्रोदाहरणशब्देनावयवावयविभावकथनम् ॥

यथा वा—

अपि बहुषु वस्तुषु महानादत्ते स्वानुरूपवस्त्वे-

व । उदधिभवेष्विह कमलामुपाददानोऽत्र माधवस्साक्षी ॥१७२॥

आदौ तामसहिततां दधदपि वस्तु त्वदाश्रितं स्याच्चेत् । अन्ते रसवद्भविता हरिदयिते तत्र साक्षि तामरसम् ॥ १७३ ॥

आदौ प्रथमं तामसेभ्यो हिततां दधदपि । पक्षे तामेत्याभ्यां वर्णाभ्यां सहिततां दधदित्यर्थः । अन्ते रसवत् ब्रह्मानुभववत् 'रसो वै सः' इत्यादिश्रुतेः । रसशब्दो ब्रह्मपरः । पक्षे—अन्ते चरमभागे रसाभ्यां रेफसवर्णाभ्यां युक्तमित्यर्थः । अत्र पद्यद्वयेऽपि साक्षिशब्देनावयवावयविभाववचनम् ॥

इवयथादिशब्दप्रयोगे सामान्यार्थप्राधान्यं वाक्यैक्यम् । निदर्शनदृष्टान्तादिशब्दप्रयोगे तु विशेषप्राधान्यं वाक्यभेदश्च विशेषः । प्राञ्चस्तु -"नायमलंकारोऽतिरिक्तः, उपमयैव गतार्थत्वात्। न च सामान्यविशेषयोरसादृश्यानुल्लासात्कथमुपमेति वाच्यम् । 'निर्विशेषं न सामान्यम्' इति सामान्यस्य यत्किञ्चिद्विशेषं विना प्रकृतत्वायोगात् । तादृशविशेषमादाय विशेषान्तरस्य सादृश्योल्लासे बाधकाभावादिवादिभिरामुखे प्रतीयमानस्यापि सामान्यविशेषभावस्य परिणामे सादृश्य एव विश्रान्तेः" इत्याहुः ॥

नन्वेवमुदाहरणालंकाराभ्युपगमे सामान्यस्य विशेषेण समर्थनं नार्थान्तरन्यासभेदश्शङ्कयाद्भवितुम्, अनेनैव चरितार्थत्वादिति वाच्यम् । तत्र इववायथादिशब्दप्रयोगाभावस्यैवेतो वैलक्षण्यात् । एवमपि स वाचकाभावादार्थ उदाहरणालंकार एवास्तु न त्वर्थान्तरन्यासभेद इति चेत्, इदमस्त्यनयोर्वैलक्षण्यं – सामान्यार्थसमर्थकस्य विशेषवाक्यार्थस्य द्वयी हि गतिः । अनुवा

द्यांशमात्रे विशेषत्वम्। विधेयांशस्तु सामान्यगत एवेत्येका। अनुवाद्यविधेयोभयांशेऽपि विशेषत्वमित्यपरा। तत्राद्या उदाहरणालङ्कारस्य विषयः। द्वितीया त्वर्थान्तरन्यासभेदस्य। एवं च 'मृगनाभिस्सुरभितया भगवत इव निटिलफलकसीमायाम्' इत्युदाहरणालङ्कारगते विशेषे मान्यतामेतीति प्राचीनसामान्यार्थगतैव यथोक्तरूपेण क्रिया विधेया। 'भगवद्वदने बिभर्ति तिलकत्वम्' इति तुरीयपादपाठेनार्थान्तरन्यासगते तु पृथगुपात्तविशेषरूपेण। एवं—'यत्र क्वाऽस्तुजातस्तेजस्वी भवति भूषणं महताम्' इत्याद्युदाहरणालङ्कारश्लोकेष्वपि 'यदयं जनिमानुदधौ हृदये प्रचकास्ति कौस्तुभोऽच्युत ते' इत्याद्युत्तरार्धपाठे उदाहरणार्थान्तरन्यासविशेषयोर्वैलक्षण्यं बोध्यमिति। यदि चायमल्पो विशेषो नार्थान्तरन्यासविशेषस्योदाहरणालङ्कारात्पृथगलङ्कारतामीष्टे साधयितुं, अपि तु तद्विशेषतामित्युच्येत, तदा उदाहरणालङ्कारोऽर्थान्तरन्यासस्य, प्रतिवस्तूपमा दृष्टान्तस्य, अतिशयोक्ती रूपकस्य च विशेषः, उपमैव चार्थी स्मरणभ्रान्तिमत्सन्देहा इत्यपि सुवचं स्यात्, तत्रापि विशेषस्याल्पत्वात्। उपमयैवेमं गतार्थं मन्वानाः प्राञ्चस्तु विशेषेण सामान्यस्य समर्थनमर्थान्तरन्यासं विनाऽन्यत्र नेष्टे प्रवेष्टुमित्यभिप्रयन्तीति दिक्॥

इत्यलङ्कारमणिहारे उदाहरणालङ्कारसरः पञ्चमः.

## अथ प्रतीपालङ्कारसरः.

### प्रतीपमुपमानस्य वर्ण्या चेदुपमेयता॥२६॥

प्रसिद्धोपमानवैपरीत्येन वर्ण्यमानमौपम्यं प्रतीपम्। तद्वैपरीत्यं च तदुपमानोपमेययोरुपमेयोपमानत्वकल्पनया। अत्र प्रसि-

ह्यौपम्ये यदुपमेयं तस्यैवोपमानत्वादाधिक्यस्य यच्चोपमानं तस्योपमेयत्वान्न्यूनत्वस्य च प्रत्ययः फलम् । इदमेव चौपम्यस्याविशेषेऽप्युपमालङ्कारादस्य वैलक्षण्ये बीजम् । नन्वेवमौपम्यस्योपमानोपमेयसाधारण्येऽपि यदेकस्याधिक्यमन्यस्य न्यूनत्वं च गम्यत इत्येतत्कुत इति चेदवधेहि—उपमाने हि साधारणधर्मसम्बन्धोऽनूद्य उपमेये विधीयत इति तावत्सर्वसंप्रतिपन्नम् । विध्यनुवादौ च साध्यत्वसिद्धत्वाभ्यां । ते च क्रमेणोपमेयोपमानयोर्न्यूनत्वाधिक्ये प्रयोजयेते । लोकेऽपि निश्चितराजभावो यथा मान्यते तथा नानिश्चितराजभाव इति व्यक्तमेव । ते च साध्यत्वसिद्धत्वे वक्तृविवक्षाधीने इति नात्र दोषः । अत्र पञ्चविधे प्रतीपे वक्ष्यमाणे आद्येषु त्रिषूपमितिक्रियानिष्पत्तिरस्ति । अन्यत्र तु सा नेति भेदः ॥

यथा—

**जल्पतु जरद्गवी त्वां हिरण्यवर्णां शरण्यदयिततमे । शुचितप्तं यदि तत्स्यात्सुचिरं त्वद्वर्णता भजेतापि ॥ १७४ ॥**

जरद्गवी श्रुतिः जीर्णा गौरित्यपि गम्यते । शुचितप्तं ग्रीष्मे पञ्चाग्निमध्यकृततपः । यद्वा शुचीति भिन्नं पदम् । शुचि शुद्धं तप्तं तपस्वि चेत्यर्थः । अग्नौ पुटपाकेन शोधितमिति तु हृदयम् । अत्र पूर्वार्धोपमागम्यमुपमानताप्रयुक्तं सुवर्णवर्णाधिक्यं तिरस्कृत्य द्वितीयार्धे प्रतीपं श्रीलक्ष्मीवर्णस्योपमानत्वप्रयुक्तमाधिक्यं गमयति । शुचितापं विना प्रतीपमपि दुर्लभम्, उपमा तु स्वप्नेऽपि दूरतोऽपास्तेति जरद्गवी जल्पत्वित्याभ्यां गम्यते । शरण्यदयिततमे इति श्रियस्संबुद्धिः ॥

यथा वा—

**आदित्यवर्णतां ते श्रुतिस्स्वतन्त्रा ब्रवीतु जगदम्ब । उदयेन्महातपश्श्रीस्स यदि त्वत्पादवर्ण एव स्यात् ॥ १७५ ॥**

श्रुतिः, 'आदित्यवर्णं तपसोऽधिजातः' इति श्रुतिः । सः आदित्यः महती तपश्श्रीः आतपश्रीश्च यस्य स तथोक्तः उदयेत् । अभ्युदयमाविर्भावं च प्राप्नुयाद्यदि तदाऽपि त्वत्पादवर्ण एव तव चतुर्थांशवर्ण इव वर्णो यस्य स तथोक्त एव स्यात्, न तु परिपूर्णत्वद्वर्ण इति भावः । त्वच्चरणारुणवर्ण इति तु हृदयम् । अत्रापि पूर्वार्धोपमागम्यमुपमानताप्रयुक्तादित्यवर्णाधिक्यं तिरस्कृत्य द्वितीयार्धे प्रतीपं जगज्जननीवर्णस्य उपमानताप्रयुक्तमाधिक्यं गमयति । महातपश्रीसाहित्येनोदितत्वमन्तरा प्रतीपमपि दुर्घटं, कुतो वा उपमावार्तेति श्रुतिस्स्वतन्त्रा ब्रवीत्वित्यनेन गम्यते । त्वत्पादवर्ण एवेति श्लेषोऽप्यस्यैवार्थस्योपस्कुरुते ॥

**अवर्ण्यस्योपमेयस्य लाभाद्वर्ण्यतिरस्कृतिः ।**
**लाभाद्वर्ण्योपमेयस्य स्यादन्यानादरश्च तत् ॥२७॥**

अद्वितीयगुणशालितया वर्ण्यमानस्यान्यत्र स्वसादृश्यमक्षममाणस्य उपमेयं कंचित्प्रदर्श्य तावता तस्य तिरस्कारो द्वितीयं प्रतीपं पूर्वस्मादपि विच्छित्तिविशेषशालि । अत्युत्कृष्टतया कांचिदप्युपमानभावमसहमानस्यावर्ण्यस्य वर्ण्यमुपमेयं परिकल्प्य तावता तस्य तिरस्कारः पूर्वप्रतीपवैपरीत्येन तृतीयं प्रतीपम् ॥

यथा—

**अहमेव पालयित्री जगतामिति दृप्य मा जल-**

धिपुत्रि । फणिगिरिपतिहृदि धात्रीसदृशी करुणा तवास्ति शुभदात्री ॥१७६॥

त्वमनन्तहृद्यभूषणमहमिति गर्वं जहीहि धामनिधे। संकलयसि सदृशं तव वेङ्कटनाथस्य मणिमुरसि न किमु ॥१७७॥

अत्राद्योदाहरणे तव सदृशीत्युपमितिक्रियानिष्पत्तावपि करुणाया उपमेयीकरणेन वर्ण्याया लक्ष्म्या अनादरः । द्वितीयोदाहरणे तु अनन्तहृद्यभूषणतया क्वचिदप्युपमानभावमक्षममाणस्यावर्ण्यस्य धामनिधेस्तादृशं श्रीनिवासोरस्स्थकौस्तुभमुपमेयं परिकल्प्य तस्यानादर उक्तः। अनन्तस्य गगनस्य श्रीनिवासस्य च हृद्यं मनोहरं हृदयस्थं च भूषणमिति श्लेषोपस्कृतमिदम् । अनयोर्भेदयोः फलं स्फुटमेवेति न विवेचनीयमस्ति ॥

क्वचिदनादराप्रतीतावप्युपमेयस्योपमानताकल्पनमात्रेण प्रतीपं दृश्यते। यथा—

करचरणनयनसदृशं सरसिरुहं परमपुरुष तव कमला। करभूषणयति गृहयति सरयति संश्रयति चापि तन्नाम ॥१७८॥

अत्रारुण्यसौगन्ध्यमार्दवादिमहिम्ना प्रसिद्धोपमानभावस्य सरसिरुहस्योपमेयत्वमात्रमुक्तम । न तु तस्यानादरः । उपमायामिवास्मिन्नपि पूर्णालुप्तादयो भेदास्सम्भवन्तो बुद्धिमद्भिरुन्नेयाः ॥

उपमाया अनिष्पत्तिर्वर्ण्येनान्यस्य चापि तत् ॥

वर्ण्येनेति तृतीयाया निरूपितत्वमर्थः। वर्ण्यनिरूपिता अन्यस्यावर्ण्यस्य या उपमा तस्या अनिष्पत्तिवचनं चतुर्थं प्रतीपम्। आद्ययोरवर्ण्यस्योपमेयत्वकल्पनया तृतीये वर्ण्यस्योपमेयत्वकल्पनया चोपमितिक्रियानिष्पत्तिरस्ति। अत्र तु सा नास्तीति पूर्वेभ्य उत्कर्षशालीदम् ॥

यथा—

अपि पुण्डरीकमक्ष्णोरुपमा स्यादुरगशैलनाथ तव। साहसिकी मन्ये श्रुतिराह यथा पुण्डरीकमेवमिति ॥१७१॥

हे उरगशैलनाथ तव अक्ष्णोः पुण्डरीकमपि उपमा स्यादिति काकुः। अपीत्यनेन पुण्डरीकस्य कादाचित्कम्लान्यादिना अरामणीयकं व्यञ्जितम्। तर्ह्यन्तरादित्यविद्यायां 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतिः कथमाह पुण्डरीकसाधर्म्यं भगवल्लोचनयोरित्यत आह—साहसिकीति। या श्रुतिः 'तस्य यथा कप्यासम्' इत्यादिः पुण्डरीकसादृश्यमाह, मन्ये सा साहसिकीति। सहसा वर्तते साहसिकी 'ओजस्सहोऽम्भसा वर्तते' इति ठक्। टिड्ढेति ङीप्। नेत्रे निमील्य वदतीति भावः। अत्र अपि पुण्डरीरमक्ष्णोरुपमा स्यादित्यनेन उपमा न सम्भवतीति गम्यते। साहसिकीत्युत्तरार्धममुमेवार्थमुपोद्बलयति ॥

उपमानस्य कैमर्थ्यं प्रतीपं पञ्चमं विदुः॥२८॥

कः अर्थः प्रयोजनं यस्य स किमर्थः तस्य भावः कैमर्थ्यं निरर्थकत्वम् । उपमेयस्यैवोपमानकार्यधूर्वहतया उपमानकैमर्थ्यमुपमानप्रातिलोम्यात्पञ्चमं प्रतीपम् ॥

यथा—

**गुणवशितपरब्रह्मणि फणिशिखरिणि विरचिताद्भुतानन्दे । निवसन्तः खलु सन्तः परमव्योम्नाऽपि किमिति मन्यन्ते ॥ १८० ॥**

यथा वा—

**पद्मावत्याः पाणिं परिगृह्णानः फणाभृदचलेशः । लीलाब्जमपि निरास्थो निरास्थदेतत्किमर्थमिति ॥ १८१ ॥**

अत्र क्रमेण उपमेययोः फणिशिखरिपद्मावतीपाण्योरेव निरतिशयानन्ददानादिकार्यधूर्वहतया उपमानभूतयोः परमव्योमलीलाकमलयोः कैमर्थ्यमुक्तम् ॥

तदेवं पञ्चविधं प्रतीपं प्राचामनुरोधान्निरूपितम् । वस्तुतस्तु आद्यास्त्रयोऽप्युपमायामेवान्तर्गता भेदाः । तुरीयस्त्वनुक्तवैधर्म्ये व्यतिरेके । पञ्चमस्तु केषांचिदाक्षेपः । तथाहि—निष्पद्यमानं सुन्दरं वा सादृश्यमुपमा । न ह्याद्ये प्रतीपे मुखमिव कमलमित्यादौ सादृश्यस्यानिष्पत्तिरसौन्दर्यं वाऽस्ति । येनोपमातो बहिष्कृतिस्स्यात् । सौन्दर्यविशेषस्य त्वयाऽप्यभ्युपगमात् । विशेषस्य सामान्यानिवारकत्वात् । न च प्रसिद्धकमलादिप्रतियोगिकमेव सादृश्यमुपमेत्यस्ति वेदानुशासनम् । न

चोपमाविरुद्धवाचिनः प्रतीपशब्दस्य महिम्नैव तथाविधं सादृश्यमुपमेति शक्यं वदितुम् । उपमाविशेषविरुद्धवाचकत्वेनापि तदुपपत्तेः । एवंचाद्यं प्रतीपं प्रसिद्धोपमावदुपमाविशेष एव । अत एव द्वितीयतृतीयावपि भेदावुपमाविशेषावेव, उपमानोपमेययोस्तिरस्कारस्तूपमान्तराद्वैलक्षण्यं प्रयोजयेन्न तूपमासामान्यात्। तदनुस्यूतत्वेनैव तत्प्रतीतेः । न हि शर्करा माधुर्यातिशयेन पार्थिवान्तराद्विलक्षणेत्यपार्थिवी भवेत् । अपि च यद्युपमानोपमेययोस्तिरस्कारोऽलङ्कारताप्रयोजकस्स्यात्तर्हि तत्पुरस्कारोऽपि तथा स्यात् ॥

यथा—

ननु पातकिनो वयमित्यनुतापं मा स्म दुर्जनाः कुरुत । कति कति न भवादृक्षाः कलाविहास्मृतसरीसृपगिरीशाः ॥ १८२ ॥

अत्रौपम्यप्रदर्शनस्य नोपमानतिरस्कारः फलं, तस्य ह्रस्वत्वाद्यविवक्षणात् । किन्तु तदनुतापशान्तिः, एवं च फलवैलक्षण्यमात्रेणालङ्कारान्तरत्वं ब्रुवाणेनास्याप्यलङ्कारत्वमभ्युपेयं स्यात् प्रतीपषष्ठप्रभेदत्वं वा । किंच त्वदुक्तप्रतीपभेदानामपि परस्परवैलक्षण्येन पृथगलङ्कारता स्यान्न तु प्रतीपभेदत्वं, प्रतीपस्य सकलप्रभेदसाधारणसामान्यलक्षणाभावात् । अन्यतमत्वं तु दूषणसहस्रकबळितत्वादलक्षणमेव । उपमालक्षणं तु सर्वसाधारणम् । पञ्चमप्रभेदस्तु येषां मतेनाक्षेपस्तेषामस्तुनामालङ्कारः । तुरीयस्य तूक्तैव गतिः ॥

इत्यलङ्कारमणिहारे प्रतीपालङ्कारसरः षष्ठः.

## अथ रूपकम्.

यत्स्याद्विषयिरूपेण विषयस्योपरञ्जनम् ।
रूपकं तद्विधाऽभेदताद्रूप्यावसितं विदुः ॥२९॥

विषयि उपमानभूतं चन्द्रादि, विषयस्तदुपमेयभूतं वर्णनीयं मुखादि । विषयिणो रूपेण यद्विषयस्योपरञ्जनं उपरञ्जनमिवोपरञ्जनं स्वोपरक्तबुद्धिविषयीकरणमिति यावत् । तद्रूपकं, अन्यरूपेण रूपवत्त्वनिष्पादनात् । तच्च कचित्प्रसिद्धविषय्यभेदे पर्यवसितं, कचिद्भेदे प्रतीयमान एव तदीयधर्मारोपमात्रे पर्यवसितम् । ततश्च रूपकं तावद्द्विविधं—अभेदरूपकं ताद्रूप्यरूपकं चेति । तदेतदाह—

आरोपे सत्यभेदस्याभेदरूपकमुच्यते ।
ताद्रूप्यरूपकं तत्स्यात्ताद्रूप्यस्य स चेद्भवेत्॥३०

ताद्रूप्यस्य सः आरोपो भवेद्यदि ताद्रूप्यरूपकमित्यर्थः । अभेदारोपश्च 'मुखं चन्द्रः' इत्यादावाहार्यचन्द्राभेदनिश्चयः । ताद्रूप्यारोपस्तु 'मुखमपरश्चन्द्रः' इत्यत्रापर इति भेदस्य स्फुटतया मुखे चन्द्राभेदारोपासंभवाच्चन्द्रकार्यकारित्वरूपताद्रूप्यस्याहार्यनिश्चयः । न च तस्य मुखे सत्त्वात्कथमारोप इति वाच्यम् । चन्द्रकार्यसजातीयकार्यकारित्वस्यैव मुखे सत्त्वात् । यद्यपि नामार्थयोरभेदान्वयानुरोधादिहापि चन्द्रपदलक्षितस्य तत्कार्यकारिणोऽभेदसंसर्गेणैव मुखेऽन्वयादभेदरूपकमेव, तथाऽप्युपमानतावच्छेदकरूपेणाभेदभाने एवाभेदरूपकत्वं, तत्कार्यकारित्वादिरूपेणाभेदभाने तु ताद्रूप्यरूपकत्वमित्याहुः ॥

**तद्द्वयं च त्रिधाऽऽधिक्यन्यूनत्वानुभयोक्तिभिः॥**

द्विविधमपि रूपकं प्रत्येकं त्रिविधम् । प्रसिद्धविषय्याधिक्यवर्णनेन तन्न्यूनतावर्णनेन आधिक्यन्यूनताराहित्योक्त्या चेत्येवं रूपकं षड्विधम् । तत्राभेदरूपकेष्वधिकाभेदरूपकं लक्षयति—

**पूर्वावस्थात आरोप्यमाणस्याधिक्यवर्णनम् ।**
**वर्ण्यायां चेदवस्थायामधिकाभेदरूपकम् ॥ ३२**

यथा—

**असुरासुरविक्षुभितादहिराजधरेशजलनिधेरुदितम् । वितरत्यजरामरताममितां स्मितममृतमेतदनुसरताम् ॥ १८४ ॥**

अत्राहिराजधरेशजलनिधेरिति जलधिना सह श्रीनिवासस्याभेदं प्रतिपाद्य असुरासुरविक्षुभितादित्यनेन विशेषणेन जलधेः, एवं स्मितममृतमित्यमृतेन सह वर्णनीयस्य स्मितस्य तादात्म्यं प्रतिपाद्य अमितामजरामरतां वितरतीत्यनवच्छिन्नाजरामरत्वदानोक्त्या अमृतस्य च पूर्वावस्थात उत्कर्षविभावनादधिकाभेदरूपकद्वयं परंपरितम् । अत्र प्राथमिकं समस्तं रूपकं, द्वैतीयीकं तु व्यस्तमिति विशेषः ॥

**न्यूनता प्रागवस्थातश्चेन्न्यूनाभेदरूपकम् ॥**

यथा—

**अनुपदमनुपमफणिपतिगिरिमणिगुणगरिमम-**

**सृणिता कविता । त्रय्येव पौरुषेयी धुनोति दुरितं तनोति सुखममितम् ॥ १८५ ॥**

अत्र वर्णनीयायाः भगवद्गुणविषयकार्वाक्तनकवितायाः त्रय्येवेति प्रसिद्धत्रयीतादात्म्यं प्रकाश्य पौरुषेयीत्यपौरुषेयत्ववैकल्यप्रतिपादनान्न्यूनाभेदरूपकम् । पुरुषेण कृता पौरुषेयी 'सर्वपुरुषाभ्यां णढञौ' इत्यत्र 'पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्' इति ढञि 'टिड्ढ' इति ङीप् । भाष्यकारप्रयोगात्तेनेत्यस्य द्वंद्वमध्ये निवेशः । न्यूनताप्रातिपादनमप्यभेददार्ढ्योपादकत्वाच्चमत्कारि ॥

**आधिक्यन्यूनताभावेऽनुभयाभेदरूपकम् ॥ ३४ ॥**

यथा—

**षट्पदमन्त्रोद्गीतं सकमलरेखं रसोदयनिकेतम् ।**
**कलयामि श्रीशरणं नलिनं साक्षाद्रमापतेश्चरणम् ॥**

षट्पदमन्त्रेण 'षट्पदोऽयं द्विखण्डः' इत्युक्तमन्त्ररत्नेन उद्गीतं, तत्र भगवच्चरणयोरुपायताप्रतिपादनात् । अन्यत्र षट्पदानां भ्रमराणां मन्त्रैः गुञ्जितैरिति यावत्, उद्गीतम् । सकमलरेखं कमलाकाररेखाभिस्सहितं पद्मपङ्क्तिसहितं च । रसायाः भूमेः उदयनिकेतं जनिगृहं 'पद्भ्यां भूमिः' इति श्रुतेः । अन्यत्र रसस्य मरन्दस्य उदयनिकेतं, श्रियः सौकुमार्यादिलक्ष्म्याः श्रीदेव्याश्च शरणं आश्रयं जन्मनिकेतनं च । अत्र साक्षादिति विशेषणेन नलिनतादात्म्यं भगवच्चरणस्य प्रतिपाद्य षट्पदमन्त्रोद्गीतमित्यादिविशेषणैस्तस्य पूर्वावस्थात उत्कर्षापकर्षयोरवर्णनादनुभयाभेदरूपकम् ॥

तादूप्यरूपकेऽप्येवं त्रैविध्यं सद्भिरूह्यताम् ॥ ३५

तत्राधिकताद्रूप्यरूपकं यथा—

परमन्दरसंक्षोभं न भजति जात्वपि भुजङ्गगिरिनेतुः। स्वान्तसरित्कान्तोऽस्मिन् जयति समुद्रो बुधान्न रञ्जयति ॥ १८७॥

जात्वपि परमं अधिकं दरेण भयेन संक्षोभम्। पक्षे—परं अतिशयितं मन्दरेण गिरिणा संक्षोभं मथनं भुजङ्गगिरिनेतुः स्वान्तं सरित्कान्तः न भजति, अस्मिन् स्वान्तसरित्कान्ते जयति सति समुद्रः प्रसिद्धस्सिन्धुः बुधान् देवान् विदुषश्च न रञ्जयति अतथाविधत्वादिति भावः। अत्र स्वान्तसरित्कान्त इत्यत्र सरित्कान्तपदं सरित्कान्तकार्यकारित्वमात्रपरं, समुद्रो बुधान्न रञ्जयतीति प्रसिद्धसमुद्राद्भेदस्य विवक्षितत्वात्। तथाच परमन्दरसंक्षोभं न भजतीत्यनेन स्वान्तसरित्कान्तस्योत्कर्षप्रतिपादनात्प्रसिद्धसमुद्रे तद्वैलक्षण्यस्य स्फुटतया आधिक्यं वर्णितमित्याधिकताद्रूप्यरूपकम् ॥

यथा वा—

गर्जन्विषं प्रदत्ते पर्जन्यश्शीतको मलिनवक्त्रः। फणिगिरिपतिपर्जन्यः प्रददात्यमृतमपि सुखसुखेनैव ॥ १८८ ॥

पर्जन्यः शीतकः अलसः शीतं करोतीति शीतकः 'शीतोष्णाभ्यां कारिणि' इति कन्। 'आलस्यश्शीतकोऽलसः' इत्यमरः। अन्यत्र शीतं कं उदकं यस्य स इति विग्रहः।

मलिनं क्रोधदूषिततया मलीमसं, पक्षे निसर्गतो नीलं मुखं वदनं अग्रभागश्च यस्य स तथोक्तः। गर्जन् तर्जयन्। पक्षे स्तनन् सन्। विषं गरळं जलं च प्रदत्ते। एवमलसः क्रोधमलिनमुखो गर्जन्नप्यन्ततो विषमेव प्रदत्ते न तूपादेयं वस्तु। फणिगिरिपातिपर्जन्यस्तु अमृतं सुधामपि निश्श्रेयसमपि च सुखसुखेनैव अनलसोऽमलिनमुखोऽतर्जयन्नक्लेशेनैवेति भावः। प्रददाति। 'अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्' इति द्विर्वचने कर्मधारयवद्भावात्सुब्लुक्। अत्र प्रसिद्धपर्जन्यापेक्षया भगवत्पर्जन्यस्याधिक्यमुक्तम्॥

न्यूनताद्रूप्यरूपकं यथा—

प्रणमन्ति ये भजन्ति च फणिगिरिकान्तं स्तुवन्ति चाश्नन्ति। तेऽमी भगवद्भक्ता भूमीजनुषोऽपरे मुक्ताः॥१८९॥

अत्र मुक्तेष्वपर इति विशेषणात्प्रसिद्धमुक्तेभ्यो भगवद्भक्तानां भेदाविष्करणाद्भूमीजनितत्वरूपन्यूनताप्रतिपादनाच्च न्यूनताद्रूप्यरूपकम्॥

अनुभयताद्रूप्यरूपकं यथा—

विबुधेभ्योऽमृतवितरणनिपुणमिदं हरिणकिरणजनिशरणम्। फणिधरणिधरशिरोमणिहृदयं जानीमहेऽपरं जलधिम्॥१९०॥

विबुधेभ्यः देवेभ्यो विद्वद्भ्यश्च अमृतस्य सुधायाः निश्श्रेयसस्य च वितरणे निपुणम्। हरिणकिरणस्य चन्द्रम-

सः जनिशरणं जन्मगृहम् । अब्धेश्चन्द्रोदयस्य प्रसिद्धेः, पक्षे 'चन्द्रमा मनसो जातः' इति श्रुतेः । अत्रापरं जलधिमिति प्रसिद्धजलधेर्भेदमाविष्कृत्य तस्य च प्रसिद्धजलधिकार्यकारित्वमात्रवर्णनेनोत्कर्षापकर्षयोरवर्णनादनुभयताद्रूप्यरूपकम् । तदेवं कुवलयानन्दकृतां मतमनुरुध्योभयविधत्वं रूपकस्य तत्राप्येकैकस्य त्रैविध्यं च वर्णितम् ॥

मङ्खुक-मम्मट-भामहप्रभृतयः प्राचीनास्तु अभेदरूपकमेवाङ्गीचकार्षुः न तु ताद्रूप्यरूपकम् । तेषामयमाशय उन्नीयते—अभेदरूपकं ताद्रूप्यरूपकमिति न युज्यते विभागः, 'मुखमपरश्चन्द्र' इत्यादावप्यभेदरूपकस्यैव संभवात् । न चोपमानतावच्छेदकावच्छिन्नाभेदभाने ह्यभेदरूपकं, उक्तस्थले चापरपदेन चन्द्रभेदस्यैव प्रतीत्या चन्द्राभेदभानासंभवात्कथमभेदरूपकं स्यात् । अतश्चन्द्रपदस्य तत्र चन्द्रकार्यकारित्वावच्छिन्नपरतामाश्रित्य ताद्रूप्यारोपात् ताद्रूप्यरूपकमेवाभ्युपेयमिति वाच्यम् । अपरादिपदस्येदृशस्थले स्वार्थान्वयितावच्छेदकाश्रययत्किञ्चिद्व्यक्तिप्रतियोगिकभेदमात्रबोधकत्वव्युत्पत्तेः प्रसिद्धचन्द्रव्यक्तिभेदभानेऽपि चन्द्रसामान्यभेदाभानाच्चन्द्रद्वित्वभ्रममूलकस्य मुखादौ चन्द्रत्वावच्छिन्नाभेदभानस्य संभवात् । अन्यथा चन्द्रपदस्यात्र चन्द्रकार्यकारिपरत्वेऽपि चन्द्रकार्यकारित्वेन प्रसिद्धचन्द्रासाधारणेन रूपेण प्रसिद्धचन्द्रव्यक्त्यभेदभानस्यैवाभ्युपेयतयाऽनुपपत्तितादवस्थ्यात् । चन्द्रकार्यकारितायाः प्रसिद्धचन्द्रेतरसाधारण्ये च मुखे तदारोपस्यैवानावश्यकतया रूपकस्यैवाप्ररोहात् । एवं 'मुखं चन्द्रकार्यकारि' इत्यादावपि ताद्रूप्यरूपकप्रसङ्गः । तस्मादभेदारोप एव रूपकं न तु ताद्रूप्यारोप इति । यदि तु अभेदरूपकं ताद्रूप्यरूपकमिति विभागसंगमनमावश्यकमित्याग्रह्यते तदा उप-

मानतावच्छेदकावच्छिन्नारोपे अभेदरूपकं उपमानतावच्छेदकधर्मारोपे ताद्रूप्यरूपकमित्येवाश्रयणीयम् । आद्यस्योदाहरणं 'मुखं चन्द्रः, मुखमपरश्चन्द्रः' इत्यादिकं विषयिविषयवाचकपदयोस्सामानाधिकरण्यस्थलं सर्वमेव । द्वितीयस्य तु 'आस्ये पूर्णशशाङ्कता' इत्यादीति ध्येयम् । तत्राप्यभेदरूपकं द्विविधम् । अभेदस्य संसर्गत्वे एकं पदार्थत्वेऽपरम् ॥

यथा—

**चिन्तामणिरसि भजतां सन्तानो वा तरुस्त्वमब्जाक्ष। हरिनीलाद्वैतं तव तनुरेत्यथवा तमालतादात्म्यम् ॥ १११ ॥**

चिन्तामणेर्हरिनीलाद्वैतं सन्तानतरोस्तमालतादात्म्यमप्याश्रयमिति भावः । अत्र त्वं चिन्तामणिः संतानतरुर्वेत्येतदाद्यस्योदाहरणम् । अत्र ह्यभेदस्संसर्गरूपः । द्वितीयस्य तु तव तनुर्हरिनीलाद्वैतं तमालतादात्म्यं वा एतीति । अत्र ह्यभेदः पदार्थरूपः । एवं 'मुखं चन्द्रः' इत्यादौ 'चन्द्राद्वैतमेति' इत्यादावप्यभेदस्य संसर्गरूपता पदार्थरूपता च द्रष्टव्या । अनयोश्चाभेदताद्रूप्यरूपकयोरुपपाद्योपपादकभावोऽपि संभवति ॥

यथा —

**हारास्तवाम्बुधाराः कनकपटीयं तटित्प्रभारभटी । अम्बुरुहेक्षण तत्त्वय्यम्बुदतां नियतमेव जानीमः ॥ ११२ ॥**

**मन्दस्मिते सुधात्वं मन्दारत्वं तवाच्युत कटाक्षे। फाले बालेन्दुत्वं भाति तदम्भोनिधेरभिन्नस्त्वम् ॥**

अत्राद्ये पद्ये अभेदरूपकमुपपादकं ताद्रूप्यरूपकमुपपाद्यं, द्वितीये तु तद्विपरीतम् । तत्राप्याद्ये उदाहरणे उपपादके रूपके अभेदस्संसर्गरूपः, द्वितीये तूपपाद्यरूपके स पदार्थरूप इति भिदा । तदेवं कुवलयानन्दकृद्भिः प्रदर्शितस्य रूपकविभागस्य संगमनेऽपि तदुपदर्शितानि 'वक्त्रेन्दौ तव सत्ययं यदपरश्शीतांशुरुज्जृम्भते । साध्वीयमपरा लक्ष्मीः' इत्यादिपद्यानि ताद्रूप्यरूपकस्यानुदाहरणान्येवेत्यलं दूरधावनेन ॥

प्राचां मते विभागोपि रूपकस्य निरूप्यते ।
त्रिधा साङ्गं निरङ्गं च परंपरितमित्यदः ॥३६॥
समस्तवस्तुविषयमेकदेशविवर्ति च ।
इति सावयवं चापि द्विविधं तत्र रूपकम् ॥३७

अदः रूपकं साङ्गं सावयवं निरङ्गं निरवयवं परंपरितमिति त्रिधा त्रिप्रकारम् । तत्र उक्तरूपकत्रयमध्ये सावयवं रूपकं समस्तवस्तुविषयं एकदेशविवर्ति चेति द्विविधम् ॥

सावयवं लक्षयति—

यत्परस्परसापेक्षनिष्पत्तीनां निबध्यते ।
रूपकाणां तु संघातो भवेत्सावयवं हि तत् ॥

अन्योन्यसापेक्षनिष्पत्तीनां रूपकाणां संघातस्सावयवरूपकमित्यर्थः ॥

तत्रापि समस्तवस्तुवृत्ति सावयवं लक्षयति—

निरूपणेऽवयविनोऽवयवानां च शब्दतः ।
समस्तवस्तुविषयं भवेत्सावयवं हि तत् ॥३९॥

यत्र समस्तान्यवयवावयविरूपवस्तून्यारोप्यमाणानि शब्दोपात्तानि तत्समस्तवस्तुविषयं सावयवरूपकमित्यर्थः ॥

यथा—

**हरिहृदयपञ्जरे नवमुक्तामणिहारजालके नद्धम् । श्रीवत्सकीरहेतोर्दाडिमफलमेव कौस्तुभमणीन्द्रः ॥११४॥**

अत्र संघातात्मकस्य सावयवरूपकस्यावयवानां सर्वेषामपि वस्तुगत्या समर्थ्यसमर्थकभावस्यान्योन्यं समानत्वेऽपि कवेर्दाडिमफलरूपकस्यैव समर्थ्यतया विवक्षितत्वात्समर्थकतयोपादानमन्येषामिति प्रतीयते । एवं सति समर्थकरूपकाणां विषयविषयिणोः पृथग्विभक्तेरश्रवणादनुवाद्यत्वेऽपि समर्थ्यकौस्तुभदाडिमरूपकस्य विषयविषयिणोः पृथग्विभक्तिश्रवणाद्विधेयतया तदादाय संघातात्मकस्य सावयवरूपकस्यापि विधेयत्वमत्र व्यपदिश्यते । यथा योधसंघातान्तर्गतस्य प्रधानस्य कस्यचिद्योधस्य विजयपराजयाभ्यां योधसंघातो विजितः पराजितश्चेत्युच्यते । न चैवमादौ प्रतीयमानोत्प्रेक्षा शक्या वक्तुम् । अभेदस्य निश्चीयमानत्वात् । सत्यां चोत्प्रेक्षायां संभाव्यमानता स्यात् । अन्यथा 'मुखं चन्द्रः' इत्यादावपि प्रतीयमानोत्प्रेक्षापत्त्या रूपकप्रळयापत्तेः ॥

यथा वा—

**सिंहधराधरशेखरसिंहळसंभूतमसितविद्योतम् । श्रीरुचिकनकोपचितं शौरिमहानीलमाद्रिये हृदये ॥११५॥**

श्रीरुचिकनके उपचितं प्रत्युप्तं 'हेम्नीवोपचितो मणिः' इत्यादावुपचितशब्दस्य तथाविधार्थकत्वदर्शनात् । सिंहधराधरशेखरः शेषाद्रिश्रेष्ठः स एव सिंहळः द्वीपविशेषः तस्मिन् संभूतं 'सिंहळस्याकरोद्भूता महानीलास्तु ते स्मृताः' इत्यगस्त्योक्तेः । हृदये मनसि वक्षसि च । अस्य सावयवरूपकस्य त्वनुवाद्यत्वमेव, विषयविषयिणोः पृथग्विभक्तेरश्रवणात् । उदाहरणद्वयेऽप्यवयविनोऽवयवानां च समस्तानां वस्तूनामारोप्यमाणानां शाब्दतया समस्तवस्तुविषयं सावयवरूपकम् ॥

एकदेशविवर्ति सावयवं लक्षयति—

**आरोप्यमाणं शाब्दं चेत्क्वचिदार्थं च कुत्रचित् ।**
**एकदेशविवर्त्याख्यमिदं सावयवं विदुः ॥४०॥**

यत्र क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्चार्थसामर्थ्याक्षिप्तं तत् एकदेशे शब्दानुपात्तविषयिके अवयवरूपके विवर्तनात् । स्वस्वरूपगोपनेनान्यथाभावेन वर्तनादेकदेशविवर्तीत्यर्थः । यद्वा—एकदेशे उपात्तविषयिके अवयवे विशेषेण वाच्यतया वर्तनादेकदेशविवर्तीति ॥

यथा—

**भवजलनिधिमतिविपुलं विविधमहावासनानदीशबलम् । लोकोऽयं तरतितरां काकोदरगिरिपतेरुपास्य कृपाम् ॥११६॥**

अत्र भवादिषु जलध्यादिरूपकैः कृपायां नौत्वमाक्षिप्यत इत्येकदेशविवर्ति रूपकम् ॥

यथा वा—

> विततैश्शुभगुणकिरणैर्वितरन्सत्कोकलोकस-
> म्मोदम् । फणिशिखरिमणिद्युमणिर्धरणिसुतामु-
> खविकासकृज्जयति ॥ ११७॥

धरणिसुता यज्ञार्थं भुवं शोधयता आकाशराजेन लब्धा भूतलादुद्गता धरण्याख्यस्वमहिषीहस्ते दत्ता तया संवर्धिता भगवता श्रीनिवासेन परिणीता पद्मावतीनाम्नी साक्षाल्लक्ष्मीति वाराहे वेंकटाचलमाहात्म्ये प्रसिध्यति । पूर्वस्मिन्नुदाहरणे कवेस्समर्थ्यत्वेनाभिमतस्य कृपायां नौत्वारोपरूपकस्याक्षेपः । इह तु समर्थकत्वेनाभिमतस्य धरणिसुतामुखे पद्मरूपकस्याक्षेप इति विशेषः । एवंच समर्थ्यरूपकस्यैवाक्षेपो न समर्थकरूपकस्येति नाग्रहः कार्यः । एवमेव रसगङ्गाधरादावुदाहृतत्वात् । अत एवैकदेशविवर्तित्वसंज्ञाऽप्यस्य युज्यते । एकदेशे समर्थ्यरूपे अवयविनि समर्थकरूपे अवयवे वा विवर्तत इति तदर्थात् ॥

इदं सावयवं द्विविधं श्लिष्टमपि दृश्यत इति विमर्शिनीकारः ॥

तत्र समस्तवस्तुवृत्ति सावयवं श्लिष्टं यथा—

> मणिमयशिरस्सहस्रेणोत्तुङ्गस्साधुगुप्तबहुपादः ।
> मणिकिरणरसनविसरः फणभृद्धरणीधरो भाति ॥

मणिमयशिरस्सहस्रमेव मणिमयशिरस्सहस्रं तेन उत्तुङ्गः । साधु यथा स्यात्तथा गुप्ताः रक्षिताः गूढाश्च बहवः पादाः प्रत्यन्तपर्वताः येन तथोक्तः बहुपादा एव बहवश्चरणाः यस्य

स तथोक्तः । 'कुण्डली गूढपात्' इत्यमरः । फणभृद्धरणीधरश्शेषाद्रिरेव फणभृद्धरणीधरश्शेषः । अत्र शिरआदिशब्दाः श्लिष्टाः 'शिरः प्रधाने सेनाग्रे द्रुमाद्यग्रेषु मस्तके' इति रत्नमाला ॥

यथा वा—

दुर्विषयगहनविपथे कर्षन्तं मां स्वरूपहरणाय।
निगळय निखिलनियन्तर्हृदयैकागारिकं तव पदेऽब्जे ॥११९॥

दुर्विषयगहनविपथे दुरिन्द्रियार्थदुःखदुरध्वे एव दुर्देशकान्तारकदध्वनि 'विषयो गोचरे देशे, गहनं वनदुःखयोः' इति च रत्नमाला । स्वरूपस्य भगवच्छेषत्वैकरूपस्य हरणायान्यथाकरणायैव स्वरूपहरणाय प्रशस्तवित्तापहाराय प्रशस्तं स्वं स्वरूपम् । 'प्रशंसायां रूपप्' इति रूपप्प्रत्ययः । मां कर्षन्तं हृदयमेव एकागारिकं चोरं 'ऐकागारिकट्चौरे' इति निपातनात्साधुः । एकमसहायमगारं प्रयोजनमस्य मुमुषिषोस्स ऐकागारिक इति विग्रहः । तव अब्जे पद्मसदृशे पदे चरण एव अब्जे जलमध्यस्थिते जलधिमध्यगत इति यावत् । पदे स्थाने कारागार इति यावत् । निगळय । अत्र निश्चलीकरणमेव निगळवत्तासंपादनम् । 'निखिलनियन्तः' इतिसंबुद्धिरीदृशनिग्रहानुग्रहस्वतन्त्रताभिप्रायिकी । अत्रापि दुर्विषयादिशब्दाश्श्लिष्टाः ॥

निरवयवरूपकं लक्षयति—

निरङ्गं तद्विदुर्यत्स्यादङ्गिमात्रस्य रूपणम् ।

तद्द्विधा केवलं मालारूपं चेति सतां मतम् ॥

निरङ्गं निरवयवम् । अङ्गिमात्रस्य अवयविमात्रस्य ॥

तत्र केवलं निरवयवं यथा—

वार्तंधर्यगिरिजातं स्फीतं धनमखिलशरणमवदातम् । ख्यातं धनपतिगीतं ध्यातं धवळयति हृत्सरोजातम् ॥२००॥

स्फीतधनत्वेन भगवानध्यवस्यते । हृत्सरोजातं हृदयकमलं धवळयति प्रसादयतीत्यर्थः । अत्र हृत्सरोजातमिति रूपकं सापेक्षरूपकसंघातात्मकताविरहान्निरवयवम् । मालात्वविरहात्केवलम् ॥

निरवयवं मालारूपकं यथा—

सौन्दर्यवृन्दकन्दं मुचुकुन्दानन्दचन्दनं वन्दे । वन्दारुकबृन्दारकमन्दारं दन्दशूकशिखरीन्दुम् ॥

एकविषयकनानापदार्थारोपरूपत्वान्मालारूपमिदम् । अन्योन्यसापेक्षताविरहान्निरवयवम् ॥

विमर्शिनीकारस्तु - अनेकविषयकानेकपदार्थारोपेऽपीदं निरवयवमालारूपकं श्लिष्टाश्लिष्टभेदेन दृश्यत इत्याह ।

तत्राश्लिष्टानेकविषयकानेकारोपो यथा—

नयने नलिने वदनं सदनं लक्ष्म्यास्तव स्मितं त्वमृतम् । गण्डौ दर्पणखण्डौ कुण्डलिवेतण्डशिखरिमार्तण्ड ॥२०२॥

अत्र नयनादीनामनेकेषामश्लेषनिबन्धनानेकारोपः ॥

श्लेषनिबन्धनानेकारोपो यथा—

**तव पुष्करं हि वदनं हृदयं रत्नाकरो द्युतिः कृष्णा । हृत्तापनाशिनी दृक्तीर्थगिरीश भवसि तीर्थमयः ॥२०३॥**

तीर्थगिरिरिति वेङ्कटाद्रेरेव नामान्तरमित्यवोचाम । अत्र पुष्कररत्नाकरकृष्णाहृत्तापनाशिनीशब्दाः श्लिष्टा इत्यनेकेषां वदनादीनामनेके श्लिष्टा आरोपाः । तदियं श्लिष्टार्थरूपकमाला । पुष्करं कमलं प्रसिद्धतीर्थविशेषश्च । रत्नानां कौस्तुभादीनामाकरः स्थानं समुद्रश्च । कृष्णा नीला नदीविशेषश्च । हृत्तापनाशिनी मनस्तापनिवर्तिनी वीक्षारण्यक्षेत्रगततीर्थविशेषश्चेत्यर्थः । तीर्थमयः 'सर्वतीर्थात्मकस्सर्वग्रहरूपी' इति हि तन्नामसु पठ्यते ॥

यथा वा—

**अक्षि तव पुण्डरीकं कुमुदं स्मितमञ्जनं प्रभाविसरम् । चरितं तु सार्वभौमं जानंस्त्वां वेद्मि दिग्गजात्मानम् ॥२०४॥**

अत्रापि पुण्डरीककुमुदाञ्जनसार्वभौमशब्दास्सिताम्भोजाद्यर्थका दिग्गजार्थकाश्चेति श्लिष्टा एवानेके अनेकेष्वक्ष्यादिषु दिग्गजारोपा इति श्लिष्टार्थरूपकमाला । 'ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तस्सार्वभौमस्सुप्रतीकश्च दिग्गजाः' इत्यमरः । सार्वभौमं सर्वस्यां भूमौ विदितं 'तत्र विदितः' इत्यधिकारे 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण् । अनुशतिकादित्वादुभयपदवृद्धिः । पक्षे दिग्गजविशेषमित्यर्थः ॥

एकं विषयि यद्यन्यविषय्यन्वितमुच्यते ।
कार्यकारणभावेन स्यात्परंपरितं तदा ॥४२॥

विषयि आरोप्यमुपमानं हेतुहेतुमद्भावापन्नं एकारोप्यान्वितमन्यदारोप्यं विषये तादात्म्येन निबध्यते चेत्तत्परंपरितरूपकम् ॥

यथा—

विनताखिलजनताजलनिधितारानाथ देववर भवता । ननु तादृशभवमयतपजनितातनुतापसंपदुपशमिता ॥ २०५॥

तारानाथश्चन्द्रमाः । तपो ग्रीष्मः । अत्र विनताखिलजनताजलनिधितारानाथेत्यत्र हेतुहेतुमद्भावापन्नजलनिधितारानाथरूपकयोर्मध्ये जलनिधिरूपके आरोप्यभूते जलनिधिनाऽन्वितमेव तारानाथरूपमारोप्यं विषयभूते भगवति तादात्म्येन निबध्यते। जलनिधिसम्बन्धितारानाथत्वेनैव रूपणस्य विवक्षितत्वादिति भवत्यत्र परंपरितरूपकम् । विषयिणि विषय्यन्तरान्वितत्वविशेषणेन सावयवरूपके 'सिंहधराधरशेखरसिंहळसंभूतमसितविद्योतम् । श्रीरुचिकनकोपचितं शौरिमहानीलमाद्रिये हृदये' । इत्यादौ नातिव्याप्तिः । तत्र हि शौरौ महानीलरूपकस्य सिंहधराधरादौ सिंहळादिरूपकस्य च हेतुहेतुमद्भावसद्भावेऽपि आरोप्यमाणमहानिले रूपकान्तरप्रविष्टसिंहळादिरूपारोप्यस्यान्वयविरहान्नातिप्रसङ्गः । तत्र शौरेर्महानीलत्वेनैव रूपणं न तु सिंहळादिसंबन्धिमहानीलत्वेनेति ॥

एतेन—'नियतारोपणोपायस्स्यादारोपः परस्य यत् । तत्परंपरितम्' ॥

इति प्राचीनलक्षणस्य सावयवरूपके 'ज्योत्स्नाभस्मच्छुरणध-

वळा' इत्यादौ अतिव्याप्तिर्दुर्वारा। तत्रापि कापालिकीत्वरूपणे भस्मादिरूपणस्य नियमेन हेतुत्वाश्रयणसंभवात्। यथा हि 'विद्वन्मानसहंस' इत्यादौ राज्ञि हंसत्वरूपणं विद्वन्मानसे मानससरस्त्वरूपणमन्तरा नोपपद्यते, तथा रात्र्यां कापालिकीत्वरूपणमपि ज्योत्स्नादौ भस्मादिरूपणमन्तरा नोपपद्यत इति साम्यात्। 'विद्वन्मानसहंस' इत्यादावेवैकरूपकस्य नियमेन रूपकान्तरसापेक्षत्वं नान्यत्रेत्यस्य तु शपथमात्रसाध्यत्वादिति परास्तम्। तादृशलक्षणस्यास्मदुपदर्शितलक्षण एव पर्यवसानस्याभिमतत्वात् आरोप्ये आरोप्यान्तरान्वयस्थले हि एकारोप आरोपान्तरे नियमेन हेतुर्भवतीति तल्लक्षणस्य तथा पर्यवसानं संभवति।

एतेन—'आरोपद्वयमात्रपर्यवसितं परम्परितं सावयवं तु न तथा' इति केषांचिदुक्तिरनादरणीया। 'विद्वन्मानसहंस' इत्यादौ प्रकाशाद्युदाहृते परंपरितरूपके आरोपबहुत्वस्यैव वर्तमानतया अव्याप्तिप्रसङ्गात्। न चात्र पद्ये विद्वन्मानसहंसादिभागे प्रत्येकं रूपकद्वयमात्रत्वमस्त्येवेति नाव्याप्तिः। अत एवैतत्पद्यं परंपरितरूपकबाहुळ्यान्मालारूपपरंपरितोदाहरणत्वेनोपात्तमिति वाच्यम्। एवं सति 'ज्योत्स्नाभस्म' इति पद्येऽपि 'बिभ्रती तारकास्थीनि, रात्रिकापालिकीयम्' इत्यंशे रूपकद्वयमात्रत्वसंभवेनातिप्रसङ्गापातः। न च रूपकान्तरनिरपेक्षहेतुहेतुमद्भावापन्नरूपकद्वयमात्रत्वमेव परंपरितलक्षणम्। तथाच 'ज्योत्स्नाभस्म' इत्यादौ कापालिकीरूपके यथा 'तारकास्थीनि' इति रूपकसापेक्षत्वं तथा 'ज्योत्स्नाभस्म' इत्यादिरूपकसापेक्षत्वस्यापि सत्त्वान्नातिप्रसङ्गः। 'विद्वन्मानसहंस' इत्यादौ च हंसादिरूपके प्रत्येकं मानसरूपकाद्येकैकरूपकसापेक्षत्वमेवेति लक्षण-

संगतिश्चेति वाच्यम् । एवमपि 'अमुष्मिन्पोतश्मारमणसुतसूरक्षितिपतेर्यशश्शेषे सोऽयं स्वपिति गगनश्रीसहचरः' इत्यादौ शेषरूपकसापेक्षश्रीसहचररूपके सावयवरूपकत्वेन काव्यदर्पणोदाहृते अतिप्रसङ्गापातात् । न चेष्टापत्तिर्युज्यते, 'नियतारोपणोपायस्स्यादारोपः परस्य यत्' इति परंपरितं लक्षयतां काव्यप्रकाशकारादीनामनभिमतत्वात् । यशसि शेषत्वमरूपयित्वाऽपि 'यशोव्याजे शेषे स्वपिति गगनश्रीसहचरः' इति पद्यपाठेन श्रीसहचररूपकोपपादनसंभवात्तत्रत्यरूपकयोर्नियतहेतुहेतुमद्भावासंभवात् । न चैवं सति नियतहेतुहेतुमद्भावापन्नत्वमेव रूपकद्वये निवेश्य परिष्क्रियतां लक्षणमिति वाच्यम् । एवमपि 'चतुर्दशलोकवल्लिकन्दः' इत्यादौ प्रकाशाद्यभिमते परंपरिते अव्याप्तिप्रसङ्गात् । तत्रापि 'चतुर्दशलोकवल्लिहेतुः' इति वा 'चतुर्दशलोकमूलकन्दः' इति वा निबन्धसंभवेन नियतहेतुहेतुमद्भावस्य दुरुपपादत्वात् । तस्मादेकरूपकीयविषय्यन्वितविषयिकरूपकान्तरत्वमेव परंपरितरूपकलक्षणमास्थेयम् । काव्यप्रकाशसर्वस्वादिप्राक्तनमाननीयनिबन्धोपात्तेषु सर्वेष्वेव परंपरितरूपकोदाहरणेषूत्तररूपके विषयवाचकपदं विषयिवाचकपदेनासमस्ततयैव दृश्यत इति भवति तत्र पूर्वरूपकारोप्यान्वितस्यैवोत्तररूपकीयारोप्यस्य तदीयविषयेऽन्वयः ॥

एवम्—

**निगममकुटीवधूटीवतंसचरणं श्रयामहे शरणम्। भवजलधितरणिकरुणं तरुणाम्बुदनीलमहिधराभरणम् ॥२०६॥**

इत्यादौ परंपरितरूपकोदाहरणे उत्तररूपकद्वये चरणकरुणा-रूपविषयवाचकपदयोः वतंसतरणिरूपविषयिवाचकपदाभ्यां स-मस्ततया दर्शनेऽपि पूर्वरूपकीयवधूटीजलध्यारोप्यान्विततयैवो-त्तररूपकीयावतंसतरणिरूपारोप्ययोस्तदीयचरणकरुणारूपविषया-भ्यामन्वयः । तथा तदुपात्तेषु सावयवोदाहरणेषु च न क्वचि-दप्येकरूपकारोप्ये रूपकान्तरारोप्यान्वयौपयिकस्समभिव्याहारो-स्तीति नातिप्रसङ्गशङ्कावकाशः । न चैवं 'मुग्धारिप्राणदुग्धा-शनमसृणरुचिस्त्वत्कृपाणो भुजङ्गः' इति रसगङ्गाधरीयपरंपरि-तोदाहरणे पूर्वरूपकारोप्यस्य दुग्धस्याशनादिपदव्यवधानादुत्त-ररूपकारोप्ये भुजङ्गे अन्वयासंभवादव्याप्तिरिति वाच्यम् । आ-रोप्ये आरोप्यान्वितत्वस्य साक्षात्परंपरासाधारणस्यैव निवेशात्॥

नन्वेवं स्यात्—

**सुविपुलशुभगुणजलनिधिफणधरगिरिराजप-तिकृपागङ्गाम् । अवगाह्य नराश्शिशिरां न विगा-हन्ते कदाऽपि तापकथाम् ॥ २०७॥**

इत्यत्र पूर्वरूपकारोप्यस्य जलनिधेरुत्तररूपकारोप्यायां ग-ङ्गायां परंपरयाऽन्वयसंभवादतिव्याप्तिरिति चेन्न । लक्षणे रूप-कद्वये हेतुहेतुमद्भावापन्नत्वविशेषणोपादानादेव तद्वारणात् । अत्र हि प्रदर्शितरूपकद्वयस्य न हेतुहेतुमद्भावः । यद्यपि 'पर्यङ्को राजलक्ष्म्याः' इति पद्यं मालापरंपरितोदाहरणतयोपन्यस्य अत्र 'क्ष्मासौविदल्लः' इति परंपरितमप्येकदेशविवर्तीति सर्वस्वका-रोक्तेस्तादृशैकदेशविवर्तिपरंपरितरूपकेऽव्याप्तिः । तत्र क्ष्मायां राजपत्नचारोपस्यार्थतया सौविदल्लरूपे उत्तररूपकारोप्ये पूर्वरूप-

कारोप्यभूताया राजमहिष्या अन्वयाभावात् । तथाऽपि परंपरितस्यैकदेशविवर्तित्वं न सर्वस्वकृतोऽभिमतम् । स्वकीयप्राक्तनविभागव्याघातात् । तत्र हि 'इदं तु निरवयवम्' इत्यादिना सावयवावान्तरभेदतयैव एकदेशविवर्तिरूपकं गण्यते, न तु परंपरितावान्तरभेदतयाऽधीति । उपदर्शितसर्वस्ववाक्यं तु अत्र पद्ये 'क्ष्मासौविदल्लः' इत्येतदेकदेशविवर्तिरूपकं 'पर्यङ्कः' इत्यादिपरंपरितमालासमानाधिकरणमपीत्येतदर्थकतया कथंचित्संगमनीयम् । अन्यथा आक्षिप्तरूपकसंपन्नरूपकद्वयमात्रतया तत्र परंपरितरूपकस्वीकारे 'निरीक्ष्य विद्युन्नयनैः' इति पद्ये एकदेशविवर्तिरूपकप्रतिपादनपरसमासोक्तिप्रकरणस्थतद्वाक्यविरोधप्रसङ्गात् । अत एव प्रकाशादिषु प्राक्तनेषु रसगङ्गाधरादिष्वर्वाक्तनेषु चालंकारनिबन्धेषु परंपरितमध्ये एकदेशविवर्तिविधाया अपरिगणनमुपपद्यत इति ॥

वस्तुतस्तु—'क्ष्मासौविदल्लः' इत्यत्राक्षेपलभ्यराजमहिषीरूपकेण परंपरितरूपकाभ्युपगमेऽपि नास्मदुपदर्शितलक्षणस्य तत्राव्याप्तिप्रसङ्गः । 'क्ष्मासौविदल्लः' इत्यस्मादपि क्ष्मामहिषीसौविदल्लः इत्येवान्वयबोधस्याक्षेपसहकृतशब्दजन्यस्य स्वीकारेण प्रथमरूपकारोप्यान्वितत्वस्य द्वितीयरूपकारोप्ये निर्बाधात् । आक्षेपलभ्यस्याप्यर्थस्य उपात्तशब्दार्थेन सह शाब्दबोधे भानं जातिशक्त्याद्यभ्युपगन्तृतान्त्रिकसमयसुप्रसिद्धमेवेति ॥

एवंच-सर्वस्वकारीयविभागवाक्यस्योपलक्षणत्वमवश्याश्रयणीयम् । अन्यथा तेन परंपरितमात्रे प्रदर्शितस्य श्लिष्टाश्लिष्टविधाद्वयस्य तद्व्याख्यातृविमर्शिनीकारेण सावयवेऽपि प्रदर्शनं 'क्ष्मासौविदल्ल इति परम्परितमप्येकदेशविवर्ति । एवमादयोऽन्येऽपि भेदा लेशतस्सूचिता एव' इति सर्वस्वकृत एवोक्तिः,

'एवमादयः' इति प्रतीकमादाय 'परंपरितमप्येकदेशविवर्त्येवंप्रकाराः' इति विमर्शिनीकृदुक्तिश्च स्वरसतो न संगच्छेत। न संगच्छेऽत च श्लिष्टपरंपरितनिरूपणावसरे 'विद्वन्मानसहंस' इति पद्यमुदाहृत्य 'इदं हि एकदेशविवर्त्यपीत्युच्यते' इति काव्यप्रदीपग्रन्थः, इदं हीति प्रतीकमादाय 'मूले इदमपीत्यन्वयः। एकपदोपस्थापितयोरन्तःकरणसरोविशेषयोरभेदाध्यवसायेऽपि नैकत्रापरारोपः तस्य भेदेन विषयनिर्देशापेक्षत्वात्। अन्यथा विषयनिगरणात्मिकायामतिशयोक्तावपि तत्प्रसङ्गात्। तस्मादार्थ एवायमारोप इत्येकदेशविवर्तित्वमत्रापि युक्तम्' इति प्रभाख्यतद्व्याख्यानं च। तस्मात् अत्र 'क्ष्मासौविदल्लः' इत्यादिसर्वस्ववाक्यं यथाश्रुतगत्या परंपरितस्याप्येकदेशविवर्तित्वं प्रत्याययतीति स्वीकरणमेव समुचितमित्युक्तावपि न क्षतिः॥

नन्वेवं परंपरितस्याप्येकदेशविवर्तित्वाङ्गीकारे—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मवचसामुल्लासनावासभूः।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
प्राणाः पञ्चशिलीमुखस्य ललनाचूडामणिस्सा प्रिया॥

इत्यस्य पद्यस्य चित्रमीमांसायां मालानिरवयवरूपकोदाहरणत्वमुक्तमसङ्गतं स्यात्। तत्र 'सौन्दर्यस्य तरङ्गिणी' इत्यादौ सौन्दर्यादौ सलिलत्वाद्यारोपणमन्तरा तरङ्गिणीत्वारोपस्यासौन्दर्यादाक्षेपलब्धसलिलरूपारोप्यस्य तरङ्गिणीरूपारोप्येणान्विततया परंपरितत्वस्याव्याहतत्वादिति चेत्सत्यम्। एतदन्येषां 'कान्तेः कार्मणकर्म' इत्यादीनां मालानिरवयवरूपकोदाहरणत्वेऽप्यदोषः। तत्र हि प्रियायां कार्मणकर्मादिमात्रमारोप्यते न तु कान्त्यादौ

किमपि। तथा च परंपरितसंकीर्णमेवेदं मालानिरवयवरूपकमिति ध्येयम्। दृश्यते ह्येकालंकारमुख्योदाहरणेष्वप्यलंकारान्तरसंकीर्णता। यथा—'ज्योत्स्नाभस्म' इति सावयवरूपकोदाहरणादौ 'लाञ्छनस्य छलेन' इत्यादिकैतवापह्नुत्यादिसंकीर्णता॥

इदं तु शुद्धमालानिरवयवस्योदाहरणम्—

**नमदमरमस्तमकुटं कमलाभूमीकराग्रलीलाब्जम्। तच्चरितश्रोतृजनश्रोत्रवतंसं श्रये हरेश्चरणम्॥ २०८॥**

**नीलाम्बुजसंवननं कालाम्बुदकार्मणं तमालश्रीः। व्यालाचललीलारसलोला मूर्तिर्हरेर्हरत्यार्तिम्॥ २०९॥**

संवननं वशक्रिया। कार्मणं मूलकर्म 'वशक्रिया संवननं मूलकर्म तु कार्मणम' इत्यमरः। श्रीः संपत्। अत्राद्ये उदाहरणे हरिचरणे विषये मकुटलीलाब्जवतंसमात्रारोपः। द्वितीये तु हरिमूर्तौ नीलाम्बुजसंवननकालाम्बुदकार्मणतमालसंपन्मात्रारोप इति शुद्धमालानिरवयवम्। एवमेव वैयधिकरण्येनारोपे 'द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यम्' इत्यादावपि शुद्धमालानिरवयवत्वं बोध्यमित्यलं पल्लवितेन॥

तत्परंपरितं च विभजते—

**श्लिष्टाश्लिष्टविभेदेन तत्परंपरितं द्विधा॥**

**केवलं मालिका चेति तद्द्वयं द्विविधं भवेत्।**

एवमष्टविधं प्राचां मते रूपकमिष्यते ॥४३॥

तत्परंपरितं द्विधा। तत्रापि समर्थकत्वेन विवक्षितस्यारोपस्य श्लेषमूलकत्वे श्लिष्टपरंपरितम्। तदुभयं च केवलं मालारूपं द्विविधम्। अत्र परंपरितरूपके उत्तररूपकस्य पूर्वरूपकं प्रति हेतुत्वमिति मङ्खुकादयो मन्यन्ते। तेषामयमाशयः—'विद्वन्मानसहंस' इत्यादौ राजादेः वर्ण्यत्वेन पुरस्स्फूर्तिकतया तत्र हंसाद्यारोपपूर्वकमेवावर्ण्ये विद्वन्मानसादौ पश्चात् श्लेषेण सरोविशेषाद्यारोपः। एवमश्लिष्टपरम्परितेऽपीति॥ मम्मटादयस्तु—पूर्वरूपकस्योत्तररूपकहेतुत्वं मन्वते। यदाहुः—'एवमारोपनिमित्तो हंसत्वाद्यारोपः' इति। तेषामयं भावः—'विद्वन्मानसहंस' इत्यादौ मानसेत्यादिश्लेषस्य प्राथमिकतया तन्मूलकार्थद्वयाभेदाध्यवसायोपजीविरूपकस्य प्रथमप्रतीत्या तद्बुद्धेरुत्तररूपकबुद्धिं प्रति हेतुत्वं युक्तमिति। हेतुहेतुमद्भावापन्नैकाविषय्यान्विताऽन्यविषयिकत्वं परम्परितत्वमित्यस्मदीयलक्षणने मतद्वयस्यापि संग्रहो भविष्यति॥

तत्र केवलं श्लिष्टपरंपरितं यथा—

भज हृदय रचितयत्नं भुजगाधिपभूमिभृच्छिरोरत्नम्। पुरुषं कमपि प्रत्नं प्रसाधनं तव ततोऽपि किमु नूत्नम् ॥२१०॥

अत्र द्वयोरप्यारोपयोस्समर्थ्यसमर्थकभावस्य वस्तुतस्तुल्यत्वेऽपि भूमिभृत् शैल एव भूमिभृत् राजेति श्लेषमूलकेनारोपेण भगवति शिरोरत्नतादात्म्यारोपस्य समर्थनीयतायां कवेरा-

शयः । अत एव चतुर्थचरणनिवेदितः प्रसाधनान्तरतिरस्कारोऽपि संगच्छते ॥

यथावा—

**विपुलाहिराजविपुलाधरविपुलावासरसिक कमलाक्ष । चपलावलाहकस्त्वं बहुशस्तोयश्श्रियं समेधयसे ॥२११॥**

विपुलः विशालः अहिराजविपुलाधरः शेषाद्रिः तस्य विपुलयां भूम्यां वासे रसिक हे कमलाक्ष चपलावलाहकः लक्ष्मीविद्युद्वारिवाहः 'चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च' इति मेदिनी। त्वं बहुशः तोयश्रियं सलिलसंपदं समेधयसे। पक्षे—बहुशस्तः अयः शुभावहो विधिः तस्य श्रियं संपदम् । यद्वा—बहुशस्तः यः श्रियमिति छेदः बहुशस्तः त्वं चपलावलाहकः यः त्वं श्रियं संपदं समेधयसे इति वाक्यभेदेन योजना। अत्र यच्छब्दस्योत्तरवाक्यस्थतया न पूर्ववाक्ये तच्छब्दोपादानावश्यकत्वम् । अत्रोभयोरप्यारोपयोः परस्परं समर्थ्यसमर्थकभावतौल्येऽपि चपला लक्ष्मीरेव चपला विद्युदिति श्लेषाभित्तिकेनारोपेण भगवति बलाहकतादात्म्यारोपस्समर्थनीय इति कवयितुरभिप्रायः। अत एव चतुर्थचरणगतसभङ्गश्लेषावेदितं बहुशस्तोयश्रीसमेधनमपि युज्यते। उदाहरणद्वयेऽपि रूपकद्वयं कार्यकारणभावेन संजातपरंपरत्वात्परंपरितं श्लिष्टशब्दनिबन्धनं मालारूपत्वविरहात्केवलं च ॥

तदेव मालारूपं यथा—

**सकलसुमनोवसन्तं साधुकदम्बस्य घनतटि-**

त्वन्तम् । मुक्ताळिसरस्वन्तं स्वान्तं श्रयतान्ममाहिगिरिकान्तम् ॥ २१२ ॥

सकलसुमनसां समस्तविदुषामेव कुसुमानाम् । साधुकदम्बस्य सज्जननिवहस्यैव रमणयिनीपतरोः । मुक्तानां प्रकृतिबन्धवियुक्तानां आळिः पङ्क्तिरेव मौक्तिकावळिः तस्याः । स्वान्तं हृदयं कर्तृ ॥

यथावा—

अनिमिषकुलसलिलनिधिं घनविभवविलासभरतपर्त्ववधिम् । परमहिमताहिमानीधरमरविन्देक्षणं भुवि नमानि ॥ २१३ ॥

अनिमिषकुलं दैवतयूथमेव मीनकुलं तस्य सलिलनिधिम् । घनस्सान्द्रो विभवविलासभर एव जलदवैभवलीलातिशयः तस्य तपर्त्ववधिं ग्रीष्मावसानं वर्षासमयमित्यर्थः । परमहिमता श्रेष्ठमाहात्म्यवत्तैव अतिशयितहिमवत्ता तस्याः हिमानीधरं हिमवन्तं अरविन्देक्षणं भुवि नमानि नमेयम् ।

प्रणम्य कृष्णं सहसा पांसुक्लिष्टे महीतले ।
निष्कल्मषो भवेत्सद्यो ललाटे पांसुमण्डनात् ॥

इत्यादिप्रमाणानुसंधानेन भुवि नमानीत्युक्तिः । नमतेर्लोडुत्तमैकवचनम् । अत्र सुमनसामेव सुमनसां वसन्तमित्यादौ श्लेषमूलकेनारोपेण श्रीनिवासे वसन्तत्वाद्यारोपस्य समर्थनीयतयाऽभिमतस्य बहुधा निबन्धनात् श्लिष्टमालापरंपरितमिदम् ॥

अत्र केचित् 'विद्वन्मानसहंस' इत्यादौ वर्ण्ये हंसत्वाद्यारोपाच्चित्तादिषु सरस्त्वाद्यारोपस्यार्थात्प्रतीतेरेकदेशविवर्ति रूपकमेवेदमित्याहुः । वस्तुतस्तु श्लिष्टशब्दनिबन्धनाभेदारोपरूपवैचित्र्यचनैयत्यात्ततो भिन्नमेवेदमिति दिक् ॥

एवमेव—

**भद्रश्रीमलयाद्रिं श्रीवत्सविलासदानसुरसुरभिम् । हंसोल्लासनशरदं वरदं वन्दे वृषाचलद्विरदम् ॥**

इत्यत्रापि श्लिष्टपरंपरितं द्रष्टव्यम् । भद्रश्रीः मंगळसंपदेव भद्रश्रीः चन्दनम् । श्रीवत्स एव श्रीयुक्तो वत्सः । हंसाः ज्ञानिन एव मराळाः ॥

शुद्धपरंपरितं केवलं यथा—

**पवनोदरंभरिगिरेरवनौ लवनाय रिपुकुलवनानाम् । अवनाय च भुवनानां भवनमकार्षिश्श्रिताब्जभुवन हरे ॥ २१५ ॥**

भवनं आविर्भावम् । श्रिताब्जभुवनेत्यत्र भगवति सलिलत्वारोपः श्रितेष्वब्जत्वारोपसमर्थ्यत्वेनाभिमत इति परंपरितम् । मालाश्लेषविरहात्केवलं शुद्धं च ॥

इदमेव मालारूपं यथा—

**भूकेकिनीपयोदं राकेन्दुं तं रमाकुवलयिन्याः । नाकेशजलजभानुं लोकेशं वन्दिषीय शेषाद्रौ ॥**

अत्र लोकेशे श्रीनिवासे पयोदाद्यनेकारोपस्य भूम्यादिषु केकिन्याद्यारोपप्रतीक्षत्वान्मालापरंपरितं शुद्धम् ॥

इदमेकदेशविवर्त्यपि भवतीत्यवोचाम, तद्यथा—

**कान्तेर्नर्तनरङ्गं शान्तेरन्तःपुरं महोत्तुङ्गम् । क्षा-न्तेर्हरित्तुरङ्गं स्वान्ते कलयेम धाम दिव्याङ्गम् ॥**

अत्र भगवति नर्तनरङ्गादिरूपकैः कान्तिशान्तिक्षान्तिषु नर्तकीराज्ञीपद्मिनीरूपकाणि प्रतीयन्त इत्येकदेशविवर्ति मालापरंपरितं शुद्धम् ॥

**भुवनानामाधारं भानामवलम्बनं फणिगिरि-स्थम् । शाखिकुलोल्लासकरं किंचन सौभाग्यमश्च मम हृदय ॥ २१८ ॥**

अत्र भुवनानां लोकानामेव सलिलानां, भानां त्विषामेव ताराणां, शाखिकुलस्य वेदशाखाध्येतृनिवहस्यैव तरुनिकरस्येति श्लिष्टरूपकैर्भगवति विषये समुद्रसुधाकरवसन्तरूपकाणां गम्यमानतया इदमेकदेशविवर्ति श्लिष्टपरंपरितमिति दिक् ॥

**ज्ञानं धनं मतिमतां भानं धनमिह महस्विनां महताम् । सूनं धनं मधुकृतां नूनं धनमहिगिरीशिता नमताम् ॥ २१९ ॥**

अत्र विषयमालाकृतो न कश्चिच्चमत्कारविशेष इति न पृथग्भेदगणनायां गण्यते । आरोप्यमाणमाला तु चमत्कारविशेषशालित्वाद्गण्यत एव । अथ कथं श्लिष्टपरंपरिते 'भुजगाधिपभूमिभृच्छिरोरत्नम्, सकलसुमनोवसन्तम्' इत्यादावेकस्यारोपस्यारोपान्तरहेतुत्वं, यस्मात् श्लेषेण शैलस्य राज्ञश्च विदु-

षां कुसुमाना चाभेदमात्रमत्र प्रतीयते नैकत्रान्यारोपः तस्य स्वतन्त्रविषयनिर्देशापेक्षत्वात् । न च शुद्धाभेदप्रत्यय एवारोपः, विषयनिगरणात्मिकायामतिशयोक्तावतिप्रसङ्गादिति चेत्—सत्यम्, श्लेषेण शुद्धाभेदप्रतीतौ सत्यां प्रकृतारोपसमर्थनाय अन्तरा मानसस्य भगवत्संबन्धिनि गिरौ शिरोरत्नसंबन्धिराजाभेदारोपस्य एवं भगवत्संबन्धिषु देवेषु वसन्तसंबन्धिकुसुमाभेदारोपस्य च कल्पनान्नानुपपत्तिः ॥

अथ कथं—

सौन्दर्यरत्नसिन्धुं सौभाग्यशरत्सरोजिनीबन्धुम्।
स्वान्ते यतेय बन्धुं कौन्तेयसखं फणीन्द्रगिरिबन्धुम् ॥२२०॥

इत्यादौ सौन्दर्यरत्नसिंधुमित्यादिपरंपरितरूपके रूपकत्वं, अभेदारोपस्य सत्त्वेऽपि तस्य सादृश्यमूलकत्वाभावात् । न हि भगवत्सिन्ध्वोस्सादृश्यमत्रोच्यते इति चेत्, न—समर्थकेन सौन्दर्ये रत्नारोपेण धर्मैक्यसंपादने सादृश्यस्य निष्प्रत्यूहत्वादिति दिक् । बन्धुमिति बन्धतेस्तुमुन् ॥

एवं 'भूकेकिनीपयोदम्' इत्यादावारोप्यमाणयोः परस्परमारोपविषययोश्चानुकूल्ये रूपकयोरनुग्राह्यानुग्राहकभावो दर्शितः॥

प्रातिकूल्ये यथा—

कृतिपतिशातनुतशीलं दितिसुतसंघातभूतिवातूलम् । निलयितफणिपतिशैलं कलय परं हृदय दैवमतिवेलम् ॥२२१॥

दितिसुतसंघातस्य भूतिरैश्वर्यमेव भूतिर्भस्म तस्याः वातूलम् । इदं श्लिष्टकेवलपरंपरितम् ॥

इदमेव मालारूपं यथा—

**भुवनजडतावसन्तं संतमसकदम्बकैकभास्वन्तम् । स्वान्ताहिशैलकान्तं चिन्तय दुर्व्याळकुलगरुत्मन्तम् ॥ २२२ ॥**

हे स्वान्तेति संबुद्धिः । भुवनजडता लोकजाड्यमेव जलशैत्यं तस्य वसन्तम् । दुष्टाः ये व्याळाः शठाः दैत्यादयः । त एव व्याळाः भुजगाः 'भेद्यलिङ्गश्शठे व्याळः पुंसि श्वापदसर्पयोः' इत्यमरः । तेषां गरुत्मन्तम् । नाश्यनाशकभावरूपप्रातिकूल्यमुपमानयोस्तथैवोपमेययोश्च । अनुग्राह्यानुग्राहकभावः पुनरारोपयोरविशिष्ट एव । एवमग्रेऽपि ॥

यथा वा—

**दोषोल्लासविभातं दैत्यावश्यायचण्डकरमेतम् । भज भुजगधराभरणं शरणागतपङ्कजातसितकिरणम् ॥ २२३ ॥**

दोषोल्लास एव रात्रिविकासः तस्य विभातं प्रभातम् । दैत्यानामवश्यायो गर्व एव हिमं 'अवश्यायो हिमगर्वयोः' इति रत्नमाला । शरणागतानां पङ्कजातं दुरितबृन्दमेव कमलम् । अत्र भजेत्युक्तिः स्वहृदयं प्रतीति बोध्यम् ॥

यथा वा—

**दुस्तृष्णाकासारं सासारघनं भवाभितापानाम् । वेंकटनाथं कलये जगदातङ्कागदङ्कारम् ॥ २२४ ॥**

दुस्तृष्णा दुर्विषयलिप्सैव निरवधिकपिपासा । 'तृष्णा स्यात्तर्षलिप्सयोः' इति मेदिनी । तस्याः कासारं सरः । भवाभितापा एव तापाः तेषां सासारं धारासहितं घनम् । जगतां आतङ्काः भयान्येव आतङ्काः रोगाः तेषां अगदंकारं वैद्यम् । 'आतङ्कस्संज्वरे रोगे साध्वसे मुरजध्वनौ' इतिरत्नमाला ॥

प्रातिकूल्ये केवलपरंपरितं यथा—

अघयूथतिमिरधूननविभातमहिराजभूधरनिकेतम् । संप्राप्य भवनिशायां शयितः को नाम न प्रबोधमियात् ॥ २२५ ॥

प्रातिकूल्ये मालापरंपरितं यथा—

सौहार्दचन्द्रदर्शैस्सौमुख्यलतादवानलस्पर्शैः ।
सौख्यजलातपमर्शैरलमन्यैस्त्वयि सतीश दुर्दर्शैः

हे ईश भगवन् ॥

यथा वा—

दितितनुजमृगवितंसं दुरितद्विरदाळिकेसरिवतंसम् । फणिशिखरिप्रेयांसं भजे विपत्पाकघूककुलहंसम् ॥ २२७ ॥

दितितनुजमृगाणां वितंसं बन्धनोपकरणं 'वितंसस्तूपकरणं बन्धने मृगपक्षिणाम' इत्यमरः । विपदां विपाकः परिपाकः स एव घूककुलं दिवान्धयूथं तस्य हंसं भानुम् । पूर्वमुदाहरणं भगवदितराश्रयणनिन्दनपरं, इदं तु भगवत्प्रशंसापरमिति विशेषः ॥

यथा वा—

हरिभक्तिबीजराजेरिरिणैश्शुभशीलबालतृणह-
रिणैः। शमदमवनदवदहनैरलं खलैरतिविशृङ्खलै-
र्दृष्टैः ॥ २२८॥

हरिभक्तिरेव बीजराजिः तस्याः इरिणैः ऊषरैः 'इरिणं शून्यमूषरम्' इत्यमरः। शुभं कल्याणं शीलं सद्वृत्तं तदेव बालतृणं तस्य हरिणैः कुरङ्गैः। शमः कामक्रोधाद्यभावः दमः तपः क्लेशसहनं इन्द्रियनिग्रहो वा। 'शमथस्तु शमश्शान्तिर्दान्तिस्तु दमथो दमः' इत्यमरः। तयोस्समाहारः शमदमं तदेव वनं तस्य दवदहनैः। अतिविशृङ्खलैः खलैः दृष्टैरलं तद्दर्शनमप्यस्माकमनभिमतमिति भावः॥

यथा वा—

सज्जनगोव्रजरक्षणतरक्षुभिः क्षुभितमभित इद-
मसुरैः। दुरितदवशमनपवनैर्भुवनं कोऽच्युत वि-
नाऽविता भविता ॥ २२९ ॥

अत्र रक्षणशमनपदे विरोधिलक्षणया विपरीतार्थबोधके। अयमर्थः—द्वयोरेव मालारूपत्वं च पूर्वेभ्योऽत्र विशेषः। एवं पदार्थरूपकं दिङ्मात्रं दर्शितमेव। वाक्यार्थे विषये वाक्यार्थान्तरस्यारोपे वाक्यार्थरूपकम्। यथा हि विशिष्टोपमायां विशेषणानामुपमानोपमेयभाव आर्थः तथाऽत्रापि वाक्यार्थघटकानां पदार्थानां रूपकमर्थावसेयमिति रसगङ्गाधरकृदादयः। अन्ये तु वाक्यार्थे वाक्यार्थान्तरारोपं निदर्शनां मन्वानाः रूपके न कचिदपि बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टतया विषयविषयिणो-

रुपादानम् । सावयवरूपकेऽपि विशेष्यरूपणात्पृथगेवावयवेषु रूपणं न त्ववयवविशिष्टरूपेण विशेष्ये—

आङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे।
विधिविष्टरपद्मस्य नाळदण्डो मुदेऽस्तु वः॥

इत्यत्रापि अङ्घ्रिदण्डनाळदण्डयोर्न बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टरूपता । तयोः प्रतीयमानेन श्यामलत्वविधातृविष्टरकमलाश्लिष्टत्वाद्यनुगामिधर्मेणैवोपमानोपमेयभावात् । किंतु विधातृविष्टरकमलश्लिष्टत्वरूपसाधारणधर्मवत्तासंपादनाय विशेषणविशिष्टतामात्रमुपमेयस्येति वाक्यार्थे वाक्यार्थारोपं न रूपकमित्याहुः

तत्र प्राथमिकमतेन वाक्यार्थरूपकं यथा—

**श्रुतिशतनुतयशसस्ते प्रतियत्नो मादृशां वचोभिर्यत् । घनसारस्यान्यैस्तत्सुरभीकरणं निसर्गतस्सुरभेः ॥ २३० ॥**

प्रतियत्नो गुणाधानम् । अत्र भगवति वचस्सु चारोपविषयविशेषणतया बिम्बभूतेषु घनसारस्य सुगन्धिवस्त्वन्तराणां च विषयिविशेषणत्वेन प्रतिबिम्बानां रूपकं गम्यमानं प्रधानीभूतविशिष्टरूपकाङ्गम् । रूपके बिम्बप्रतिबिम्बभावासंभवान्नेदं रूपकमिति वदतां वचनं त्वनादर्तव्यमेव । ययोरिवादिशब्दप्रयोगे उपमा तयोरेकत्रान्यारोपे रूपकमिति नियमात् । यदाहुः— 'उपमैव तिरोभूतभेदा रूपकम्' इति । यद्यत्र नाभ्युपगच्छसि रूपकं मास्मैवाभ्युपगच्छः तर्हि तत्र इवयथादिशब्दप्रयोगे माभ्युपगा उपमामपि। एवं—

त्वयि कोपो महीपाल सुधांशाविव पावकः।

इत्यादौ ॥

त्वयि निग्रहसंकल्पः पयसिजनिलये दयासुधा-जलधौ । शुक्लप्रतिपदुदञ्चितचन्द्रकलायां कलङ्क इव भायात् ॥२३१॥

इत्यादौ च स्वकल्पितेन विशिष्टेन धर्मिणा सादृश्यस्य प्रत्ययाद्युपमां ब्रवीषि ब्रूहि तावत्तर्हि तत्रैव इवस्यापसारणे । 'त्वयि कोपो महीपाल सुधांशौ हव्यवाहनः' 'शुक्लप्रतिपदुदञ्चितचन्द्रकलायां कलङ्कोऽयम्' इत्यादौ रूपकमपि । नन्वेवं रूपके बिम्बप्रतिबिम्बभावसंभवे—

त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥

इत्यत्रापि रूपकमेव स्यात् । बिम्बप्रतिबिम्बभावेन धर्मस्य सद्भावादिति चेत् इष्टैवेयमापत्तिः । तर्ह्यस्य प्राचीनैर्निदर्शनोदाहरणतोक्तिर्विरुध्येतेति चेत्—कामं विरुध्यतां निदर्शनोदाहरणत्वायोगादस्य । यद्यत्र 'मुखं चन्द्रः' इत्यादिरूपकान्तर इव सत्यपि श्रौतारोपे नेदं रूपकं, किंतु निदर्शनैवेत्याग्रह्यते तदा मुखचन्द्र इत्यपि निदर्शनेत्युच्यतां निरस्यतां च रूपकमुखावलोकनदाक्षिण्यम् । किंच—त्वत्पादेत्यादौ किं पदार्थनिदर्शना? आहोस्विद्वाक्यार्थनिदर्शना? नाद्यः, बिम्बप्रतिबिम्बभावापन्नपदार्थघटितविशिष्टार्थयोरेवात्राभेदप्रतीतेः । कुवलयानन्दोक्तरीत्या धर्म्यन्तरे पदार्थे तद्वृत्तिधर्मस्य पदार्थस्याभेदेनारोपस्याभावाच्च । न द्वितीयः, वाक्यार्थरूपकोच्छेदापत्तेः । इष्टापत्तौ वैपरीत्यस्यापि सुवचत्वाच्च । अस्माभिर्निदर्शनाप्रकरणे वक्ष्यमाणया सरण्या अभेदस्य श्रौतत्वार्थत्वाभ्यां उद्देश्यविधेयभावालिङ्गनानालिङ्गनाभ्यां च रूप-

कनिदर्शनयोर्वैलक्षण्येन सकलव्यवस्थोपपत्तेः । तस्मादत्र वाक्यार्थरूपकमेव । न वाक्यार्थनिदर्शना । तस्याश्चैवमुदाहरणं निर्मातव्यं—

त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ॥

इति । अत्र कर्त्रोरभेदस्य शाब्दत्वेऽपि क्रिययोरभेदस्याशाब्दत्वात्तस्यैव समग्रभारसहिष्णुत्वान्निदर्शनैव । यदपि बिम्बप्रतिबिम्बभावो रूपके नास्तीत्युक्तं, तदयुक्तं, विमर्शिनीकारादिभिः 'कन्दर्पद्विपकर्णकम्बुमलिनैः' इत्यादिना बिम्बप्रतिबिम्बभावेन रूपकस्योदाहृतत्वात् । विस्तरस्तु रसगङ्गाधरे द्रष्टव्यः ॥

**फणिपतिगिरिचूडामणिहरिसेवनजृम्भितो ममानन्दः । उदयगिरिशिखरगतविधुविलोकलुलितो महाब्धिरुद्वेलः ॥ २३१ ॥**

इत्यादावपि विशिष्टरूपकं बोध्यम् । 'त्वयि निग्रहसंकल्पः' इत्यत्र विषयिणस्स्वबुद्धिपरिकल्पितत्वात्कल्पितं विशिष्टरूपकम् । इह तु न तथेति वैलक्षण्यम् ॥

इदं रूपकं वैयधिकरण्येनापि दृश्यते, यथा वा—

**वसनरुचा पल्लवितं हारगमुक्तागणेन कोरकितम् । कौस्तुभमणिना फलितं श्रीविहृतिवनं हरेरुरो ललितम् ॥ २३२ ॥**

वसनरुचा पीताम्बरत्विषा । हरेरुरः श्रीविहृतिवनमिति योजना । अत्र विषयाणां वसनरुच्यादीनां विषयिणां पल्लवा-

दीनां च विभक्तिभेदः । वसनरुचेति तृतीयाया अभेदोऽर्थः । वसनरुगभिन्नपल्लववदिति बोधः । वसनरुगभेदे तु पल्लवेषु गृह्यमाणे हरेरुरसि विहारवनत्वरूपकं परिपोष्यते ॥

साधारणधर्मश्चात्राप्युपमायामिव क्वचिदनुगामी क्वचिद्बिम्बप्रतिबिम्बभावापन्नः क्वचिदुपचरितः क्वचिच्च श्लेषात्मा केवलशब्दरूपः सोऽपि क्वचिच्छब्देनोपात्तः क्वचित्प्रतीयमानतया नोपात्तः ॥

तत्रोपात्तोऽनुगामी यथा

**दुर्विषहविषमविषनिभजन्मजरादिव्यधातुरान्लोकान् । पालयितुं विकिरसि फणिशैलपते ननु कटाक्षममृतं त्वम् ॥ २३३ ॥**

अत्र पालयितुमिति तुमुन्नन्तेन शब्देनोपात्तं लोकपालनं अमृतभगवत्कटाक्षयोरनुगामी धर्मः ॥

अयमेवानुपात्तो यथा—

**परिपाटी तुहिनानां परिपाकश्शीतकिरणकिरणानाम् । परिवर्तनममृतानां परंपरा श्रीपतेरपाङ्गानाम् ॥ २३४ ॥**

अत्र तुहिनपरिपाटीप्रभृतीनां श्रीनिवासापाङ्गानां चानन्ददानादिरनुपात्तः प्रतीयमानो धर्मः ॥

बिम्बप्रतिबिम्बभावापन्नस्तु विशिष्टरूपकप्रसङ्गे निरूपितः ॥

उपचरितो यथा—

**शिशिरतया तव करुणा शिशिरांशुमरीचिवी-**

चिका नूनम् । हृदयं शिरीषकुसुमं पदयुगमहिशैलदीप पद्मयुगम् ॥ २३५ ॥

अत्र शिशिरांशुमरीचिवीचिकारूपके विषये भगवत्करुणायामुपचरितश्शिशिरतारूपो धर्मश्शब्देनोपात्तः । शिरीषकुसुमादिरूपके च मार्दवसौकुमार्यादिरुपचरितो धर्मो नोपात्तः ॥

केवलश्लेषात्मको यथा—

अचलशिखावलमाना सुशोभिनी राधिकाऽम्बरग्राही । (राधिकाधरामृतदा) । शम्पावनी दधाना श्रियमपि हरिमूर्तिरम्बुधरमाला ॥२३६॥

अचलशिखायां शेषाद्रिशिखरे वलमाना संचरन्ती, अन्यत्र अचलः स्थिरः शिखावलानां केकिनां मानः चित्तसमुन्नतिर्यस्यास्सेति पञ्चमीबहुव्रीहिः । सुष्ठु शोभत इति सुशोभिनी । राधिकाम्बरग्राही अम्बरं गृह्णातीत्यम्बरग्राही 'कर्मण्यण्' इत्यणि अणणन्तलक्षणो ङीप् । राधिकायाः अम्बरग्राही सिचयग्राहिणी । भगवत्कर्तृकस्याम्बरग्रहणस्य तद्विग्रहे उपचारः । पक्षे सुशोभि यत् नीरं जलं तेन अधिका । भिन्नं पदम् । अम्बरं अन्तरिक्षं गृह्णाति स्वसंचारार्थमादत्त इत्यम्बरग्राही गगनचारिणीति यावत् । द्वितीयार्धस्य 'सुशोभिनी राधिकाधरामृतदा' इति पाठान्तरम् । तदा सुशोभिनी उक्तोऽर्थः । राधिकायाः अधरामृतं ददातीति तथोक्ता राधायै स्वाधरसुधां प्रयच्छन्तीत्यर्थः । अन्यत्र सुशोभिनीरेण अधिका अत एव धरायाः भुवः अमृतदा सलिलवर्षिणीत्यर्थः । शं पावनीति भिन्ने पदे पावनी पवित्रा

शं सुखं श्रियं पद्मामपि दधाना अन्यत्र शंपायाः तटित अवनी पालनी 'शम्पा शतह्रदा ह्रादिन्यैरावत्यः' इत्यमरः। श्रियं श्यामां शोभामिति यावत्। दधाना अपिशब्दः पूर्वोक्तविशेषणसमुच्चायकः। हरिमूर्तिः श्रीनिवासतनुः अम्बुधरमाला कादम्बिन्येव। अत्र अचलशिखावलमानादिशब्द उपात्त एव प्रतीयते न तु लुप्तः॥

यथा वा—

**भुजगेन्द्रभूभृति सदा सौरभसात्कृततथाविधाभ्युदयः। हरिचन्दनतरुरिन्धे समुन्नतश्रीलता मनोज्ञवपुः॥ २३७॥**

भुजगेन्द्रभूभृति शेषाद्रौ। सदा असौ इति छेदः। रभसात् वर्षात् शरणागतपरित्राणत्वराविशेषाद्वा 'रभसो वेगहर्षयोः' इति विश्वः। कृतः तथाविधः आगोपालं साक्षात्कारार्हः अभ्युदयः आविर्भावो येन स तथोक्तः। मुदा सह वर्तन्त इति समुदः नताः शरणागताः यस्य सः समुन्नतः। श्रीरस्मिन्नस्तीति श्रीलं श्रीशब्दस्य सिध्मादिषु पाठात् 'सिध्मादिभ्यश्च' इति मत्वर्थीयो लच्। 'लक्ष्मीवान् लक्ष्मणश्श्रीलः' इत्यमरः। श्रीलस्य भावः श्रीलता तया मनोज्ञं वपुर्यस्य सतथोक्तः लक्ष्मीविशिष्टतया रमणीयदिव्यमङ्गळविग्रह इत्यर्थः। हरिरेव हरिचन्दनतरुः सदा इन्धे इति भगवत्पक्षे॥

चन्दनतरुपक्षेतु—सदासौरभसात्कृततथाविधाभ्युदय इति समस्तं पदम्। सदासौरभसात्कृतः परिमळव्याप्तः कृतः तथाविधः अभ्युदयः प्रादुर्भावः उत्कर्षो वा यस्य स तथोक्तः।

'अभिविधौ संपदा च' इति कृभ्वस्तियोगे वैकल्पिकतया विहितस्सातिप्रत्ययः । अभिविधिर्व्याप्तिः । समुन्नता समाधिका श्रीः किसलयकुसुमादिशोभा यासां ताः लताः शाखाः 'समे शाखालते' इत्यमरः । ताभिः मनोज्ञं अभिरामं वपुर्यस्य स तथोक्तः हरिचन्दनतरुः भुजगेन्द्रभूभृति मलयगिराविति गम्यते । इन्धे इति योजना ॥

अयमेव साधारणो यत्र युक्तिरूपेणोपन्यस्यते तद्धेतुरूपकम् ॥ यथा—

**अम्बुरुहलोचनोऽयं जम्बूतरुरेव शातकुम्भाद्रौ हरति कथमितरथा पृथुमधुरफलैश्छायया च जनतापान् ॥ २३८ ॥**

शातकुम्भाद्रौ शेषाद्रौ । पृथुभिः विपुलैः मधुरैः आस्वादनीयैः प्रियैश्च फलैः प्रसिद्धैः, मुक्त्यैश्वर्यान्तैः प्रयोजनैश्च छायया अनातपेन दिव्यमङ्गळविग्रहलावण्येन च । जनानां तापान् आतपभवान् आध्यात्मिकादींश्च । अत्र श्लेषेण जम्बूतरोर्भगवति तद्रूप्यप्रत्ययाद्धि रूपकम् । हेतुस्तु श्लिष्ट एव । एवमन्येऽपि प्रकारा विज्ञेयाः ॥

**सरिदधिपयशोबृन्दं सरसीरुहनाभलोचनानन्दम् । करयुगधृतारविन्दं शरणं तत्किमपि दैवतमविन्दम् ॥ २३९ ॥**

अत्र उपमेये उपमानस्य नारोपः अपितु कारणे कार्यस्येति न रूपकं भवतीति प्राचीनाः । एतन्मतानुसारेणैवास्मा-

भिरपि लक्षितम्। उच्छृङ्खलाः पुनरारोपमात्रं रूपकमभिदधाना ईदृशस्थलेऽपि रूपकमेवाभिदधते। वस्तुतस्त्विह वक्ष्यमाणो हेतुहेतुमदैक्यरूपो हेत्वलङ्कार एव॥

ननु—

हरिभक्तिबीजराजेरिरिणैश्शुभशीलबालतृणहरिणैः।
शमदमवनदववदहनैरलं खलैरतिविशृङ्खलैर्दृष्टैः॥

इत्यत्र इरिणहरिणदववदहनैः खलानां किं साधर्म्यं येन तेषामपि रूपकमुदीर्येत इति चेत्—हरिभक्तिबीजराज्योः शुभशीलबालतृणयोः शमदमवनयोश्च ताद्रूप्ये शब्दादुपस्थापितेऽनन्तरमुपस्थितं हरिभक्तिरूपबीजराज्याद्यभाववत्त्वमेव तदिति गृहाण। एवमपि इरिणादीनां खलानां च ताद्रूप्यसिद्धौ इरिणादिरूपखलावृत्तित्वेन हरिभक्तिबीजराज्यादीनां ताद्रूप्यं सिध्येत् हरिभक्तिबीजराज्यादीनां ताद्रूप्यसिद्धौ च हरिभक्तिरूपबीजराज्यादिशून्यत्वेन इरिणादीनां खलानां च ताद्रूप्यमित्यन्योन्याश्रयो न शङ्कनीयः। सर्वसिद्धेः कल्पनामयत्वेन कल्पनायाश्च स्वप्रतिभाकल्पलताधीनत्वात्। शिल्पवेदिभिरन्योन्यावष्टम्भमात्रायत्तस्थितिकाभिरुपलेष्टकाभिर्विचित्रभवनविशेषनिर्मितेश्चेति॥

अत्रेदमवधेयम्—चमत्कारविशेषाधायकतया रूपकसंदोहात्मकमपि सावयवरूपकं रूपकालंकारभेदगणनायां गण्यते यथा वज्ररत्नालंकारभेदगणनायामेकं वज्रचूडारत्नमिव संदोहात्मकवज्रकटकाङ्गदादयोऽपि गण्यन्ते। अन्यथा मालारूपस्योपमादेस्तद्भेदगणनेऽगणनाप्रसङ्गात्। एतेन गवां संघातो गोभेदानां कपिलादीनां गणनायां यथा न गण्यते तथा रूपकभेदगणनाप्रस्तुतौ न संघातात्मकं सावयवं गणनीयमिति परास्तम्। एव-

मस्मात्संघातात्मकात्सावयवान्मालारूपकस्य संघातात्मकत्वेनाविशेषेऽप्येकविषयकत्वपरस्परनिरपेक्षत्वाभ्यामस्ति महद्वैलक्षण्यमिति ॥

विमर्शिनीकारस्तु रूपकनिरूपणावसरे 'कचिच्चाभेदमेव द्रढयितुं विषयिणो निषेधपूर्वकमारोप्यमाणत्वेन तदीयस्य वाऽभेदहेतोर्धर्मस्य हानिकल्पनेनाधिक्येन वा दृढारोपत्वेनापीदं दृश्यते' इत्यभाणीत् । तत्राद्यस्योदाहरणं पर्यस्तापह्नुतिनिरूपणावसरे दर्शयिष्यति। द्वितीयतृतीययोरुदाहरणे तु कुवलयानन्दकृन्मतेन रूपकनिरूपणा वसरे दर्शिते न्यूनाधिकाभेदताद्रूप्यरूपकोदाहाहरणे एवेति ध्येयम् ॥

## अथास्य ध्वनिः.

तत्र शब्दशक्तिमूलो यथा—

**विमतेषु त्वं जिष्णुर्दण्डधरश्चासि पुण्डरीकाक्ष।**
**विनतेषु तु प्रचेता धनदोऽपि च भवसि कनकशिखरिमणे ॥ २४० ॥**

कनकशिखरी शेषाद्रिरित्यवोचाम । प्रसन्नं चेतो यस्य सः प्रचेताः । 'प्रादिभ्यो धातुजस्य' इत्युत्तरपदलोपः । अत्र प्रकरणेन शक्तिनियन्त्रणेऽपीन्द्रयमवरुणकुबेराद्यभेदा भगवति व्यज्यन्ते ॥

यथा वा—

**ऐशानीमाशां त्वं धत्से धृतपद्मको महोत्सेधः।**
**करपुष्करलुलिताब्जो देव त्वं सुप्रतीक एवासि ॥**

हे देव त्वं ऐशानीं शम्भुसंबन्धिनीं आशां मनोरथं दिशं च धत्से पुष्णासि बिभर्षि च । धृता पद्मा श्रीः येन स धृतपद्मकः 'शेषाद्विभाषा' इति कप् । पक्षे—धृतं पद्मकं बिन्दुजालकं येन स तथोक्तः । महान् उत्सेधः उत्कर्षं औन्नत्यं च यस्य सः । करपुष्करेण पाणिपद्मेन शुण्डाग्रभागेन च लुलितं अब्जं शंखो येन सः लुलितानि अब्जानि कमलानि येन सः शोभनं प्रतीकं विग्रहो यस्य सः पक्षे दिग्गजविशेषश्च । अत्रापि प्रकरणवशाद्भगवति शक्तिनियन्त्रणेऽपि सुप्रतीकादिग्गजाभेदो व्यज्यते ॥

अर्थशक्तिमूलो यथा—

**भगवन्भवत्प्रतापो हरितः परितः प्रकाशयति सततम् । विदलयति कमलवलयं शोकं लुम्पति च कोकलोकानाम् ॥ २४२ ॥**

अत्र हरित्प्रकाशकत्वादिना भगवत्प्रतापस्तपनाभिन्न इति रूपकं ध्वन्यते ॥

इत्यलंकारमणिहारे रूपकसरस्सप्तमः.

## अथ परिणामसरः.

**विषयी स्वात्मना यत्र प्रकृतानुपयोगतः ।**
**विषयात्मत्वमभ्येति परिणामस्स ईरितः ॥**

यत्रारोप्यमाणो विषयी किंचित्कार्योपयोगितया निबध्यमानस्स्वातन्त्र्येण तस्य तदुपयोगित्वासंभवात्प्रकृतात्मतापरिणतिमपेक्षते स परिणामः । अत एवान्वर्थसंज्ञोऽयम् । अत्र च विषयाभेदो विषयिण्युपयुज्यते । रूपके तु नैवमिति भवति रूपकादस्य भिदा । अयं च परिणामो द्विविधस्सामानाधिकरण्यवैयधिकरण्याभ्याम् । सामानाधिकरण्येऽपि समासगो वाक्यगश्चेति द्विविधः । तत्राद्यो यथा ॥

द्विरदाधिपवरदानस्फुरदादरणस्य फणिगिरिनियन्तुः । सुरदानवनुतकीर्तेर्वरदायि कराब्जमवतु सुकुमारम् ॥ २४३ ॥

अत्र ह्यब्जस्य वरदानादिकं निबध्यते न तु करस्य । मयूरव्यंसकादिसमासेनोत्तरपदार्थप्राधान्यात् । न च करः अब्जमिवेत्युपमितसमासावलम्बनेन पूर्वपदार्थप्रधानतैव कुतो न स्यादिति वाच्यं, सामान्याप्रयोग एव तदनुशासनात् । इह च सुकुमारमिति सामान्यधर्मप्रयोगात् । अब्जस्य स्वतो वरदानादिकार्यानुपयोगितया प्रकृतभगवत्करात्मतापरिणत्यपेक्षणात्परिणामः ॥

यथा वा—

तावकशुभगुणसौरभविसरैरधिवासितं सतां स्वान्तम् । दुर्दान्तदैवतान्तरदुर्गन्धं दूरतो जहाति हरे ॥ २४४ ॥

अत्र सौरभस्य स्वातन्त्र्येण सत्पुरुषस्वान्ताधिवासनेऽनुपयोगाद्भगवच्छुभगुणतया परिणामः ॥

यथा वा—

बुध्वाऽऽचार्यानुग्रहसिद्धाञ्जनतोऽञ्जनाचलेन्दो त्वाम् । वशयन्विशदस्वान्तो भृशमभिनन्देयमुपशमिततृष्णः ॥ २४५ ॥

अत्र सिद्धाञ्जनस्याचार्यानुग्रहतयैव भगवज्ज्ञानतद्वशीकरणक्षमत्वम् ॥

यथा वा—

श्रीवेङ्कटाद्रिशेखरकटाक्षमयकङ्कटावृतो योगी । चण्डकरमण्डलमपि प्रवेष्टुमीष्टे सहस्रहेतिमयम् ॥ २४६ ॥

हेतयः शस्त्राणि अर्चींषि चेत्यर्थः । 'रवेरर्चिश्च शस्त्रं च वन्हिज्वाला च हेतयः' इत्यमरः । कङ्कटः कवचः । अत्र कङ्कटस्य भगवत्कटाक्षतया परिणामादेव चण्डकरमण्डलप्रवेशक्षमतेति ध्येयम् ॥

वाक्यगो यथा—

किंनु तया संपत्त्या वैधात्र्या वाऽपि कर्मपरिणत्या । त्वां प्रेप्सोर्वितर हरे भक्तिं धनमेव मे विरक्तिघनम् ॥ २४७ ॥

'कर्मणां परिपाकत्वादा विरञ्चादमङ्गळम्' इत्युक्तस्वरूपया ब्राह्मयाऽपि संपदा त्वामेव प्रेप्सोर्मे किं साध्यम् । भक्तिं त्वद्भक्तिरूपमेव धनं देहीत्यर्थः । अत्रारोप्यमाणं धनं भक्तिरू-

पापन्नमेव वितरणरूपकार्योपयोगि, न स्वात्मना । कवेर्भगवत्प्राप्तिमात्रमपेक्षमाणस्य वैरिञ्चिविभूतेरपि तृणीकरणेन केवलधनार्थिताविरहात् ॥

यथा वा—

**फणधरधरणिधरेन्द्रा स्मरणं तव चरणयोः कतकरेणुः । संशयधूसरतां नस्संशमयति हंत सर्वतत्वार्थे ॥ २४८ ॥**

अत्रारोप्यमाणः कतरेणुर्भगवत्स्मरणतापत्त्यैव संशयधूसरतासंशमनलक्षणकार्ये उपयुज्यते न स्वातन्त्र्येणेति भवति परिणामः । उदाहरणबाहुल्यं बुद्धिवैशद्याय ॥

व्यधिकरणो यथा—

**अधररुचा रागवती नलिनवती नयनपाणिचरणेन । लक्ष्मीः प्रभातलक्ष्मीराधत्ते नः प्रबोधमनवधिकम् ॥ २४९ ॥**

अत्रानवधिकप्रबोधाधानं परिमितप्रबोधाधायिन्याः प्रभातलक्ष्म्यास्स्वात्मना बाधितं लक्ष्मीरूपेण तु संगच्छत इति भवति परिणामः । स च परस्परासापेक्षबहुसंघातात्मकतया सावयवः । तत्र पूर्वार्धगतौ द्वाववयवौ व्यधिकरणौ उत्तरार्धगतश्चैकस्समानाधिकरणः । अनवधिकं प्रबोधं असंकुचितं ज्ञानं मुक्तचैश्वर्यमिति यावत् ॥

अत्रेदमवधातव्यम्—यत्र विषयस्य विषयितादूप्यापत्त्या प्रकृतकार्योपयोगित्वं तत्र रूपकम्, यत्र तु विषयिणो विषय-

ताद्रूप्यापत्त्या कार्योपयोगित्वं तत्र परिणाम इति। काव्यप्रकाशकारादिभिस्तु--उभयत्राप्युत्तरपदार्थप्रधानमयूरव्यंसकादिसमासाविशेषादीदृशं वैषम्यं नातीव चमत्कारायेति परिणामः पृथगनुपात्तः॥

केचित्तु—"क्वचित्केवलो विषयस्स्वात्मना न प्रकृतोपयोगीत्ययमारोप्यमाणाभिन्नतयाऽवतिष्ठते तत्रारोप्यमाणपरिणामः, यथा—'वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ' अत्र वदनमिन्द्वभिन्नतयाऽवतिष्ठते, केवलस्य वदनस्य दृक्छिशिरीकारकत्वायोगात्। क्वचिच्चारोप्यमाणस्स्वात्मना न प्रकृतकार्योपयोगीत्ययं विषयाभिन्नतयाऽवतिष्ठते। तत्र विषयपरिणामः, यथा—'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति' अत्रेन्दुर्वदनाभिन्नतयाऽवतिष्ठते, केवलस्येन्दोः स्मरतापापनोदकत्वायोगात्। एवं च परिणामद्वयात्मकमिदं रूपकमेव भवितुमर्हति विषयतावच्छेदकविषयितावच्छेदकान्यतरपुरस्कारेण निश्चीयमानविषयिविषयान्यतरत्वस्य तल्लक्षणत्वात्। अत एवोक्तं—'तद्रूपकमभेदो य उपमानोपमेययोः' इति। तस्मान्न रूपकात्परिणामोऽतिरिच्यते" इति वदन्ति। वस्तुतस्तूक्तरीत्या विच्छित्तिविशेषस्य सद्भावे अलंकारान्तरत्वमवश्याभ्युपेत्यम्। अन्यथा तुल्ययोगितादीपकादीनामपि यत्किंचिद्वैलक्षण्यसद्भावेन पृथगलंकारता न स्यादिति दिक्॥

# अथ परिणामध्वनिः.

तत्रार्थशक्तिमूलपरिणामध्वनिर्यथा—

**कल्पमहीरुह कल्पय निरतिशयां संपदं नितान्तं नः। यां सन्तोऽनुभवन्तो जन्मजरादिव्यथां न धावन्ति ॥ २५० ॥**

अत्र वक्तुः परिच्छिन्नैश्वर्यविरक्ततया व्यज्यमानभगवदभिन्नतया कल्पतरुर्विवक्षितः, तेन रूपेणैव तस्योत्तरार्धविवक्षितमुक्त्यैश्वर्यरूपनिरतिशयसंपत्संपादकत्वात्। न चात्र विषयनिगरणात्मकातिशयोक्तिश्शक्या वक्तुम्। तस्यां ह्यारोप्यमाणाभिन्नत्वेन विषयस्य प्रत्ययः। यथा—'कमलं कनकलतायाम्' इत्यादौ कनकलताभिन्नायां वनितायां कमलाभिन्नं मुखमिति। अत्र तु भगवतः कल्पमहोरुहाभिन्नत्वेन प्रत्यये पुनर्निरतिशयसंपत्संपादनलक्षणप्रकृतकार्यसिद्धिरिति कल्पकस्यारोप्यमाणस्य भगवद्रूपविषयाभिन्नत्वं मृग्यम्। तच्च व्यङ्ग्यतायामेव भवतीति परिणामध्वनिरेवायम्, नातिशयोक्तिः॥

शब्दशक्तिमूलो यथा—

**कंजायताक्षि मुग्धे संज्वरमनुविंदसे सखि किमर्थम्। आशास्व घनं कृष्णं येन त्वं शान्तिमेष्यसि क्षिप्रम् ॥ २५१ ॥**

इदं काञ्चिद्गोपिकां प्रति कस्याश्चित्सख्या वचनम्। अत्र झगिति संज्वरशमनहेतुत्वेनोपस्थिते नीलाम्बुदे पश्चान्मुग्धारूप-

बोद्धव्याविशेष्यकस्मरसंज्वरवत्तावैशिष्ट्यबुद्धौ सत्यां सहृदयाया-स्तस्याः तादृशसंज्वरशान्तिकारिश्रीकृष्णरूपविषयताद्रूप्यबुद्धिर्जा-ते। अयं शब्दशक्तिमूलः ॥

यथावा—

**अयि दूयसे किमर्थं साधो दूरं विधेहि जाड्य-भयम्। प्रत्यासन्नं माधवमीक्षस्व य एतदुपशमं नेता ॥ २५२ ॥**

इदं शिशिरर्तौ वेङ्कटाचलप्रान्ते निवसन्तं कंचन साधुं प्रति कस्यचिद्वचनम्। जाड्यं शैत्यं मान्द्यं च। माधवं वसन्तं भगवन्तं च। अत्राञ्जसा जाड्यशान्तिनिमित्ततयोपस्थिते वसन्ते पश्चाद्बोधनीयसाधुविशेष्यकजाड्यवत्तावैशिष्ट्यबुद्धौ सत्यां सहृद-यस्य तादृशजाड्यशमयितृश्रीनिवासरूपविषयताद्रूप्यबुद्धिर्भवती-त्ययमपि शब्दशक्तिमूलः परिणामध्वनिः ॥

इत्यलंकारमणिहारे परिणामसरोऽष्टमः.

## अथोल्लेखसरः.

**ग्रहीतृभिरनेकैर्यदेकस्यानेकधा ग्रहः।**
**रुच्यादिकारणवशात्तमुल्लेखं प्रचक्षते ॥ ४३ ॥**

एकस्य वस्तुनो निमित्तवशाद्यदनेकैर्ग्रहीतृभिरनेकप्रकारकं ग्रहणं स उल्लेखः। रुच्यदीत्यादिशब्देनार्थित्वभयादीनां संग्रहः।

रुचिः अभिरतिः । अर्थित्वं लिप्सा । भयं प्रसिद्धमेव । अनेकधोल्लेखे रुच्यादीनां यथार्हं प्रयोजकत्वम् ॥

**कनकाचलेश्वरकरे कनन्तमब्जं सुधांशुरिति चक्रम् । दिनमणिरिति च विदित्वाऽहर्षि चकोरैश्च चक्रवाकैश्च ॥ २५३ ॥**

अत्र चकोरचक्रवाकैः पाञ्चजन्यसुदर्शनयोस्सुधांशुत्वेन दिनमणित्वेन च ग्रहणे भ्रान्तिरूपेऽतिप्रसङ्गवारणायैकस्य वस्तुन इति ॥

**वारिनिधेर्वात्सल्यं वारिजविपिनस्य विभवपौष्कल्यम् । शौरेर्महिमौज्ज्वल्यं नारीरत्नं स्मरेयमनुकल्यम् ॥ २५४ ॥**

इत्यादिमालारूपकेऽतिप्रसङ्गवारणायानेकैर्ग्रहीतृभिरित्यविवक्षितबहुत्वं ग्रहणविशेषणम् ॥

**हरिमहिशिलोच्चयाग्रे विलोक्य मत्वा बलाहकोऽयमिति । माद्यन्ति दन्तिनिवहा नृत्यन्ति कलापिनामपि कुलानि ॥ २५५ ॥**

अत्र हरिरूपस्यैकस्य वस्तुनोऽनेकैर्दन्तिकलापिकुलैर्ग्रहीतृभिरेकेनैव बलाहकत्वरूपेण प्रकारेणेन ग्रहणमिति तत्रातिप्रसंगवारणायानेकप्रकारकमिति । ग्रहणमिति ग्रहणसमुदायो विवक्षितः । एकत्वं जातौ, अनेकग्रहीतृकस्यैकस्य ग्रहणस्याप्रसिद्धेः ।

अनेकैर्ग्रहीतृभिरनेकप्रकारकं ग्रहणमित्यनेन द्वाभ्यां द्विऽधाग्रहणेऽप्ययमलंकारोऽक्षत एव। अयं च द्विविधः। शुद्धालंकारान्तरसंकीर्णश्चेति॥। तत्र शुद्धो यथा—

आर्तो लक्ष्मीपतिरित्यर्थार्थी त्वां महावदान्य इति। जिज्ञासुर्ज्ञानमिति ज्ञानी तु शरण्य इति भजति भगवन् ॥२५६॥

अत्र—

चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन।
आर्तोजिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥

इतिश्लोकार्थोऽनुसंहितः। सुकृतिनः पुण्यकर्माणः मां शरणमुपगम्य मामेव भजन्ते। ते च सुकृततारतम्येन चतुर्विधाः। सुकृतगरीयस्त्वेन प्रतिपत्तिवैशेष्यादुत्तरोत्तराधिकतमा भवन्ति। आर्तः प्रतिष्ठाहीनो भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः लक्ष्मीपतिरिति भजति ऐश्वर्यदानसामर्थ्याभिप्रायकं लक्ष्मीपतिपदम्। एवमग्रेऽप्यूह्यम्। अर्थार्थी अप्राप्तैश्वर्यतया अपूर्वैश्वर्यकामः। तयोर्मुखभेदमात्रम्। ऐश्वर्यविषयतयैक्यादेक एवाधिकारः। महावदान्य इति भजति। जिज्ञासुः प्रकृतिवियुक्तब्रह्मात्मकात्मस्वरूपावाप्तीच्छुः ज्ञानमेवास्य स्वरूपमिति जिज्ञासुरित्युक्तम्। ज्ञानमिति भजति। ज्ञानस्वरूपजीवशरीरक इति भजति। ज्ञानी तु भगवच्छेषतैकरसात्मस्वरूपवित् प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यन् भगवन्तं प्रेप्सुः भगवन्तमेव परमप्राप्यं मन्वानः शरण्य इति परमप्राप्य इति भजतीत्यर्थः। अत्र च लिप्सारुचिभ्यां निमित्ताभ्यामार्ताद्यनेकग्रहीतृकलक्ष्मीपतित्वाद्यनेकप्रकार-

कग्रहणसमुदायो भगवद्विषयरतिभावोपस्कारकः शुद्ध एवात्रा-यमुल्लेखालंकारः, रूपकादिभिरमिश्रितत्वात् ॥

संकीर्णो यथा—

तावकपदनखरेखां मत्वेन्दुकलां नमन्मृडो म-कुटम् । स्पृशति निजमहिगिरीश्वर वज्रं मत्वेक्षते स्वकरमिन्द्रः ॥ २५७ ॥

अत्र मृडाद्यैकैकग्रहणरूपया भ्रान्त्या समुदायात्मक उल्लेख-स्संकीर्णः ॥

वृषगिरिपतिं तमालं कतिचित्कतिचिद्वदन्तु ह-रिनीलम् । ब्रूमो वयमतिवेलं पुञ्जितलक्ष्मीकटा-क्षरुचिजालम् ॥ २५८ ॥

अत्र भगवतस्तमालत्वादेः परमतत्वेन निषेध्यतयोपन्या-सादपह्नुत्या संकीर्ण उल्लेखः ॥

सन्देहसङ्कीर्णो यथा—

तपनो वा ज्वलनो वेत्यरिललना वेत्ति तव करे चक्रम् । स्वीयं लक्ष्मीस्तु हरे केयूरं वाऽथ नूपुरं वेति ॥ २५९ ॥

अत्र द्वयोर्ग्रहणयोः प्रत्येकं संदेहत्वं समुदायस्य तूल्लेखता ॥

अवरोधसद्म पद्मा मनुते भूमिर्निवासभूमिं त्वाम् । नीला लीलाशालां नीलाचलमौलिलो-लनीलमणे ॥ २६० ॥

नीलाचल इति शेषाद्रेरेव नामान्तरम् । अत्र यद्यवरोध-सन्नत्वादीनामुपरञ्जकतामात्रेणान्वयस्तदा रूपकसंकीर्ण उल्लेखः । यदि ताद्रूप्यानुभवगोचरतया तदा भ्रान्तिमत्संकीर्णः ॥

अयं च स्वरूपहेतुफलोल्लेखनरूपत्वात्त्रिविधः । तत्र स्व-रूपोल्लेखस्समनन्तरमेवोदाहृतः ॥

हेतूल्लेखो यथा—

दानात्कतिचन केचिद्दानान्नाम्नां विदुः प्रसदनं ते । ध्यानात्परे वयं तु श्रीनाथाकिंचनत्वविभवेन ॥

अत्रैकस्यैव प्रसदनस्य हेतूनामनेकधात्वेनानेकैरुल्लेखनम् ॥

फलोल्लेखो यथा—

विपदपहृतये दीनाश्श्रीदानायार्थलिप्सवो मनुजाः । वृद्धास्स्वबन्धमुक्त्यै तद्धाम वृषाद्रिभुवि व-दन्त्युदितम् ॥२६२॥

अत्रैकस्यैव भगवदुदयस्य फलानामनेकधात्वेनोल्लेखनम् । तद्धाम तत्तेजः परं ब्रह्मेत्यर्थः ॥

## अथ द्वितीय उल्लेखः.

एकस्य विषयादीनामनेकत्वनिबन्धनम् ।
नैकधात्वं ग्रहीत्रैक्येऽप्युल्लेखस्सोपि संमतः ॥ ४४

विषयादीनामित्यत्रादिशब्देनाश्रयादिग्रहणम् । यत्रासत्यपि

ग्रहीतृभेदे विषयाश्रयसंबन्धिनामन्यतमानेकत्वप्रयुक्तस्य वस्तुनोऽनेकप्रकारत्वमयमन्य उल्लेखः। तत्र विषयसप्तमीनिर्दिष्टो विषय इत्युच्यते। अधिकरणसप्तमीनिर्दिष्टस्त्वाश्रयः। षष्ठ्या निर्दिष्टस्संबन्धीति विवेकः। अयमपि शुद्धसङ्कीर्णभेदेन द्विविधः॥

तत्र शुद्धो यथा—

**स्निग्धाः कौस्तुभरत्ने दिग्धाः कृपयाऽत्र मयि हरौ मुग्धाः। दुग्धाम्बुराशिदुहितुस्स्रग्धारा इव जयन्ति दृग्धाराः॥ २६३॥**

कौस्तुभरत्ने स्निग्धाः स्नेहयुक्ताः सहोदरत्वात्। अत्र अस्मिन् मयि कृपया दिग्धाः दीनतमत्वात्। हरौ भगवति मुग्धाः व्यामोहशालिन्यः। वल्लभत्वादिति भावः। इह दृग्धाराणां विषयानेकत्वप्रयुक्त उल्लेखः॥

**हसिते सितमसितं रुच्येतं पुरुषं तथाम्बरे पीतम्। शोणमधरे पुराणं करचरणतलेऽरुणं श्रये शरणम्॥ २६४॥**

रुचीति सप्तम्यन्तम्। अत्रैकस्यैव भगवतः हसितादिषु विषयेष्वनेकेषु सितादिवर्णानेकत्वमेकेनैव ग्रहीत्रोल्लिखितमित्याश्रयानेकत्वप्रयुक्तोऽयमुल्लेखः। एतं पुराणं पुरुषमिति योजना। एतं उक्तरीत्या नानावर्णत्वाच्छबलमित्यपि गम्यते। 'चित्रकिर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः॥

संबन्ध्यनेकत्वप्रयुक्तस्त्वनन्तरमेवोदाहरिष्यते।

संकीर्णो यथा—

**मृगमदतिलकति निटिले मृगपतिगिरिनेतुरुरसि लाञ्छनति। भ्रमरति नाभीकमले कमलायाः प्रसृमरा कटाक्षरुचिः ॥ २६५ ॥**

अत्रोपमया सङ्कीर्णः । यद्वा—तत्तदधिकरणौचित्यात्कस्तूरीतिलकादितादात्म्यसम्भावनायामुपमार्थे विहितोऽपि क्विबुत्प्रेक्षायां पर्यवस्यतीत्युपमोपक्रमोत्प्रेक्षा । एतद्विमर्शस्तूत्प्रेक्षानिरूपणावसरे भविष्यति । अस्मिन् पक्षे उत्प्रेक्षया संकीर्णोऽयमाश्रयानेकत्वप्रयुक्त उल्लेखः ॥

यथा वा—

**मौक्तिकमसि दन्तपङ्क्तौ नीलासि वालेषु विद्रुमस्यधरे। हीरसि नखेषु कमले सत्यं रत्नाकरात्मजात्वमिति ॥ २६६ ॥**

अत्रोपमासङ्कीर्णः काव्यलिङ्गशिरस्कः ॥

यथा वा—

**ऊरुयुगे रम्भाऽसि श्रीर्नासायां तिलोत्तमाभिख्या। वैभवतो विश्वाची त्वमप्सरोज्यायसीति युक्तमिदम् ॥ २६७ ॥**

हे श्रीः ऊरुयुगे रम्भा कदली तन्नामकाप्सराश्च । नासायां

तिलोत्तमस्य तिलकुसुमश्रेष्ठस्य अभिख्या शोभेव शोभा यस्या-स्सा, तिलोत्तमेत्यभिख्या नाम यस्यास्सा, तथोक्ता तन्नामाप्सरा इति च। 'अभिख्या नामशोभयोः' इत्यमरः। वैभवतः वैभवे सार्वविभक्तिकस्तसिः। विश्वमञ्चतीति विश्वाची सर्वजगद्व्यापिनी, तन्नामाप्सराश्च। तस्मात् त्वं अप्सरसां ज्यायसि श्रेष्ठा ततोऽप्यतिसुन्दरीत्यर्थः। पक्षे—अप्सरसो ज्यायस्यो ज्येष्ठाः यस्यास्सेति बहुव्रीहिः। 'नद्यृतश्च' इति प्राप्तस्य कपः 'ईयसश्च' इति निषेधः। 'ईयसो बहुव्रीहेर्नेति वाच्यम्' इति निषेधात् न 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः। विष्णुपुराणादावप्सरसां श्रीलक्ष्म्यपेक्षया प्रागेवाविर्भावोऽभाणि। पुराणान्तरेषु यदि श्रियोऽनन्तरमेव तासामुत्पत्तिरुपलभ्येत तदा षष्ठीतत्पुरुषोऽप्यस्तु। इतीदं युक्तमित्यन्वयः। अत्र श्लेषरूपकसंकीर्णः। काव्यलिङ्गसंकीर्णसमालंकारशिरस्कः॥

संबन्ध्यनेकत्वप्रयुक्तो यथा—

**भक्तानां मन्दारा भवतप्तानाममूस्सुधाधाराः।**
**नारायणगिरिनेतुर्दाराणां सन्तु मयि दृगासाराः॥**

अत्र कविना मन्दारत्वादिना रूपेण कटाक्षाणां रूपवतां करणाद्रूपकेण भक्तादीनामेतेषु कटाक्षेष्वभीप्सितार्थदानादिना मन्दारत्वादिभ्रान्तिरपि संभवतीति भ्रान्तिमता, भक्तादिभिरनेकैर्ग्रहीतृभिर्मन्दारत्वाद्यनेकधर्मेणोल्लेखनात्प्रागुक्तोल्लेखप्रकारेण च सह संकीर्णोऽयं संबन्धिषष्ठ्यन्तपदभेदप्रयुक्तवर्ण्यानेकत्वप्रकार उल्लेखः॥

केचित्तु सहचरानेकत्वप्रयुक्तमनेकविधत्वमप्युल्लेखमाहुः। तदेदमुदाहरणम्—

गोपेषु गोपरूपो भूपेषु विभासि धन्विमूर्धन्यः।
तापसयूथे तापस एकोऽनेकाकृतिस्त्वमब्जाक्ष ॥

अत्र गोपादिसहचरभेदप्रयुक्तं भगवतोऽनेकविधत्वम्। एव-मन्येषां सम्बन्धिनां भेदेऽप्यूह्यम् ॥

## अथोल्लेखध्वनिः.

यथा—

ननु नाथ मोहभुग्ना व्यसनविविग्ना विरोधिभि-र्भग्नाः। उपतापैरपि रुग्णास्त्वां वीक्ष्यानन्दसंप्लवे मग्नाः ॥ २७० ॥

अत्र चरणत्रयोदितानां चतुर्णां वीक्षणकर्तॄणामानन्दसंप्लव-मग्नत्वोक्त्या क्रमेण मोहव्यसनविरोध्युपतापनिरासकत्वप्रकार-काणि ग्रहणान्याक्षिप्यन्ते। अयं च शुद्धस्योल्लेखस्य ध्वनिः॥

संकीर्णस्य यथा—

अहिगिरिपरिसरधरणौ विहरति हरिनीलरुचि-ररुचि भवति। अनुगच्छन्ति करिण्यो ननु नृत्य-न्ति च रमेश बर्हिण्यः ॥ २७१ ॥

अत्र ध्वन्यमानया एकैकग्रहणरूपया द्विरदजलदभ्रान्त्या तदुभयसमुदायरूप उल्लेखस्संकीर्णः। न चात्र भ्रान्तिरेव चम-

त्कारिणीत्युल्लेखश्शक्योऽपह्नोतुम् । अनेककर्तृकानेकधाग्रहणस्यालंकारान्तरविविक्तविषयस्य विच्छित्तिविशेषस्येहापि जागरूकत्वात् ॥

द्वितीयस्योल्लेखस्य ध्वनिर्यथा—

**गगने विसृत्वरी ते स्थगयति ककुभां मुखानि तनुसुषमा । धरणौ तु विबुधतटिनीं परिरिप्सुर्भवति फणिगिरिसुरद्रो ॥ १७२ ॥**

अत्राधिकरणभेदप्रयुक्तमेकस्यामेव श्रीनिवासविग्रहसुषमायां कादम्बिनीत्वयमुनात्वरूपानेकविधत्वं रूपकसंकीर्णं ध्वन्यते ॥

इत्यलंकारमणिहारे उल्लेखसरो नवमः

---

## अथ स्मृत्यलंकारसरः.

**या सादृश्यपरिज्ञानोद्बुद्धसंस्कारतस्स्मृतिः ।**
**प्रयोज्या सा स्मृतिर्नामालंकृतिः कथ्यते बुधैः ॥**

सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्या स्मृतिः स्मृतिर्नामालंकारः । अयमेव स्मरणं स्मृतिमानित्यपि व्यवह्रियते ॥

यथा—

**सुरुचिरमौक्तिकमणिसरविसृमरमसृणतरशुचिरुचिनिमग्ने । कमलेक्षणहृदि कौस्तुभकमले दुग्धाब्धिनिवसतिं स्मरतः ॥ १७३ ॥**

कौस्तुभश्च कमला च कौस्तुभकमले मौक्तिकसरशुचिरुचिनिमग्ने सत्यौ दुग्धाब्धिनिवसतिं स्मरत इति योजना ॥

यथा वा—

**अभयं दातुं सरभसमिभवरशिरसि स्वहस्तमाधातुः । चेतः फणिगिरिनेतुर्यातं कमलाकुचद्वयं स्फीतम् ॥ २७४ ॥**

अत्राद्ये स्मृतिर्वाच्या, द्वितीये तु लक्ष्येति विशेषः ॥

यथा वा—

**लक्ष्मीकटाक्षलहरीं वीक्ष्य शरत्फुल्लमल्लिका रात्रीः । तास्स्मरति फणिगिरीन्दू रासविलासं च तासु गोपीनाम् ॥ २७५ ॥**

शरत्फुल्लमल्लिकाः ताः रात्रीरित्येतैः पदैः 'भगवानपि ता रात्रीश्शरदोत्फुल्लमल्लिकाः' इति श्रीभागवतीयपद्यं प्रत्यभिज्ञाप्यते । अत्र शरद्रात्रिरासविलासयोस्स्मरणं यद्यपि न तत्सादृश्यदर्शनोद्बुद्धसंस्कारप्रयोज्यं, तथाऽपि लक्ष्मीकटाक्षगतलहरीसादृश्योद्बुद्धयमुनाविषयकसंस्कारजन्यतत्स्मरणाधीनत्वाद्भवत्येव यत्किंचित्सादृश्यदर्शनोद्बुद्धसंस्कारप्रयोज्यम् । न हि सादृश्ये स्मर्यमाणसंबन्धित्वं विवक्षितम् । एवं वाच्ययोश्शरद्रात्रिरासविलासस्मरणयोः एतत्कारणतयाऽऽक्षिप्तस्य यमुनास्मरणस्य चाविशेषेण संग्रहाय लक्षणे जन्यत्वमपहाय प्रयोज्यत्वमुपात्तम् । केचित्तु सदृशज्ञानोद्बुद्धसंस्कारजन्यं सदृशविषयकमेव स्मरणमलंकार इत्याहुः, तेषां शरद्रात्रिरासादिस्मृतिरनलंकार एव ॥

अधिभुजगराजशैलं यं घननीलं विलोलवन-
मालम् । निरवर्णयमतिवेलं तमेव देवं स्मरामि
शुभलीलम् ॥ २७६ ॥

अत्र स्मृतिः चिन्तोद्बुद्धसंस्कारप्रयोज्यत्वान्नालंकारपदवी-
मवगाहते । व्यङ्ग्यत्वविरहाच्च न भावपदवीम् ॥

एवं—

कलिरिपुगुरुवरकरुणासुरतटिनीधूतमोहमा-
लिन्यः । शेषाद्रिपतेर्नित्यं शेषित्वं शेषतां च मेऽ-
स्मार्षम् ॥ २७७ ॥

कलिरिपुगुरुवराः श्रीमत्परकालयतीन्द्रमहादेशिकाः । शेषि-
त्वं स्वामित्वं शेषतां परगतातिशयाधानेच्छया उपादेयत्वस्व-
रूपतां च अस्मार्षम् ॥

स्वोज्जीवनेच्छा यदि ते स्वसत्तायां यदि स्पृहा ।
आत्मदास्यं हरेस्स्वाम्यं स्वभावं च सदा स्मर ॥

इत्युक्तरीत्या स्मृतवानित्यर्थः । इहापि स्मृतिर्नालंकारो नापि भावः ।
व्यङ्ग्यस्यैव व्यभिचारिणो भावत्वात् ॥

यथा—

गम्भीरिमा शिशिरिमा गरिमा परमाद्भुतो म-
धुरिमा च । तत्तादृगह्विरगिरेरुत्तंसादन्यतः क्व वा
दृष्टः ॥२७८ ॥

अयं ह्यालंकारिकाणां संप्रदायः—यत्सादृश्यमूलकत्वे स्मृ-
तिर्निदर्शनादिवदलंकारः, तद्विरहे व्यङ्ग्यतायां भावः । तयो-

रभावे तु वस्तुमात्रमिति । यत्तु 'सदृशानुभवाद्वस्त्वन्तरस्मृतिः स्मरणम्' इति स्मरणालंकारलक्षणं तन्न चतुरश्रम्, सदृशस्मरणादुद्बुद्धेन संस्कारेण जनिते स्मरणे अव्याप्तेः ॥

यथा—

**भ्रमर चिरं जीव त्वं स्मारयता त्वदवलम्बमम्बुरुहम् । येन त्वया तदुपमे विलोचने स्मारिते वृषगिरीन्दोः ॥ २७१ ॥**

अत्र भ्रमरदर्शनादेकसंबन्धिज्ञानाज्जनितेनापरसंबन्धिनोऽम्बुरुहस्य भगवन्नयनसदृशस्य स्मरणेन जनितं भगवन्नयनस्मरणं भगवद्विषयकरतिभावाङ्गतयाऽलंकारः । यदि तु सदृशानुभवादित्येतदपहाय सदृशज्ञानादिति लक्षणे निवेश्येत तदा भवत्यस्यापि संग्रह इति दिक् ॥

अत्रेदमवधेयम्—सादृश्यप्रयोजकस्य साधारणधर्मस्य साक्षादुपादानानुपादानयोरुपमायामिवात्रापि व्यवस्था । तथाहि— उपमायां तावत्कचिद्धर्मो नियमेन प्रतीयमानस्साक्षान्नोपादेय एव। यथा—'शंखवत्पाण्डुरच्छविः' इत्यत्र पाण्डुरत्वम् । 'शङ्खवत्पाण्डुरोऽयम्' इत्यादौ तु नानाविधेषु धर्मेष्वकेनैव धर्मेण सादृश्यमित्यस्य दुर्विज्ञानत्वात् सर्वत्रोपमानोपमेयसाधारणस्य श्लिष्टशब्दात्मकस्यान्यस्य वा स्वाविवक्षितस्य साधारणधर्मस्योपमाप्रयोजकत्वसंभवात्तद्वारणाय पाण्डुरत्वादिर्धर्मो वाच्यतां नीयते । यथा वा—'अरविन्दमिव सुन्दरं मुखं' इत्यादौ सुन्दरत्वादिः । न नीयते च धर्मः कचिद्वाच्यतां वक्तुरन्यधर्मानुपस्थितेः प्रसिद्धेः प्राबल्यात् । यथा—'अरविन्दमिव मुखम्' इत्यादौ सु-

न्दरत्वादिरेव । अप्रसिद्धस्तु धर्मोऽवश्यं साक्षादुपादेय एव । अन्यथा तस्याप्रतिपत्तौ कवेस्तदुपमानिर्माणप्रयासवैयर्थ्यापत्तेः । यथा—'घना इव महासारा जना यस्यां प्रतिष्ठिताः' इत्यादौ श्लिष्टश्शब्दात्मकः । तथाच कश्चित्साधारणो धर्मस्साक्षादनुपादेय एव, कश्चिदुपादेयोऽनुपादेयश्च, कश्चिदुपादेय एवेति सहृदयसम्मतस्समयः । एवमेवोपमाजीवातुकेऽस्मिन् स्मृत्यलंकारेऽपीति । तत्रानुगामिनि धर्मे 'विलोचने स्मारिते वृषगिरीन्दोः' इत्यनुपदोदाहृते पद्ये निवेदितमेव स्मरणम् । तत्राम्बुरुहभगवद्विलोचनयोर्विपुलत्वविमलत्वसुन्दरत्वादिरनुपात्तस्समानोऽनुगामी धर्मः ॥

बिम्बप्रतिबिम्बभावापन्ने त्विदमुदाहरणम्—

**शारदनीरदनिविडितवृषगिरिशिखरावलोकनेन हरिः । शुचिकञ्चुकमस्मार्षीत्पद्मावत्याः पयोधरद्वंद्वम् ॥ २८० ॥**

अत्र बिम्बप्रतिबिम्बभावापन्ने समानधर्मे स्मृतिः ॥

उपचरिते यथा—

**मधुरतरं तव चरितं मधुमथनाहं यदा निशमयामि । अध्येमि तदा चेतोमध्ये मधुविधुसुधामधुरसानाम् ॥ २८१ ॥**

मधुरसा द्राक्षा 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च' इत्यमरः । अध्येमि स्मरामि 'इक् स्मरणे' इत्यस्माद्धातोरधिपूर्वाल्लट् 'अधीगर्थ' इति षष्ठी । चेतोमध्ये हृदयान्तरे ॥

यथा वा—

निर्बिरीससौकुमार्यं शिरीषकुसुमं निरीक्षमाणस्य । स्मृतिसृतिमधिरोहति मम सरीसृपगिरीशसहचरीहृदयम् ॥ २८२ ॥

अत्र मधुरतरत्वादिर्धर्म उपचरितः । इयांस्तु विशेषः—यदेकत्रानुभूयमाने भगवच्चरिते स्मर्यमाणस्य मधुप्रभृतेस्सादृश्यस्य सिद्धिः । अपरत्र स्मर्यमाणे भगवद्दयिताहृदयेऽनुभूयमानस्य शिरीषकुसुमस्य सादृश्यसिद्धिरिति, उभयाश्रयत्वात्सादृश्यस्य ॥

श्लेषात्मके यथा—

विनिशाम्यते यदा तव विभासिनीहारभारमाश्लिष्टा । हृदयस्थली तदाऽच्युतहृदयं मे विशाति हैमनसमृद्धिः ॥ २८३ ॥

विभासिनी हारभासा रमया च समाश्लिष्टा । पक्षे—विभासी चासौ नीहारभारः हिमातिशयः तं आश्लिष्टा । कर्तरि क्तः । हेमन्तस्येयं हैमनी सा चासौ समृद्धिः हेमन्तसंबन्धिलक्ष्मीरित्यर्थः । हेमन्तशब्दात् 'सर्वत्राण् च तलोपश्च' इत्यणि तलोपः । 'टिड्ढ' इति ङीप्, पुंवद्भावश्च ॥

यथा वा—

मृद्वीकामितफलदा यदाऽक्षिपदवीं गता हरेः प्रमदा । उद्यानवनी हृद्या हृद्यारूढा तदा न कस्य भवेत् ॥ २८४ ॥

अत्राद्ये विभासिनीत्यादिशब्दः श्रीनिवासहृदयस्थलीहैमनस-मृद्धयोः साधारणो धर्मः । द्वितीये मृद्वीकामितफलदेतिशब्दो हरिप्रियोद्यानवन्योः । मृद्वी दयामृदुला कामितफलदा । पक्षे–मृद्वीकानां द्राक्षाणां अमितानि फलानि ददाति तथोक्ता । एवमन्येऽपि भेदास्सुधीभिरुन्नेयाः ॥

## अथास्य ध्वनिः.

यथा—

**अयमेव मे सविद्युन्नियमेन घनो मनोविनोदी स्यात् । स्वयमेव यदि वृषाद्रौ न रमेत रमासखं परं ब्रह्म ।' २८५ ॥**

अत्र सविद्युता घनेन सलक्ष्मीकस्य भगवतः स्मरणमलंकार्यान्तराभावादनुपसर्जनम् । लक्ष्मीविद्युल्लक्षणस्य बिम्बप्रतिबिम्बभावापन्नस्य साधारणधर्मस्य वाच्यत्वेऽपि तत्प्रयोजितसादृश्यमूलकस्य स्वस्य शब्दवाच्यताविरहाद्व्यङ्ग्यं च ॥

यथा वा—

**मणिसारमयि मसारं व्यपसारय सारसाक्षि रभसात्त्वम् । मम गोकुलमौळिमणिर्मानसमतिवेलमेव लोलयति ॥ २८६ ॥**

अयि सारसाक्षि! मणिसारं रत्नश्रेष्ठं मसारं इन्द्रनीलं 'मसार इन्द्रनीले स्यात्' इति शब्दार्णवे 'मसारगल्वर्कमुखः'

इति श्रीरामायणे प्रयोगश्च। रभसात् व्यपसारयेति योजना। अस्मिन्भगवता नन्दनन्दनेन विश्लिष्टायाः कस्याश्चिन्नायिकाया-स्सखीं प्रत्युक्तिरूपे पद्येऽपि नीलमणिज्ञानाधीनतत्सदृशनन्दन-न्दनस्मृतिः प्राधान्येन ध्वन्यते॥

इत्यलंकारमणिहारे स्मृतिसरो दशमः.

## अथ भ्रान्तिमदलंकारसरः.

**चमत्कृतिमती भ्रान्तिर्यस्मिंत्साहश्यहेतुका।**
**अनूदिता स्यात्सन्दर्भे तमाहुर्भ्रान्तिमानिति॥ १६**

सदृशे धर्मिणि धर्म्यन्तरप्रकारकोऽनाहार्यनिश्चयस्सादृश्य-प्रयोज्यश्चमत्कारी प्रकृते भ्रान्तिः। सा च सुरनरतिर्यगादिगता यस्मिन् वचनसन्दर्भेऽनूद्यते स भ्रान्तिमान्। अत्र च भ्रान्तिमात्र-मलंकारः। भ्रान्तिमानिति व्यवहृतिस्त्वौपचारिकी। यदाहुः—

प्रमात्रन्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते।
स भ्रान्तिमानिति ख्यातोऽलंकारे त्वौपचारिकः॥

इति। लक्षणे मीलितसामान्यतद्गुणवारणाय धर्मिग्रहणद्वयम्। रूपकवित्तिवारणायानाहार्य इति। कविभिन्नगत इति वा। संशयवारणाय निश्चय इति, इदं रजतमिति रङ्गविशेष्यकबो-धवारणाय चमत्कारीति। कविप्रतिभानिर्वर्तित इत्यर्थः। रङ्गे रजतमिति बुद्धेर्लौकिकतया न कविप्रतिभानिर्वर्तितत्वम्॥

यथा—

जलविहृतौ प्रतिवीचि प्रतिबिम्बान्यब्धिजाहृशोर्वीक्ष्य । पृथुशफरभ्रमसकलाश्शकुला दूरं द्रवन्ति भयविकलाः ॥ २८७ ॥

पृथुशफराः महामीनाः इति भ्रमेण सकलाः संपूर्णाः 'समग्रसकलाखण्डपूर्णादीन्यप्यनूनके' इत्यमरः । शकुलाः मत्स्याः अर्भका इति भावः । अत्र शकुलभयावेगोपस्कारकतया तद्गता भ्रान्तिरलंकारः ॥

यथा वा—

कमलाकपोलफलके कलितः कनकाचलेश्वरकटाक्षः । दृग्दोषधूतिदत्ताञ्जनबिन्दुभ्रान्तिदश्श्रियं दत्ताम् ॥ २८८ ॥

अत्राविशेषोक्तेस्सुरनरादिसर्वगता भ्रान्तिरलंकारः । सादृश्यनिमित्तैव भ्रान्तिरलंकारविषयो न निमित्तान्तरोपस्थापिता ॥

यथा—

नानेह नास्ति किंचन जाने सर्वान्तरात्मभूतं त्वाम् । भ्राम्यति योऽस्मिन्नर्थे भ्राम्यति स भवे चिरादहिगिरीन्दो ॥ २८९ ॥

हे अहिगिरीन्दो! इह त्वयीत्यर्थः । नाना भेदः नास्ति, परब्रह्मभूतस्त्वमेक एवेत्यर्थः । तत्र हेतुः जाने इत्यादिः । त्वां सर्वान्तरात्मभूतं सर्वदेशकालवर्तिनां पदार्थानां अन्तरात्मभूतं

जाने । अस्मिन्नर्थे यो भ्राम्यति भ्रान्तो भवति सः भवे संसारे चिरात् भ्राम्यति भ्रमणं प्राप्नोति । अनेन—

> यदेवेह तदमुत्र यदमुत्र तदन्विह ।
> मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥
> मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन ।
> मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ॥

इति श्रुत्यर्थोऽनुसंहितः । अत्र भ्रान्तेरसादृश्यनिबन्धनत्वान्नालंकारत्वम् । सादृश्यहेतुकाऽपि भ्रान्तिर्विच्छित्त्यर्थं कविप्रतिभोन्मेषितैव गृह्यते । यथा अनुपदमेव 'जलविहृतौ' इत्युदाहृते पद्ये । न स्वरसोन्मेषिता शुक्तिरजतवत् । एवं सादृश्यनिमित्तकत्वादनुगाम्यादयोऽस्य साधारणधर्मा यथासम्भवं भवन्ति ॥

तत्रानुगामी धर्मो यथा—

**उपगूहितुमुपसर्पति चपलतया श्रीस्सरीसृपगिरीन्दौ । द्युमणिरिति कौस्तुभमणिं घृणिमन्तं संवृणोति पाणिभ्याम् ॥ २९० ॥**

अत्र घृणिमन्तमित्यनुगामितया निर्दिष्टो धर्मः ॥

बिम्बप्रतिबिम्बभावापन्नो यथा—

**रोमाळिशिखरलग्ने कौस्तुभरत्ने सनाळनलिनधिया । झगिति लगन्ति भ्रमराः कमलाकर्णावतंसकह्लारात् ॥ २९१ ॥**

झगिति झडितीत्यर्थः । एवमन्यदपूह्यं बुद्धिमद्भिः ॥

क्वचिद्भ्रान्तेरुत्तरोत्तरं पल्लवेन चमत्कारः, यथा—

मरकतशिखामणिं शुकमथ मकुटं शोणमणिमयं शौरेः । तन्निष्कुलाकृतं श्रीर्दाडिममवयन्ति तव विलासशुकाः ॥ २९२ ॥

हे श्रीः तव विलासशुकाः शौरेः मरकतरूपं शिखामणिं किरीटकोटिगतं शुकं अवयन्ति जानन्ति, अथ अनन्तरमेव शोणमणिमयं पद्मरागप्रचुरं तैः खचितमित्यर्थः । मकुटं तेन शुकेन निष्कुलाकृतं त्रोटीकोटीकुट्टनेन बहिराविष्कृतबीजराजिकं दाडिमफलमवयन्तीत्यनुषज्यते । निष्कुलाकृतमित्यत्र 'निष्कुलान्निष्कोषणे' इति सूत्रेण निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच् ॥

क्वचित्परस्परविषयभ्रान्तिनिबन्धनेन विच्छित्तिविशेषः, यथा—

बिभ्यति वीक्ष्य मयूरान् कादम्बा नूतनाम्बुदभ्रान्त्या । तेऽपि निरीक्ष्य मराळान् शारदनीरदधिया वृषाद्रिवने ॥ २९३ ॥

## अथास्य ध्वनिः.

यथा—

प्रणतमृडमकुटसरिति प्रतिवीचि त्वत्पदप्रतिच्छन्दान् । प्रणमन् विलोक्य गजमुखशिशुस्स्वशुण्डां प्रसारयति शौरे ॥ २९४ ॥

अत्र भगवच्चरणप्रतिबिम्बेषु पद्मभ्रान्तिर्ध्वन्यते ॥

इत्यलंकारमणिहारे भ्रान्तिसर एकादशः.

## अथ सन्देहसरः.

**सम्भावनानिश्चयान्यतरभिन्ना मनोरमा ।**
**सादृश्यहेतुका बुद्धिस्सन्देहालंकृतिर्मता ॥ १७ ॥**

सादृश्यहेतुका संभावनानिश्चयान्यतरभिन्ना रमणीया धीस्सन्देहालंकारः । उत्कटैककोटिकस्संशयस्संभावना । निश्चयत्वं तु विरोधिकोट्यन्तराप्रकारकज्ञानत्वमात्रम् । न तु विरुद्धकोटिद्वयप्रकारकज्ञानभिन्नत्वम् । तथानिवेशे प्रयोजनाभावात् । संभावनेत्यादिविशेषणमुत्प्रेक्षारूपकादावतिप्रसङ्गवारणाय । स्थाणुर्वा पुरुषो वेति लौकिकसंशयवारणाय रमणीयेति, चमत्कारिणीत्यर्थः । एतच्च विशेषणमलंकारसामान्यलक्षणप्राप्तमेव । एवमुपस्कारकत्वमपीति ध्येयम् । अयं च संदेहालंकारस्त्रिविधः, शुद्धो निश्चयगर्भो निश्चयान्तश्च । तत्र शुद्धो यस्य संशय एव पर्यवसानम् ॥

यथा—

**किंनु तुषारासारः किं घनसारः किममृतसारो वा । शमयति यदिदं क्लममिति समशायि जनैर्हरेर्दृशो विषयैः ॥ २१५ ॥**

दृशः कटाक्षस्य। इदमिति सामान्येन नपुंसकेन हरिकटाक्षनिर्देशः। समशायि सन्दिदिहे॥

यथा वा—

तारासारांशो वा तटिल्लतौघस्फुटोल्लसच्छ्रीर्वा।
इति मुररिपुहृदयगतां वीक्ष्याब्धिसुतां जनेन संदिदिहे॥ २१६॥

अयं च संदेहः क्वचिद्विषयिणामेव संदिह्यमानत्वे क्वचिच्च विषयविषयिणोरप्यलंकारो भवति। उभयत्रापि सामान्यलक्षणावगमात्। अनियतोभयांशावलम्बी हि विमर्शस्सन्देहः। उदाहरणद्वये विषयिमात्रसंदेह उक्तः। अत्र हि प्रकृतयोर्भगवत्कटाक्षलक्ष्म्योस्संदेहकोटित्वविरहाद्विषयिणां तुषारासारतारासारांशादीनामेव संदेहः॥

विषयविषयिणोर्यथा—

किं नखरुचिवलयं ज्वलदथवा दोस्तेजसां शिखावलयम्। अरुणरुचि हरिकराब्जे निरुपममेतच्चकास्ति चक्रं वा॥ २१७॥

अत्र विषयिणो नखरुचिवलयादेरिव विषयस्य चक्रस्यापि संदेहकोटित्वम्॥

यथा वा—

हरितोऽध्यैष्ट गिरिः किं गिरितो वा हरिरिदं

महौन्नत्यम्। सर्वोन्नतावुभावपि दर्वीकरशैलतद-
धिपौ भवतः ॥ २९८ ॥

निश्चयगर्भः—यस्संशयोपक्रमो निश्चयमध्यस्संशयान्तश्च। स यथा—

किमियं गङ्गा न हरेर्मुखे भवेत्साऽथवा किमु
ज्योत्स्ना। साऽपि तथैवेति जनाश्श्रीपतिहसितं
विलोक्य सन्दिहते ॥ २९९ ॥

साऽपि ज्योत्स्नाऽपि तथैव हरेर्मुखे न भवेदेवेत्यर्थः। अत्रोपक्रमोपसंहारयोस्संशय एव ॥

निश्चयान्तः—यत्र संशये उपक्रमः निश्चये पर्यवसानम्।

यथा—

जलदभ्रमेण लग्ना तटिन्नु गगनभ्रमान्नु चन्द्र-
कला। इति संशय्य हरिस्तां स्मयमानां हृदि वि-
निश्चिनोति रमाम् ॥ ३०० ॥

लग्नेत्येतद्गगनभ्रमादित्यत्राप्यनुषज्यते ॥

क्वचिदारोप्यमाणानां भिन्नाश्रयत्वेन संदेहो दृश्यते। यथा—

सर्वे नगास्तमालीकृताः किमु खगाश्शिखी-
कृताः किं नु। जलदीकृता नु ककुभो विसृत्वरेणा-
च्युतद्युतिभरेण ॥ ३०१ ॥

अत्रारोपाविषये अच्युतद्युतिभरे तमालत्वादिर्नगादिभिन्नाश्रयत्वेनारोपितः । नगाः तरवः । एषूदाहरणेषु संदेहस्यैव प्राधान्येनान्यानुपस्कारकत्वात्संपुटादिगतकङ्कणादिष्विव तद्योग्यतामात्रेण गौणोऽलंकारव्यपदेशः । एवंच—

भगवन्नहिनगवसते जगदीशत्वे तवापि ये सन्दिहते । सत्त्वे तेषामेषां सत्त्वैकधना जनाः परं सन्दिहते ॥ ३०२ ॥

इत्यत्रापि सत्यपि चमत्कारे सादृश्यमूलकत्वाविरहान्न सन्देहस्यालंकारता । तेषां सान्देहानानां जनानां सत्त्वे ब्राह्मण्यादिप्रयुक्तप्राशस्त्ये विषये सत्त्वैकधनाः सात्विका जनाः परं अतिशयितं यथा स्यात्तथा सन्दिहते ॥

विष्णुभक्तिविहीनो यस्सर्वशास्त्रार्थवेद्यपि ।
ब्राह्मण्यं तस्य न भवेत्तस्योत्पत्तिर्विचार्यताम् ॥

इत्युक्तरीत्या संशेरते इत्यर्थः । एवमारोपमूलोऽयं संदेहालंकारः अध्यवसानाश्रयत्वेऽपि भवतीति सर्वस्वकारः । अयं च स्वरूपहेतुफलानां सन्दिह्यमानत्वेन त्रिधा भवतीति विमर्शिनीकारः ॥

तत्र स्वरूपसंदेहो यथा—

किं मरकतरुचिपूरैरपूरि किमलेपि हरिमणिमहोभिः । फणिशिखरिमन्दिरान्तरमिति संशयदं हरेर्जयति तेजः ॥ ३०३ ॥

अयं च संदेहो हरितेजोविषयककविगतरतिपरिपोषकत्वेन ललनाकरधृतवलयादिरिव प्राधान्येनालंकारव्यपदेशभाग्भवति। अत्र च विवक्षिते विवेच्यमाने हरितेजसि मरकतरुचिपूरादिकोटिकः पर्यवस्यति सन्देहः। स च न सारोपः, विषयविषयिणोस्तदनुरूपविभक्त्यदर्शनात्। अतः मरकतरुचिपूरत्वादिना संदेहधर्मिहरितेजोऽध्यवसीयत इति॥

हेतुसन्देहो यथा—

**स्मयसे यदिदं स्वामिन् किं तन्मच्चरितचिन्तनादथवा। ईदृक्षरक्ष्यलाभात्किं वा मम दुर्लभेप्सितोद्योगात्॥ ३०४॥**

अत्र स्मयनहेतौ निरतिशयानन्दत्वे कविना स्वचरितचिन्तनादिहेतुत्रयमध्यवसितम्॥

फलसन्देहो यथा—

**सुखदमिदमेव पदमिति सूचयितुं किं न्विदं हि परमपदम्। इति कथयितुं नु पन्नगपतिगिरिपतिना करोऽवनमितोऽयम्॥ ३०५॥**

हरिणा श्रीनिवासेन वरदानार्थमवनमितः अयं करः दक्षिणहस्त इति भावः। इदं पदं स्वचरणमेव सुखदं जनानामिति सूचयितुं किमवनमितः। इदमेव क्षेत्रं परमपदमिति कथयितुं व्यञ्जयितुमिति यावत्। अवनमितो नु इति योजना। अत्र हस्तावनमनफले वरदाने सूचनादिफलमध्यवसितम्॥

केचित्तु—ईदृशस्थले इवादिशब्दवत् नु किं इत्यादिशब्दानां संभावनाद्योतकत्वादुत्प्रेक्षामाचक्षते । रसगङ्गाधरकारस्तु नेदृशस्थलेऽध्यवसायस्सम्भवतीति मन्यते । तन्मतेनात्रेदं विचार्यते—'किं मरकतरुचिपूरैः' इति पद्ये तावत् मरकतरुचिपूरादिकरणकपरिपूरितत्वादिकोटिकः फणिशिखरिगतभगवन्मन्दिरान्तरधर्मिकस्सन्देहदशब्दात्प्रतीयते । तस्मिंश्च सन्देहे किमिदं मरकतरुचिपूरस्स्यात् आहोस्वित् हरिमणिमहस्स्यादिति हरितेजोधर्मिकं सन्देहान्तरमानुगुण्यमाधत्ते, यथा—पुरोवर्तिनि नृषभे स्थाणुर्वा पुरुषो वेति संदेहो भूतलमिदं स्थाणुमत्पुरुषवद्वेति संदेहे । एवंच हरितेजोधर्मिकस्संदेहो गुणीभूतो व्यञ्जनागम्यत्वाद्विषयविषयिणोरारोपानुकूलविभक्तिकतां नापेक्षते । अपेक्षते च साक्षाच्छब्दवेद्यतायामिति काध्यवसायमूलता संदेहस्येति । एतेनाध्यवसानमूलतां संदेहस्य निरूपयतामुक्तिः परास्ता ॥

एवं—

**नयनं किमञ्जनाक्तं मृगमदपङ्कैः किमङ्गमालिप्तम् । इति संशयं जनानां विदधानाऽच्युतरुचिर्धुनात्वशुभम् ॥ ३०६ ॥**

इत्यादिविभिन्नाश्रयाध्यवसायमूलसंदेहेष्वपि द्रष्टव्यम् । अस्मिंश्च संदेहे नानाकोटिषु क्वचिदेक एव समानधर्मः, क्वचित्पृथक् । सोपि क्वचिदनुगामी, क्वचित्केवलबिम्बप्रतिबिम्बभावमापन्नः, क्वचिद्वस्तुप्रतिवस्तुभावकरम्बितं बिम्बप्रतिबिम्बभावमापन्नः, क्वचिदानिर्दिष्टः, क्वचिन्निर्दिष्टः । तत्र 'किमियं गङ्गा न हरेः' इति प्रागुदाहृते पद्ये धावल्यं धर्मिणो भगवन्मन्दहसि-

तस्य कोट्योर्गङ्गाज्योत्स्नयोश्चैक एवानुगामी धर्मः, प्रतीयमानत्वादनिर्दिष्टः । एवं 'जलदभ्रमेण लग्ना' इत्यादिपद्येऽपि । निर्दिष्टस्तु 'हरितोऽध्यैष्ट गिरिः किम्' इति प्रागुदाहृत एव श्लोके तत्र महत्त्वं साधारणो धर्मः । धर्मिणो भगवदौन्नत्यस्य कोट्यन्तरस्य गिर्यौन्नत्यस्य च साक्षान्निर्दिष्टः । धर्मस्य पृथङ्निर्देशोऽपि 'किं नखरुचिवलयं ज्वलत्' इति प्रागुदाहृतपद्य एव । तत्र हि नखरुचिवलयस्य ज्वलत्त्वं, दोस्तेजश्शिखावलयस्यारुणरुचित्वं च सह चक्रस्य पृथगनुगामी समानो धर्मः । अत्रैव ज्वलत् अरुणरुचीति विशेषणद्वयानुपादाने स एवानिर्दिष्टः ॥

बिम्बप्रतिबिम्बभावापन्नो यथा—

**प्रतिबिम्बितरविबिम्बं हरिमणिशिखरं सकौस्तुभं च हरिम् । मुनयोऽभिवीक्ष्य फणधरगिरिधरणौ नन्तुमेव सांशयिकाः ॥ ३०७ ॥**

अत्र प्रतिबिम्बितरविबिम्बत्वसकौस्तुभत्वरूपो धर्मः बिम्बप्रतिबिम्बभावापन्नः ॥

यथावा—

**सहविद्युन्नु तटित्वान् सद्युमणिर्वा हरिन्मणीशिखरः । सकमल इति सन्दिदिहे समणिकिरीटस्सरीसृपगिरीन्दुः ॥ ३०८ ॥**

अत्र विद्युद्द्युमणी बिम्बभूतौ लक्ष्मीकिरीटयोः प्रतिबिम्बकोट्योः पृथङ्निर्दिष्टौ । शिखरशब्दः पुल्लिङ्गोऽप्यस्ति 'शिखरं वा ना' इत्यमरानुशासनात् । 'अलगितवतो विन्ध्यशिखरान्' इति मुरारिप्रयोगश्च ॥

आकाशराजनृपतेरालयगर्भं तदा निरीक्ष्य नरैः।
जलधेर्जठरं किमिदं कनकाचलसानु वेति सन्दि-
दिहे ॥ ३०९ ॥

अत्र तदेति प्रकरणसाह्यवशादाकाशराजगृहेण धर्मिणाऽऽक्षिप्तायास्तत्कालावतीर्णायाः भगवत्याः पद्मावत्या जलधिजठरादिसंशयकोटिद्वयाक्षिप्तस्साधारणो मणिः प्रतिबिम्बभूतः । इमौ च बिम्बप्रतिबिम्बभावानिर्दिष्टावपि प्रतीयमानौ सादृश्यं प्रयोजयतः । एतेनानुगाम्येव धर्मो लुप्तस्सम्भवति न तु बिम्बित इति वदन्तः परस्ताः ॥

अयं च क्वचिदनाहार्यः क्वचिदाहार्यः, यत्र हि कविना परनिष्ठस्संदेहो निबध्यते तत्र प्रायेणानाहार्यः । यथा 'किं नु तुषारासारः' इत्यादिषु प्रागुदाहृतेषु पद्येषु ॥

यथा—

किमु घनलग्ना सौरी मरीचिरथवेन्द्रनीलमणि-
खचिता । कुरुविन्दलतेति रमा हरिहृदयगता न
केन वाऽशाङ्कि ॥ ३१० ॥

अत्राप्यनाहार्य एव संदेहः । तत्र जनस्य संदिहानस्य प्राज्ञानिर्णयात् । अत्र च लग्ना खचितेत्येतयोः गतेत्यस्य च वस्तुप्रतिवस्तुभावः तत्करम्भितो घनेन्द्रनीलमण्योः हरिहृदयस्य च बिम्बप्रतिबिम्बभाव इति विशेषः ॥

यत्र च स्वनिष्ठ एव संदेहो निबध्यते तत्राहार्यः । यथा 'हरितोऽध्यैष्ट गिरि किम्' इत्यादिप्रागुदाहृतपद्येषु ॥

यथा वा—

मिहिरकरमसृणनिजरुचिमरकतशिखरं नु फ-
णभृदचलेऽस्मिन् । कमलारुचिरुचिरं किं ब्रह्म प-
रं कृष्णपिङ्गळं यदिदम् ॥ ३११ ॥

यदिदं पुरस्तात् दृश्यमानं वस्तु कृष्णं च तत्पिङ्गळं श्यामलपिशङ्गवर्णं 'वर्णो वर्णेन' इति समासः । 'पुरुषं कृष्णपिङ्गळम्' इति श्रुतिरत्र स्मारिता । अत्र वक्तुः कवेस्तत्त्वज्ञतया संदेह आहार्य एव । अत्र मिहिरकरकमलारुच्योर्बिम्बप्रतिबिम्बभावः, मसृणनिजरुचिरुचिरयोर्वस्तुप्रतिवस्तुभावः, कृष्णपिङ्गळमित्यस्यानुगामिता च द्रष्टव्या ॥

श्लेषात्मकोऽपि धर्मस्संभवति यथा—

सिंहलसद्गोत्राकरभवनोऽयं किं महामहानीलः।
उत भगवानिति कवयोऽप्यतिसांशयिका विलोक्य
शौरे त्वाम् ॥ ३१२ ॥

सिंहलस्य सिंहलद्वीपस्य सती प्रशस्ता गोत्रा भूः तस्यां यः आकरः खनिः तत्र भवनं उत्पत्तिः यस्य स इति महानीलपक्षे । 'सिंहलस्याकरोद्भूता महानीलास्तु ते स्मृताः' इत्यगस्त्योक्तेः । भगवत्पक्षे—सिंह इति लसन् प्रकाशमानः गोत्रशैलः सिंहाद्रिः शेषगिरिरित्यर्थः । स एवाकर आधारो यस्य तत्तथोक्तं भवनं दिव्यालयः सत्ता वा यस्य स तथोक्तः ॥

विषयिणां विषयविषयिणोर्वा सादृश्यमूलकसंदेह एवायमलंकारः, न तु केवलसंदेहे । तेन—

विधुभद्रश्रीव्यतिकरसुस्मेरमिदं स्पृशेयमिति शौरौ। वदति समशेत राधा स्पृशेन्मुखं वा स्तनद्वयं वेति ॥ ३१३ ॥

इत्यत्र नातिप्रसङ्गः। अत्र हि मुखस्तनद्वयकर्मकं स्पर्शनं विषयाविषयिभावानापन्नं संदिह्यते। विधोः चन्द्रमसः भद्रा कल्याणी या श्रीः तस्याः व्यतिकरस्संबन्धः तेन सुस्मेरं स्मयमानं चन्द्रनिभमिति यावत्। अन्यत्र विधोः कर्पूरस्य भद्रश्रियः चन्दनस्य च व्यतिकरेण विलेपनेन सुस्मेरं 'विधुश्शशाङ्के कर्पूरे' इति रत्नमाला। 'भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः। स्पष्टमन्यत् ॥

परम्परितोप्ययं संभवति, यथा—

श्रुतिवनमदावलो वा लक्ष्मीवर्षाशिखावलो वाऽयम्। दर्वीकरगिरिमणिमिति निर्वर्णयता जनेन संदिदिहे ॥ ३१४ ॥

अत्र संदेहस्य परंपरितत्वं च परंपरितरूपकपूर्वकत्वम्। न तु संदेहहेतुकसंदेहत्वम्। श्रुत्यादीनां वनत्वादिसंदेहाविषत्वादिति ध्येयम् ॥

क्वचित्परनिष्ठोपि कविना निबध्यमान आहार्यो भवति, यथा 'जलदभ्रमेण लग्ना तटित्' इति प्रागुदाहृते पद्ये। तत्र भगवतस्सर्वज्ञस्य संशय आहार्य एव। तत्र च जलदभ्रमेण लग्ना तटिन्नु? गगनभ्रमाल्लग्ना चन्द्रकला नु? इति कोट्योः हृदयलग्नरमारूपधर्मिसादृश्यदार्ढ्यायाविद्यमानमपि भ्रमाल्लग्नत्व-

मारोप्यते। एवमादयोऽन्येऽपि प्रकारा उन्नेयाः। उक्तेष्वेतेषूदाहरणेषु सोऽयं संदेहालंकारस्स्वशब्दवेद्यत्वाद्वाच्यः॥

लक्ष्यो यथा—

**लीलाजलरुहमचलाबालायाः करमपेक्षमाणस्य। दोलायते स्म हृदयं व्यालाद्रिपतेः करग्रहावसरे॥ ३१५॥**

अचलाबालायाः धरणीगर्भसंभूतायाः पद्मावत्याः करग्रहावसरे पाणिपीडनसमये। अत्र पर्यायेण कोटिद्वयालम्बितया दोलासादृश्यात्संदेहोऽत्र दोलापदेन लक्ष्यते॥

व्यङ्ग्यो यथा—

**उत्सवगतस्स भगवानुदयन्तं भानुमन्तमभिवीक्ष्य। वक्षस्सहसाऽस्प्राक्षीदब्जाक्षस्स्वीयमहिधराध्यक्षः॥ ३१६॥**

अत्र भगवतस्सहसा वक्षस्स्थलस्पर्शेन तत्र स्थित एव कौस्तुभमणिस्ततश्च्युतः किं पुरस्तात् दृश्यत इति संदेहो व्यङ्ग्यः॥

यथा वा—

**तिलकितनिजमुखवीक्षणकुतुकवतश्श्रीसखस्य नयनयुगम्। यातायाताच्छ्रान्तं मुकुरे कमलाकपोलफलके च॥ ३१७॥**

अत्र मुकुरधर्मिकोऽभेदेन संसर्गेण पुरोवर्तिव्यक्तिद्वयप्रकारकः मुकुरोऽयं वाऽयं वेति भगवन्नयनयुगगतस्संदेहो व्यङ्ग्यः।

अत्र भगवद्गतस्य संदेहस्य तन्नयनयुगे उपचारः । न च मुकुराभेदधियो नयनयुगप्रवृत्त्युपायत्वेनापेक्षणादिदंपदार्थाभेदधीर्निष्प्रयोजनेति वाच्यम् । एकपदार्थधर्मिकापरपदार्थधियः अपरपदार्थधर्मिकैकपदार्थाभेदबोधप्रयोजकतया मुकुराभेदबोधसाम्राज्यात् मुकुरत्वमेतद्वृत्ति तद्वृत्ति वेति संशयाकारः । सोऽयं संदेहध्वनिः ॥

द्रुतकनकप्रतिमा वाऽऽवर्तितविद्युल्लताप्रतिकृतिर्वा । कुरुविन्दलेखिका वा मुकुन्दहृदयेऽरविन्दनिलया वा ॥ ३१८ ॥

यद्यपीहापि वाचकशब्दानुपादानात्संदेहो व्यङ्ग्य एवार्हति भवितुम्, तथाऽपि विषयनिरूपणेन स्पष्टतयोक्तत्वान्न ध्वनिव्यपदेश्यताया हेतुः, अपि तु गुणीभूतव्यङ्ग्यप्रभेदव्यपदेश्यतायाः ॥

इत्यलङ्कारमणिहारे सन्देहसरो द्वादशः.

## अथापह्नुतिसरः.

आहार्यभेदबुद्धेश्चेन्निषेधोऽङ्ग्यङ्गमेव वा ।
एतां सामान्यतः प्राहुरपह्नुतिमलंकृतिम् ॥

आहार्याभेदप्रतिपत्तिनिरूपिताङ्गाङ्गिभावान्यतरवन्निषेधत्वमपह्नुत्यलंकारसामान्यलक्षणम । निषेधश्च नञाद्युपादाने वाच्यः, क्वचित्तु तदभावात्कैतवच्छलादिपदैः परमतत्त्वोपन्यासादिभिश्च व्यङ्ग्यः, तथा क्वचिदभेदप्रतिपत्तिसमानाधिकरणः क्वचित्तु त-

द्व्यधिकरण इति विवेकः । एवमभेदः क्वचिदारोप्यमाणः, क्वचित्तु स्वाभाविकः । एवं तत्प्रतिपत्तिरपि क्वचिद्व्यञ्जनया प्रायशस्तु वाच्यवृत्त्यैवेति ध्येयम् । निषेधोऽपह्नुतिरित्येतावदुक्तौ 'न द्यूतमेतत्कितव क्रीडनं निशितैश्शरैः' इति प्रसिद्धनिषेधानुवादरूपे प्रतिषेधालंकारेऽतिव्याप्तिः । अतोऽभेदप्रतिपत्तिनिरूपितेत्यादिविशेषणम् । तत्र हि समरप्रवृत्तं कितवं प्रति समरे द्यूतत्वाभावो निर्ज्ञातोऽपि कण्ठरवेणोच्यमानो द्यूत एव तव वैदग्ध्यं न समरे इत्युपहासार्थो न तु युद्धाभेदप्रतिपत्त्यङ्गम्, तस्यास्तदुपन्यासं विनाऽपि सिद्धत्वात् । नाप्यङ्गी, निर्ज्ञातत्वेनैव तदुपायानपेक्षणात् । अभेदप्रतिपत्तिनिरूपिताङ्गित्वमात्रोक्तौ शुद्धापह्नुतिहेत्वपह्नुतिपर्यस्तापह्नुतिकैतवापह्नुतिष्वव्याप्तिः, तत्र सर्वत्र नायं सुधांशुरित्यादेर्निषेधस्य व्योमगङ्गासरोरुहाद्यभेदप्रतिपत्त्यर्थत्वेन तदङ्गतयाऽङ्गित्वाभावात् । अभेदप्रतिपत्तिनिरूपिताङ्गत्वमात्रोक्तौ भ्रान्तापह्नुतिच्छेकापह्नुत्योरव्याप्तिः, तयोर्भ्रान्तिशङ्कावारणरूपनिषेधस्य प्राधान्येनाभेदप्रतिपत्त्यङ्गत्वाभावात् । अतस्तदन्यतरत्वनिवेशः । यदाहुः—

साम्याभावापह्नवो यत्र सा विज्ञेया त्वपह्नुतिः ।
अपह्नवाय सादृश्यं यस्मिन्नेषाऽप्यपह्नुतिः ॥

इति । सर्वं चैतत्तदुदाहरणविवरणावसरे स्फुटीभविष्यति । 'न पञ्चविशिखः कामः किंत्वतङ्गत्यशिलीमुखः' इत्यादावतिप्रसङ्गवारणाय प्रतिपत्तेरभेदविषयकत्वविशेषणम् । अत्र हि नासङ्गत्यशिलीमुखशब्दाभिलपनीयस्य कस्यचिदभेदसमारोपः क्रियते तथाविधस्य कस्यचिद्वस्तुनः क्वाप्यप्रसिद्धेः । नाप्यन्यत्राप्रसिद्धस्य 'अङ्के केऽपि' इत्यादाविव इहैव कल्पितस्य वस्तुनस्त-

थाविधस्याभेदेन समारोप इति शक्यं प्रतिपत्तुं, तथाकल्पना-यामिह कवेरसंरम्भात् । तस्मादसंख्यशिलीमुखशब्देनापि काम एव विवक्षित इति विषयभूते कामे पञ्चविशिखत्वं प्रसिद्धं प्रतिषिध्यासंख्यशिलीमुखत्वं धर्म एव भेदेन समारोप्यत इत्य-भ्युपेत्यम् । तथाचेह विवक्षितायाः भेदसंसर्गकप्रतीतेरेवाङ्गं प्रतिषेधो नाभेदप्रतीतेरित्यतिप्रसङ्गवारणम् । 'नायं सुधांशुः' इ-त्यादौ तु सर्वत्रापह्नवोदाहरणे व्योमगङ्गासरोरुहादेर्धर्मिण एव तत्तद्धर्मविशिष्टतयाऽन्यत्र प्रसिद्धस्य कविकल्पितस्य वा विषये अभेदेन प्रतीतिर्विवक्षितेति लक्षणसंगतिः । 'अपह्नुतिरपह्नुत्य किंचिदन्यार्थरोपणम्' इति प्रतिपत्तेरभेदविषयकत्वमनादृत्य केव-लापह्नुतिपूर्वकान्यार्थारोपस्यैवापह्नुतित्वं लक्षयतो दण्डिनो मते तूदाहृते 'न पञ्चविशिखः' इत्यत्रापि नैवातिप्रसंगः ॥

संग्रामाङ्गणसंमुखागतकियद्विश्वंभराधीश्वर-
व्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा ।
अङ्गारप्रखरैः करैः कवलयन् सद्यो जगन्मण्डलं
मार्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः ॥

इत्यादौ विरहिजनवाक्ये नायं शशाङ्कः अपितु सच्छिद्र-मार्तण्ड इति प्रतीयमानेऽर्थे शशाङ्कनिषेधो मार्तण्डाभेदप्रतिपत्ते रेवाङ्गमिति तत्रातिव्याप्तिवारणायाभेदप्रतिपत्तेराहार्येति विशेषणं, अत्र च मार्तण्डारोपस्य दोषविशेषजन्यतयाऽनाहार्यत्वात् । अत एव ''अत्र छायामात्रमपह्नुतेः न त्वपह्नुत्यलंकारः तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात्, किंतु भ्रान्त्यलंकारएव' इति रसगङ्गाधरकृदुक्तिस्संगच्छते । अस्य च विरहिजनवचनताबि-रहेण केवलकविमतिविकासजन्यत्वे तु भवत्येवेदमपि शुद्धाप-

ह्नुतेरुदाहरणमिति रहस्यम् । अत एव 'नेन्दुस्तीव्रो न निश्यकस्मिन्धोरौर्वोऽप्युत्थितः' इत्यस्य हेत्वपह्नुतेरुदाहरणत्वं च संगच्छते । अन्यथाऽस्यापि विरहिजनवचनताभिसंधौ अलक्ष्यतापातात्प्राक्तनैः कृतस्य तदुदाहरणस्यासंगतिः स्पष्टैव ॥

न चैवमपि सामान्यलक्षणेऽस्मिन्नाहार्यविशेषणोपादानं न युज्यते, भ्रान्तापह्नुतावव्याप्तिप्रसंगात् । तत्र हि 'तापं करोति सोत्कम्पं ज्वरः किं न सखि स्मरः' इत्यादौ तात्त्विकस्मराभेदप्रतीतेराहार्यत्वविरहादिति वाच्यं, आहार्यत्वस्यानाहार्यत्वभ्रमत्वोभयाभावपर्यवसितस्यैव निवेशनीयतया सकलदोषनिवारणात् । भ्रान्तापह्नुतौ ह्यभेदप्रतिपत्तेरनाहार्यत्वेऽपि भ्रमत्वाभावेनैव एकसत्त्वे द्वयं नास्तीति न्यायेन उभयाभावविशेषणमहिम्ना लक्षणसंगतिः । इतरेष्वपह्नुतिप्रभेदेषु तु अभेदप्रतिपत्तेर्भ्रमत्वेऽप्यनाहार्यत्वविरहेणैवोभयाभावस्सूपपाद इति तत्रापि स्यादेव लक्षणसंगतिः । उपदर्शिते विरहिजनवाक्ये तु मार्तण्डाभेदप्रतीतेरनाहार्यतया दोषविशेषजन्यभ्रमरूपतया च तदुभयस्यैव सद्भावेन तदुभयाभावो दुर्घट इति नोक्तातिप्रसङ्गशङ्कावकाशः । तथाच– अनाहार्यत्वभ्रमत्वोभयाभाववती या अभेदप्रतीतिः तद्विशिष्टप्रतीतिविषयत्वे सति प्रतिषेधत्वमपह्नवालंकारसामान्यलक्षणम् । प्रतीतौ तादृशप्रतीतिवैशिष्ट्यं च स्वनिष्ठाङ्कतानिरूपिताङ्कितावत्त्वस्वनिष्ठाङ्कितानिरूपिताङ्कतावत्त्वान्यतरसंबन्धेनेति ध्येयम् । चारुत्वविशेषणं त्वधिकारलब्धमेवेति न विशिष्यात्रोपादातव्यमित्यलं बहुना ॥

इत्थमपह्नुतेस्सामान्यलक्षणमभिहितम् । अथ तद्भेदान् लिलक्षयिषुस्तत्रादौ शुद्धापह्नुतिं लक्षयति

अन्यारोपफलो यस्स्यात्प्रकृते धर्मनिह्नवः ।
अलंकृतिरियं शुद्धापह्नुतिर्नाम गद्यते ॥ ४१ ॥

प्रकृते वर्ण्ये वस्तुनि अप्रकृतधर्मारोपफलकस्तदीयधर्मनिह्नवश्शुद्धापह्नुतिरलंकारः । तथाच उपमेये उपमानारोपफलक उपमेयधर्मत्वेनाभिमतस्य निषेधश्शुद्धापह्नुतिरिति पर्यवस्यति लक्षणम् । अत्र चानुक्तनिमित्तत्वेन कैतवच्छलादिपदाव्यङ्ग्यत्वेन च निषेधो विशेषणीयः । तेन हेत्वपह्नुतिकैतवापह्नुत्योर्नातिप्रसंगः। 'कान्तः किं न हि नूपुरः' इति छेकापह्नुतौ उपमेयधर्मस्य कान्तत्वस्य निषेधसद्भावादतिप्रसङ्गस्स्यादिति तद्वारणाय प्राथमिकविशेषणम् । तत्र हि न कान्तत्वनिषेधो नूपुरारोपफलकः अपि तु नूपुरारोप एव शङ्कितकान्तत्वनिषेधफलक इति तद्व्यावृत्तिः । पर्यस्तापह्नुतिवारणायोपमेयधर्मेत्युक्तम् । तत्रोपमानधर्मस्यैव सुधांशुत्वादेर्निषेध इति नातिव्याप्तिरिति । अत्र च निह्नवारोपयोर्न पौर्वापर्यनियमः, लक्षणे धर्मनिह्नवस्यान्यारोपफलकत्वमात्रोक्तेः । न ह्यत्र—'निह्नुत्य विषये धर्ममन्यदारोप्यते यदि' इत्यस्माभिर्निबद्धं लक्षणं, येन क्त्वाप्रत्ययावलम्बनं निह्नवस्य पौर्वकालिकत्वमेवेति नियम्येत, तेन वक्ष्यमाणे आरोपपूर्वकापह्नवे नाव्याप्तिः ॥

दण्डी तु—'अपह्नुतिरपह्नुत्य किंचिदन्यार्थरोपणम्' इत्यारोपस्य साहश्यमूलकत्वं प्रकृते वस्तुनि धर्मनिह्नवं चानादृत्य यत्किंचिन्निह्नवपूर्वकयत्किंचिद्धर्मारोपमात्रमपह्नवं लक्षयति स्म। तन्मते वक्ष्यमाणानि पद्यान्यप्यपह्नुतेरुदाहरणान्येव । अत्रापह्नुत्येति क्त्वाप्रत्ययार्थो निषेधस्य पूर्वकालता न विवक्षिता । तेन वक्ष्यमाणोदाहरणानि संगंस्यन्ते ॥

यथा—

एत्य रुचिं जेतुं तव घनस्सचापस्त्वया विलू-
नज्यः । मूतस्तयैव शौरे ज्यामूतोऽयं ततो न
जीमूतः ॥ ३२० ॥

घनः तव रुचिं जेतुं सचाप एत्य त्वया विलूनज्यः छिन्नमौर्वीकः तयैव ज्ययैव मूतः बद्धः 'मूङ् बन्धने' कर्मणि क्तः 'बद्धे संदानितं मूतम्' इत्यमरः । ततः तस्मात् अयं घनः ज्यामूतः ज्यामूत इति व्यवहर्तुमर्हः न तु जीमूत इतीत्यर्थः॥

यथा वा—

नाथ तव चरितसारं नानाप्तस्सादरो भवन्नादौ।
यः प्रददे लोकानां न नारदस्सारदोऽयमिति यु-
क्तम् ॥ ३२१ ॥

यः मुनिः अनाप्तो न भवतीति नानाप्तः 'संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः । अत्याप्ततमः अनाप्ततासंभावनाऽप्यस्य न संभवतीत्यर्थः । तदुक्तेः प्रामाणिकताद्योतनार्थमिदं विशेषणम् । सादरो भवन् भवपथगतागतपरिश्रान्ता एते लोका उज्जीव्यासुरित्यादरवान् सन् आदौ पूर्वं प्राचेतसादीनामपि भगवच्चरितसाराधिगमस्य तन्मूलकत्वादिति भावः । हे नाथ ! तव चरितसारं लोकानां प्रददौ, अयं न नारदः—

नारं पानीयमित्युक्तं तत्पितृभ्यस्सदा भवान् ।
ददाति तेन ते नाम नारदेति भविष्यति ॥ इति,

नारं नराणां संघातं कलहेनैव यो द्यति।
तस्मान्नारदनामाऽसौ लोके विख्यायते मुनिः॥

इति वा निरुक्तशब्दवाच्यो न, किंतु सारद इति युक्तम्। उपपादितरीत्या भगवच्चरितसारदत्वादिति भावः। अत्र नारदशब्दः आदौ प्रथमं नानाप्तः ना इत्याकारकवर्णेनाननुषक्तः त्यक्तनाकार इत्यर्थः, अथ सादरः तत्रैव सा इत्याकारकवर्णे आदरो यस्य स तथोक्तः। आदौ साकारघटित इति यावत्। एवंचेन्नारदशब्दस्सारद इति निष्पद्यत इति वैचित्र्यं च गर्भितम्॥

यथा वा—

**कृष्णायाः स्फीताम्बरदानात् स्फीताम्बरेति वक्तव्ये। अमहाप्राणोच्चारणपटवः पीताम्बरेति जगदुस्त्वाम्॥ ३२२॥**

अमहाप्राणोच्चारणपटवः महाप्राणवर्णोच्चारणाशक्ताः केचित् पीताम्बरेति त्वां जगदुः। स्फीताम्बर पीताम्बरेति संबुद्ध्यन्ते पदे। स्फीताम्बरेत्यत्र संकारफकारौ हि महाप्राणौ अन्ये अल्पप्राणाः। 'वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः अन्ये महाप्राणाः' इत्युक्तेः। एषु पद्येषु ज्यामूतत्वसारदत्वस्फीताम्बरत्वारोपफलकः जीमूतत्वनारदत्वपीताम्बरत्वनिह्नवो न सादृश्यमूलकः॥

एवं—

**रश्मिभिराबध्य रविं कौस्तुभवसुविभवभारचोर इति। चारयति प्रकटयितुं शौरिर्न तु कालमिह परिच्छेत्तुम्॥ ३२३॥**

इत्यत्राप्यसादृश्यमूलकत्वमनुसंधेयम्। पूर्वोदाहरणेषु धर्मनिह्नवोऽन्यधर्मारोपार्थः, इह तु कालपरिच्छेदफलापह्नवश्चोरताप्रकटनरूपफलारोपार्थ इति विशेषः॥

**नियतं न कलङ्कोऽयं शशाङ्कबिम्बे यदेतदानीलम्। त्वन्मुखरुचिविजिततया हृन्मध्ये धृतमनेन भयशल्यम्॥ ३२४॥**

अत्राप्रकृत एव कलङ्के भगवन्मुखरुचिविजितत्वनिबन्धनहृदयधृतभयशल्यत्वारोपफलकः कलङ्कत्वनिह्नवो निबद्धः॥

एवम्—

**इन्दोरेकः किरणः परत्वमिच्छुस्तव स्मितादम्ब। मध्येऽभिहतोऽपरतां गतः किणोऽभूत्तमाहुरङ्क इति॥**

इत्यत्राप्यप्रकृत एव कलङ्के किरणत्वारोपफलकः कलङ्कत्वनिह्नवः। हे अम्ब! इन्दोः एकः किरणः सारभूतो मध्यस्थित इति भावः। तव स्मितादपि परत्वमुत्कर्षं इच्छुः 'न लोक' इति कर्मणि षष्ठ्या निषेधः। अत एव मध्ये इच्छाफलावाप्त्योरन्तराळ एव अभिहतः तव स्मितेनेति भावः। अत एव अपरतां अनुत्कर्षं गतस्सन् किणः अभूत्। तं किणमेव अङ्क इत्याहुः। अयं किण एव नाङ्क इति भावः। अत्र किरण. किरणशब्दः मध्ये अभिहतः अत एव अपरतां अपगतरेफतां गतस्सन् किणः अभूत्। किरणशब्दे रेफापनयने किण इति निष्पद्यत इत्यर्थोऽपि चमत्कारी॥

काव्यप्रकाशाद्यनुयाय्यस्मदुपदर्शितशुद्धापह्नुतिलक्षणस्य तु नेदं लक्ष्यम्, अपि तु वक्ष्यमाणमेवेति ध्येयम्। अस्यां च न·

श्रादिभिस्साक्षात्परमतत्वाद्युपन्यासैश्च किंचिद्व्यवधानेन प्रकृतस्य निषेधे बोध्यमाने प्रायेण वाक्यस्य भेदः। विषयासत्यत्वप्रतिपादकमिष–छल–छद्म–कपट–व्याजादिपदैर्विषयासत्यत्वपर्यवसायिरूपवपुर्नामात्मभङ्ग्यादिशब्दैश्च निषेधे बोध्यमाने तु एकवाक्यता। क्वचिदपह्नवपूर्वकत्वं क्वचिन्नारोपपूर्वकत्वं क्वचिदप्रकृततादूप्यप्रकृतनिषेधयोरेकस्य शाब्दत्वमेकस्यार्थत्वं क्वचिदुभयोश्शाब्दत्वमथोभयोरार्थत्वं विधेयत्वमनुवाद्यत्वं चेत्येवमनेके प्रकारास्संभवन्तोऽपि चमत्कृतिविशेषानाधायकतया न गणनीयाः। एवमपि दिङ्मात्रमुदाह्रियते—

**न मुखमिदं लावण्याम्बुधिरेष न चाधरः प्रवाळस्ते। नेमे दशना मुक्ता न नयनयुगमेतदीश मीनयुगम् ॥ ३२६ ॥**

हे ईशेति संबुद्धिः। ते तव इदं सर्ववाक्यान्वयि। इयं चानुग्राह्यानुग्राहकभावापन्नावयवकसंघातात्मकतया सावयवा। अत्रापह्नवपूर्वकत्वमुभयोश्शाब्दत्वं विधेयत्वं वाक्यभेदश्च ॥

यथा वा—

**यदिह त्वद्वदनेऽसितमुदितमिदं भ्रूयुगं वदन्त्वज्ञाः। नाथ वयं निगदामो नासावंशाङ्कुराद्यदळयुग्मम् ॥ ३२७॥**

इयं निरवयवा। अत्र वक्तृगताज्ञत्वकथनेन तद्गतभ्रान्तिप्रतिपत्तिव्यवहिता निषेधप्रतिपत्तिरिति निषेध आर्थः। ताद्रूप्यं शाब्दम्। विधेयत्ववाक्यभेदापह्नवपूर्वकत्वानि पूर्ववदेव ॥

यथा वा—

हरिकरनिहितं शङ्खं कतिचन हंसं परे सिताम्भोजम् । अभिदधतु व्रजमुषितं नवनीतं ब्रूमहेऽधुनाऽपि धृतम् ॥ ३२८ ॥

इयमपि निरवयवा । अत्राप्यपह्नवपूर्वक आरोपः । अपह्नवस्तु परपक्षोपन्यासादार्थिकत्वेन व्यवहितः ॥

यथा वा—

मणिमकुटतरणितक्षणजनिता यमुनैव भाति तव वदने । मृगपतिगिरिवरशेखरमृगमदतिलकं वदन्त्यमूं मुग्धाः ॥ ३२९ ॥

यथा वा—

हरिचरणविमुखमनसां निलयं सन्तो विदुर्निरयमेव । रलयोरभिदाश्रयणाद्वदन्त्यनुद्वेजनाय निलय इति ॥ ३३० ॥

अत्रोदाहरणद्वयेऽप्यपह्नुतिर्निरवयवैव । अपह्नवस्त्वारोपपूर्वक इति विशेषः । ताद्रूप्यस्य शाब्दत्वं निषेधस्यार्थत्वं विधेयत्ववाक्यभेदौ पूर्ववदेव । हरिचरणविमुखमनसां निलयं सन्तो निरयमेव विदुः । तर्हि निरय इत्येव कुतो न व्यवहरन्तीत्यत आह—रलयोरिति । रलयोरभेदमाश्रित्य निरयमेव निलयं वदन्तीत्यर्थः । तदपि कुत इत्यत आह—अनुद्वेजनायेति । निरय इत्युच्यमाने उद्विजेरन्निमे लोका इति निलय इति वदन्ति । 'ययाऽ-

स्योद्विजते वाचा नालोक्यां तामुदीरयेत्' इति निषेधादिति भावः ॥

एवम्—

**स्वात्येवैषा जननि त्वन्मुखचन्द्रेण गाढमुपगूढा । अधररुचिरोहिणीयं नासामुक्तेति मुग्धजनवादः ॥ २३१ ॥**

इत्यत्राप्यारोपपूर्वकत्वादिकं द्रष्टव्यम् । स्वातीनक्षत्रस्य पद्मरागवर्णतया तदारोपः । रोहिणी रोहिता । 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप्, तत्सान्नियोगशिष्टं नत्वं, ततो णत्वम् ॥

आरोपगर्भत्वाच्चेयं सादृश्याद्वा भवति संबन्धान्तराद्वेति विमर्शिनीकारः । सादृश्येऽस्यास्साधारणधर्मा उपमायामिव द्रष्टव्याः । तत्रानुगामी धर्मः 'नियतं न कलङ्कोऽयं शशाङ्कबिम्बे यदेतदानीलम्' इत्यादौ प्रागुदाहृतपद्ये निर्दिष्टः ॥

शुद्धसामान्यरूपं यथा—

**अधिवृषगिरिनाथाङ्गं यदिह पिशङ्गं न हेमवसनं तत् । मुनिजनमानससरसिजनिवसनलग्नं सुपिङ्गळं हि रजः ॥ २३२ ॥**

अत्र पिशङ्गपिङ्गळत्वयोश्शुद्धसामान्यरूपत्वम् । अयमेव वस्तुप्रतिवस्तुभावः ॥

वस्तुप्रतिवस्तुभावकरम्भितबिम्बप्रतिबिम्बभावेनानुगामितया च यथा—

**तपनीयविमानान्तर्न परमपुरुषोऽयमहिगिरे-**

शिखरे। कनकसरोरुहजठरे कनति विलग्नो मधुव्रतवरेण्यः ॥ ३३३ ॥

अत्र तपनीयकनकयोः अन्तर्जठरयोश्च वस्तुप्रतिवस्तुभावः। तत्करम्भितो विमानस्य सरोरुहस्य च बिम्बप्रतिबिम्बभावः कनतीत्यस्यानुगामित्वं चेति द्रष्टव्यम् ॥

संबन्धान्तराद्यथा—

न भगवदाविर्भावः फणिशिखरिणि यद्विभाव्यते मुनिभिः। अपि तु जगतां विनमतामशुभपिशाचीतिरोभावः ॥ ३३४ ॥

अत्र भगवदाविर्भावस्य कारणस्य निषेधेन अशुभपिशाचीतिरोभावस्य कार्यस्य विधिः। एवमारोपगर्भा सप्रपञ्चं प्रदर्शिता। अध्यवसानसगर्भा पुनः प्रदर्श्यते, यथा—

न निगममयबिम्बत्वान्न भास्वरत्वान्न लोकबन्धुत्वात्। सन्ध्यासु वन्द्यतेऽर्कः किंतु वृषाद्रीशहृदयमणिदास्यात् ॥ ३३५ ॥

वृषाद्रीशहृदयमणिः कौस्तुभः, तस्मिन् दास्यात् तदनुवर्तितेजस्त्वादिति यावत्। अत्रार्कस्य वन्द्यत्वे 'उद्यन्तमस्तंयन्तमादित्यमभिध्यायन्' इत्यादिप्रमाणावबोधितप्रभावहेतुकत्वं निगीर्य तत्र हेत्वन्तरमध्यवसितम् ॥

यथा वा—

नायं सुशीतलत्वान्न कोमलत्वान्न वा सचपल-

त्वात् । अभिनन्द्यो लोकानामभिनवजलदो हरे तवौपम्यात् ॥ २३६ ॥

अत्राभिनन्द्यत्वस्य जीवनदानादिहेतुकत्वं निगीर्य तत्र हेत्वन्तरमध्यवसितम् ॥

यथा वा—

हृदये कौस्तुभरत्नं न भूषणार्थं स्वभूरयं धत्ते । बहुमानयितुं कमलासहजन्मेत्यहिधुरंधराद्रीशः ॥ २३७ ॥

अत्र कौस्तुभरत्नहृदयधारणस्य—

आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः ॥

इत्युक्तं जीवतत्त्वाभिमानित्वप्रयुक्तसत्करणत्वं फलं निगीर्य फलान्तराध्यवसायः कृतः ॥

सावयवारोपाऽपीयं दृश्यत इति रसगङ्गाधरकृत् ॥

यथा—

हृदयह्रदान् बुधानां प्रसादयन्ती रमास्यराकेन्दुम् । सुस्मेरं विदधाना शरदेषा न तु हरेरपाङ्गरुचिः ॥ २३८ ॥

आरोपमात्रोपायत्वे परंपरिताऽप्येषा संभवतीति स एवाह ॥

यथा—

तदिदं तव नवपल्लवमदविदळनकृत्पदं वदन्त्व-

धियः । तिग्मभवातपवारणनवातपत्रं ब्रवाण्यहं तु हरे ॥ ३३९ ॥

एवं प्रागुदाहृते 'मणिमकुटतरणि' इति पद्येऽपि परंपरिताऽनुसंधेया ॥

अस्याश्च ध्वनिर्यथा –

एषा न वैजयन्ती पुरो लसन्ती महेन्द्रचापलता । नैषाऽपि जलधिदुहिता परं तु विद्युल्लता समुन्मिषिता ॥ ३४० ॥

अत्र नैषा वैजयन्ती अपि तु इन्द्रधनुर्वल्ली, नाप्येषा लक्ष्मीः अपि तु विद्युल्लतेति पूर्वोत्तराभ्यां द्वे अपह्नुती तावत् स्पष्टमेव निर्दिष्टे। ताभ्यां च नायं भगवान् किं तु प्रावृषेण्यघनाघन इति तृतीयापह्नुतिर्व्यञ्जनया प्राधान्येनावेद्यते तदीयवस्तुप्रतिषेधारोपयोः तत्प्रतिषेधारोपावेदकतायाः न्यय्यत्वात् ॥

---

## अथ हेत्वपह्नुतिः.

स एवापह्नवो युक्तिपूर्वश्चेद्धेत्वपह्नुतिः ॥ ५० ॥

यथा—

नेयं श्रीरुरसि हरेर्न हि निवसेन्नित्यमत्र चपला सा। अपि तु हरिहृदयसौधस्थिरतरकुरुविन्ददीपरेखैव ॥ ३४१ ॥

अत्र चपलत्वहेतुकनित्यनिवासासंभवसंभावनारूपयुक्त्या लक्ष्म्यां लक्ष्मीत्वनिह्नवः स्थिरतरकुरुविन्ददीपरेखात्वारोपार्थः ॥

यथा वा—

**नाङ्कोऽयमुरसि शौरेर्निसर्गतोऽमुष्य निष्कलङ्कत्वात् । रतिखेदसुप्तकमलानयनाञ्जनबिन्दुरिह न संदेहः ॥ ३४२ ॥**

अत्र भगवतो निष्कलङ्कत्वरूपयुक्त्या अङ्के अङ्कत्वनिह्नवः अञ्जनबिन्दुत्वारोपार्थः ॥

---

अथ पर्यस्तापह्नुतिः

**पर्यस्तापह्नुतिर्यत्र क्वचित्तद्धर्मनिह्नवः ॥**
**वर्णनीये तदारोपफलको वर्ण्यते यदि ॥५१॥**

यत्र क्वचिद्वस्तुनि तदीयधर्मापह्नवो वर्णनीये वस्तुनि तस्य धर्मस्यारोपार्थो वर्ण्यते चेत्सा पर्यस्तापह्नुतिः ॥

यथा—

**यदिह परस्ताद्रजसस्स्थानं पदमामनन्ति परममिति। परमं न पदं तत्स्यादपि तु फणाधरपतिक्षितिभृदेव ॥ ३४३ ॥**

यथा वा—

सिंहळसंभूतमणिर्न महानीलो हरिर्महानीलः। नीलयति स हि स्वल्पं क्षीरं क्षीराब्धिमेव त-त्स्थोऽयम् ॥ ३४४ ॥

सः सिंहळसंभूतमणिः । अयं श्रीहरिः तत्स्थः क्षीरस्थः क्षीराब्धिमध्यस्थश्च । अत्र—

सिंहळस्याकरोद्भूता महानीलास्तु ते स्मृताः।
क्षीरमध्ये क्षिपेन्नीलं क्षीरं चेन्नीलतां व्रजेत् ॥
महानील इति ख्यातं रत्नं तदतिदुर्लभम् ।

इति रत्नशास्त्रार्थोऽनुसंहितः ॥

यथा वा—

इन्दुर्न सतां नेता सन्नेता पन्नगाद्रिपतिरेव।स-च्चक्रखेदमोदप्रदयोर्वेद को भवेत्सतां नेता॥३४५॥

सच्चक्रस्य सत्पुरुषनिवहस्य सतश्चक्रवाकस्य च। खेदप्रद इन्दुः मोदप्रदो भगवान् ॥

यथा वा—

अरुणकिरणो न तरणिस्तरणिः फणिधरणि-धरशरण एव । कमतीतरत्स संसृतिजलनिधिमेष तु जगन्ति तारयति ॥ ३४६ ॥

तरणिः द्युमणिः नौश्च । 'तरणिर्द्युमणौ पुंसि कुमारीनौ-

कयोः स्त्रियाम्' इति मेदिनी । अतीतरत् तारयति स्म । त-रतेर्ण्यन्ताल्लुङि चङ् । सः अरुणकिरणः । एषः वेङ्कटगिरिनिलयः॥

यथा वा—

**नापांनिधिर्नदीनो नदीन एष श्रितो हरे य-स्त्वाम् । क्षुभितस्स सर्वतो मुखभङ्गादेत्येष नैक-मपि भङ्गम् ॥ ३४७॥**

नदीन इति नशब्देन समासः । अदीनः नेत्यन्वयः, किंतु दीन एवेत्यर्थः । नदीनां इन इति वस्तुस्थितिः । भग-वदाश्रित एव नदीनः अदीनः । सः अपां निधिः सर्वतोमुखभ-ङ्गात् विश्वतोमुखात्पराजयात्, पक्षे जलतरङ्गात्, भङ्गं परा-जयं 'भङ्गो जयविपर्यये । भेदरोगतरङ्गेषु' इति मेदिनी । अत्र 'यदिह परस्तात्' इति प्राथमिकोदाहरणे रजसः परस्मिन् स्थाने परमपदत्वनिह्नवो वर्णनीये शेषाद्रौ तदारोपार्थः । अन्येषु त्रिषु सिंहळेत्यादिषु महानीलमणित्वाद्यपह्नवः प्रस्तुते भगवति तदा-रोपार्थः प्रथमोदाहरणे निह्नवे हेतुर्नोक्तः द्वितीयादिषु हेतुरुक्तः। तत्रापि सिंहळेतिद्वितीयपद्ये शुद्धः, तृतीयचतुर्थपद्ययोश्श्लेषसं-कीर्णः । पञ्चमे 'नापांनिधिः' इतिपद्ये समुद्रे नदीनत्वनिह्न-वो भगवदाश्रितेषु प्रकृतेषु तत्समारोपार्थः । हेतूक्त्यादिकं तु पूर्ववदेव । ततश्च शुद्धापह्नुतिवदत्रापि द्वैविध्यमनुसन्धेयम्। अयमपह्नुतिभेदः कुवलयानन्दानुरोधेनोक्तः । रसगङ्गाधरे तु— "अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिश्च सः' इत्येतदुपादाय 'नाय-मपह्नुतेर्भेदो वक्तुं युक्तः अपह्नुतिसामान्यलक्षणानाक्रान्तत्वात् । तथा हि—'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' उप-

मेयमसत्यं कृत्वा उपमाने सत्यतया यत् स्थाप्यते साऽपह्नुतिः' इति काव्यप्रकाशोक्तलक्षणबहिर्भावस्तावत् स्फुट एव। एवं 'विषयापह्नवे वस्त्वन्तरप्रतीतावपह्नुतिः' इत्यलंकारसर्वस्वोक्तलक्षणमपि नात्र प्रवर्तते ॥

प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्।
साम्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा ॥

इति चित्रमीमांसागतं लक्षणमपि तथैव। तस्मात् 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र दृढारोपं रूपकमेव भवितुमर्हति नापह्नुतिः। उपमेयतोपमानतावच्छेदकयोस्सामानाधिकरण्यस्य निष्प्रत्यूहं भानात्। तदुक्तं विमर्शिन्याम्— 'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते' अत्र विषस्य निषेधपूर्वकं ब्रह्मस्वे आरोप्यमाणत्वात् दृढारोपं रूपकमेव नापह्नुतिरिति" इति ॥

तर्हि दीक्षितानां कथमिदं परस्परविप्रतिषिद्धवादित्वमिति चेच्छृणु—चित्रमीमांसालक्षणं प्राचामनुरोधेन, इदं तु रत्नाकराद्यनुरोधेनेति न विरोधः ॥

## अथ भ्रान्त्यपह्नुतिः.

### भ्रान्तेर्निवारणेऽन्यस्य शङ्कायां भ्रान्त्यपह्नुतिः॥

अन्यस्य भ्रान्तेर्निवारणे तत्त्वाख्याने सति भ्रान्त्यपह्नुतिः। इमां भ्रान्तापह्नुतिरित्यप्याहुः। तदा भ्रान्तमिति भावे क्तः। तस्यापह्नुतिः। एवं च तत्त्वकथनहेतुकभ्रान्तिविषयनिषेधो भ्रान्त्यपह्नुतिरिति लक्षणं बोध्यम् ॥

यथा—

शिशिरयते मम हृदयं किं घनसारोऽथ गन्धसारो वा। न हि न हि सपदि स्मृतिपथमहिगिरिनेता सखे समानीतः ॥ ३४८॥

अत्र शिशिरयते मम हृदयमिति भगवद्वृत्तान्ते गदिते तस्य हृदयशब्दप्रतिपाद्यचित्तवक्षोरूपार्थद्वयश्लेषमूलकाभेदाध्यवसायेन घनसारादिसाधारण्यात्केवलबाह्यविषयप्रवणेन केनचित्सख्या किं घनसारोऽथ गन्धसारो वेत्यनुयुक्ते नाहिनहीत्यादिना भ्रान्तिवारणं कृतम्। इदं संभवद्भ्रान्तिपूर्विकायां भ्रान्तापह्नुतावुदाहरणम्॥

कल्पितभ्रान्तिपूर्वा यथा—

न घनततिः कबरीयं न विद्युदेषा चकास्ति सीमन्तः। शैलधृतौ संनह्यसि किं कृष्णेत्याह फणिगिरिपतिं श्रीः ॥ ३४९॥

सीमन्तः केशवीथी 'सीमन्तमस्त्रियां स्त्रीणां केशमध्यस्थ पद्धतिः' इति वैजयन्ती। शैलधृतौ गोवर्धनधारणे, अत एव कृष्णेति संबोधनम्। शैलत्वेनाध्यवसितस्तनग्रहणे च। अत्र कल्पिता भ्रान्तिः न घनततिरित्यादिनिषेधमात्रोन्नेया पूर्ववत्प्रश्नवैधुर्यात्। दण्डी तु ईदृशस्थले तत्त्वाख्यानोपमेत्युपमाभेदममन्यत। यदाह—

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमा मता॥

इति । वस्तुतस्त्वत्रोपमाबोधकस्य इवादेरभावादुपमाप्रभेदो न युक्तः । तदभावेऽप्युपमाभ्युपगमे रूपकस्याप्युपमात्वापत्तेः ॥

यथा वा—

**न तटिदियं जलधिसुता न तटित्वानेष शेषगिरिनेता । हंसानन्दविधायी किं सदिसि चित्तहंस शंस मम ॥ ३५० ॥**

अत्रापि कल्पिता भ्रान्तिः निषेधमात्रोन्नेया प्रश्नविरहात् । न तटित्वानिति निषेधे हंसानन्दविधायीति हेतूक्तिः चित्तहंसेति रूपकसंकीर्णत्वं च पूर्वस्माद्विशेषः ॥

## छेकापह्नुतिः.

**अन्यस्य शङ्कया छेकापह्नुतिस्तथ्यनिह्नुतौ ॥५३॥**

कस्यचित्कंचित्प्रति रहस्यकथने इतरेण श्रुते स्ववचनस्याशयान्तरपरिकल्पनेन सत्यस्यापलापे छेकापह्नुतिरित्यर्थः । छेकाः विदग्धाः 'छेको विदग्धे विश्वस्ते' इति हेमचन्द्रः । तत्कृता अपह्नुतिः छेकापह्नुतिरिति लक्ष्यनिर्देशः । वाक्यान्यथायोजनहेतुकः शङ्कितताात्त्विकवस्तुनिषेध इति लक्षणम् । अन्यस्य शङ्कयेत्यन्यशङ्काया निवर्तनीयत्वेन हेतुतया व्यपदेशः क्षुधाऽन्नमत्तीतिवत् । अत्र च—

कस्य वा न भवेद्रोषः प्रियायास्सव्रणेऽधरे ।
सभृङ्गं पद्ममाघ्रासीर्वारिताऽपि मयाऽधुना ॥

इति व्याजोक्तावतिप्रसङ्गवारणायाद्यं विशेषणम् । यद्वक्ष्यते–'छेकापह्नुतेरस्याश्चायं विशेषः—यत्तत्र वचनस्यान्यथानयनेनापह्नवः अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनम्' इति ॥

उदाहरणम्—

**नीलरुचिर्मम चित्ते खेलति सततं किमञ्जनाद्रीशः । न हि न हि सुरवरमणिरिति चतुरा पद्मावती सखीमाह ॥ ३५१ ॥**

अत्र पद्मावत्या नर्मसखीं प्रति नीलरुचिर्मम हृदये खेलतीति स्वप्रियतमश्रीनिवासवृत्तान्ते निवेद्यमाने तन्निशमय्य किमञ्जनाद्रीश इति शङ्कितवतीमन्यां प्रति न हि न हि सुरवरमणिरिति सत्यस्यैवापह्नवः ॥

यथा वा—

**अभिमुखमेत्याभिमृशन्नमृततुषारेण मां सखि करेण । अधिनिशमजीहृषदलं श्रीवत्साङ्कः किमालि न मृगाङ्कः ॥ ३५२ ॥**

अमृतेन अमृतमिव च तुषारश्शीतलः तेन करेण किरणेन हस्तेन च अधिनिशं रात्रौ अजीहृषत् हर्षयति स्म । हृषेर्ण्यन्तात्कर्तरि लुङि चङ् । अत्रापि कयाचिद्व्रजललनया क्रीडासखीं प्रति अभिमुखमेत्येत्यादिना नन्दनन्दनोदन्ते निवेद्यमाने तदाकर्ण्य श्रीवत्साङ्कः किमिति शङ्कितवतीमन्यां प्रति न मृगाङ्क इति तथ्यस्यैवापह्नवः । इदमर्थयोजनया सत्यनिह्नुतावुदा-

हरणद्वयम्। वस्तुतस्तु द्वितीयमुदाहरणं वक्ष्यमाणरीत्या शब्दार्थोभययोजनयाऽपह्नुतेरेवोदाहरणं भविष्यति॥

अर्थयोजनया निह्नुतिर्नाम विवक्षिताविवक्षितसाधारणस्यार्थस्याविवक्षितार्थसंबन्धित्ववर्णनया तस्यापलापः। शब्दयोजनया सा तु शब्दश्लेषमात्रेण तत्संबन्धित्ववर्णनयाऽपलापः॥

यथा--

**कमले विपुले नयने ध्यायामि तवाहमिति हठाद्वदिते। कुपितायां नीलायां तत्परतां तस्य वर्णयति शौरिः॥ ३५३॥**

अत्र कमले विपुले इत्यनयोरर्थभेदेऽपि शब्दश्लेषमात्रेणान्यथा योजनया तथ्यनिह्नवः। हे कमले! लक्ष्मि! विपुले विशाले तव नयने ध्यायामीति वा, हे विपुले! धरणि! तव नयने कमलसदृशी ध्यायामीति वा प्रत्येकं संबध्यते। नीलापरत्वे तु हे नीले! इति संबुद्धिरर्थाल्लभ्यते। तदा तव नयने कमले विपुले च ध्यायामीति योजना। अत्र रमाभूमिसंबोध्यकस्तन्नयनध्यानरूपो न वाक्यार्थः किंतु त्वत्संबोध्यकः कमलरूपविपुलत्वन्नयनध्यानरूप इत्यपह्नवस्तत्परतां तस्य कल्पयति शौरिरित्यनेन प्रकाश्यते। तस्य उक्तवचनस्येत्यर्थः। न चात्र लक्ष्मीभूमीनीलासाधारण्यमर्थस्य, अपि तु कमले विपुले इति लिङ्गवचनाश्लिष्टशब्दयोजनैवेति॥

यथा वा—

**प्रियहृदये हारिणि निशि सुप्ता न विवेद कि-**

**मपि सुभगेऽहम्। किं शौरिर्हृदि न हीमां बहुधा संबोध्य शयनसुखमवदम् ॥ ३५४ ॥**

हारिणि मुक्ताहारवति सुभगे सुन्दरे प्रियस्य भगवतो नन्दनन्दनस्य हृदये वक्षसि। पक्षे—हे हारिणि मनोहरे! हे प्रियहृदये! प्रियं हृदयं चित्तं यस्यास्सा मत्प्रियकारिणीति यावत्। हे सुभगे! सौभाग्यशालिनीति सख्यास्संबुद्धयः। किं शौरिरिति तटस्थायाः प्रश्नः। न हीत्यादिकं तथ्यनिह्नवोत्तरं नायिकायाः। अत्रापि प्रियहृदये इत्यादीनामर्थभेदेऽपि शब्दश्लेषमात्रेणान्यथायोजनया तथ्यनिह्नवः। न विवेदेति सुखपारवश्यकृतः परोक्षनिर्देशः। 'बहु जगद' इत्यादिवत् ॥

एवम्—

**निशि तमसि निमीलन्तीं स्वकरेण हृदि स्पृशा समुन्निद्राम्। भृशमुदितस्समतानीत्किं शौरिस्त्वां न कुमुदिनीमिन्दुः ॥ ३५५ ॥**

इत्यत्रापि शब्दयोजनया तथ्यनिह्नवो ज्ञेयः। निशि रात्रौ तमसि तिमिरे निमीलन्तीं सुप्तां निमीलितकुमुदां च। हृदिस्पृशा वक्षसि स्पृशता, पक्षे—मनोहरेण विकासकेनेति वा। 'हृद्युभ्यां च' इति सप्तम्या अलुक्। स्वेन निजेन करेण हस्तेन किरणेन च। जातावेकवचनम्। भृशमुदितः अतिवेलप्रहृष्टस्सन्, पक्षे—भृशं उदित इति छेदः उदयं प्राप्तस्सन्। भृशमित्येतत् उन्निद्रामित्यनेनान्वेति। उन्निद्रां निद्राया उद्गतां त्यक्तनिद्रामित्यर्थः। पक्षे—विकसितां 'तथा पुष्पितमुन्निद्रम्' इत्यमरः। समतानीदिति नर्मसखीं प्रति नायिकाया निशि स्वप्रियविरचित-

विलासवृत्तान्तवर्णनम् । किं शौरिस्त्वामिति तटस्थायाः प्रश्नः । कुमुदिनीमिन्दुरिति नायिकायास्तथ्यनिह्नवोत्तरम ॥

शब्दार्थोभययोजनया यथा—

व्रणयत्यधरं वपुषो वेपथुकृन्मम विशेषतोऽधिनिशम् । आरादसौ हिमानी शौरिः किं न सखि हिमततिर्महती ॥ ३५६ ॥

असौ हिमानीत्यत्र शब्दयोजनया निह्नवः अन्यत्रार्थयोजनयेति ध्येयम् । तथ्यार्थे हि मानी इति पदच्छेदः, निह्नवपक्षे हिमानीत्येकं पदम् । असावित्येतत्पुंस्त्रीलिङ्गसाधारणम् । अत्रासौ हि मानीति शौरिपरतया पुंलिङ्गेन निर्दिष्टस्य शब्दस्यैव असौ हिमानीति स्त्रीलिङ्गतया हिमानीपरतावर्णनाच्छब्दयोजनयाऽपह्नव इति । महद्धिमं हिमानी 'हिमारण्ययोर्महत्त्वे' इति 'इन्द्रवरुण' इति सूत्रप्राप्त आनुगागमसन्नियोगशिष्टो ङीष् नियम्यते ॥

यथा वा—

एहि सखि सत्यभामे रुक्मिणि दयिता त्वमिति हठादुक्ते । रुष्टां राधां तत्परमारचयंस्तत्प्रसादयति शौरिः ॥ ३५७ ॥

राधापरत्वे हे सति ! साध्वि ! हे अभामे ! अकोपने ! हे रुक्मिणि ! रुक्ममस्या अस्तीति तथोक्ते ! सुवर्णाभरणवतीत्यर्थः । हे सखि ! त्वमेव मे दयितेति योजना । तत् स्वोक्तं वचनं तत्परं राधापरं आरचयन् । सत्यभामे रुक्मिणीत्यत्र शब्दयोजनया सखि दयितेत्यत्रार्थयोजनयाऽपह्नव इति द्रष्टव्यम् ॥

सर्वमिदं विषयान्तरयोजनायामुदाहरणम्। विषयैक्येऽप्यव-स्थाभेदेन योजनायां यथा—

**कृष्णो मम कमन इति ब्रुवती भर्त्रे सखीभ्र-मादथ तम्। ज्ञात्वा सखि किं जगद स्वप्नादह-मित्यपूरि धूर्तैका ॥ ३५८॥**

अत्र विवक्षितं श्रीकृष्णविषयकानुरागवृत्तान्तं निद्राजागर्यव्यतिकरजातात्सहशयाने भर्तरि सखीभ्रमादुदीरितवत्या कयाऽपि गोपिकया तावतैव जागरूकतया भर्तृज्ञानजनितभयसंभ्रान्तया तद्वृत्तान्ततत्परस्य वाक्यस्य स्वप्नावस्थागततद्वृत्तान्तपरत्वं सखि किं जगद स्वप्नादहमिति शेषपूरणेन तत्रापि जगदेति पारोक्ष्याभिधायिलिडुत्तमप्रयोगेण च स्फुटीकृतम्। अत्र नायिकाविवक्षितश्रीकृष्णानुरागवृत्तान्तस्य यथार्थभूतजागरावस्थागतत्वनिह्नवोऽर्थसिद्ध इति लक्षणानुगतिः कार्या। जगदेत्यत्र 'णलुत्तमो वा' इति णित्वस्य वैकल्पिकत्वान्नोपधावृद्धिः। अपूरीत्यत्र कर्तरि लुङि 'दीपजनबुधपूरि' इत्यादिना वैकल्पिकश्चिण्। अपूरयदित्यर्थः॥

यथा वा—

**स्वैरं व्यहरावाहं शौरिश्चेति प्रमादतो गदितम्। काऽपि वधूर्गुरुनिकटे बाल्यमयन्त्रणमिति स्म पूरयति ॥ ३५९ ॥**

काऽपि वधूः गोपस्नुषा अहं शौरिश्च स्वैरं व्यहराव विहृतवन्तौ इति विपूर्वकाद्धरतेर्लङुत्तमद्विवचनम्। गुरुनिकटे श्वश्रू-

प्रभृतिगुरुजनसंनिधौ प्रमादतः अनवधानात् गदितं आत्मनोक्तं वचनं बाल्यं बालकर्म बालैः क्रियमाणोऽनभिसंधिकव्यापार इत्यर्थः । अयन्त्रणं यथेष्टं बालव्यापारे इदमेवं कर्तव्यमिदमेवं नेति निर्बन्धो न शक्यः कर्तुमिति भावः । इति पूरयति स्म । अनतिचिरानुभूतनन्दनन्दनस्वच्छन्दोपभोगरसायनाचिरतास्वादै - कतानान्तरङ्गया कयाचिद्व्रजललनया तेनैव संस्कारेण प्रमादवशाद्गुरुजनसंनिधौ स्वैरं व्यहरावेति गदितस्य वृत्तान्तस्य बाल्यावस्थागतश्रीकृष्णसहकृतधूळिकेळिप्रभृतिवृत्तान्तपरत्वं बाल्यमयन्त्रणमिति शेषपूरणेन स्फुटीकृतम् । पूर्वोदाहरणे स्वप्नावस्थाभेदेन योजना । अत्र तु बाल्यावस्थाभेदेनेति विशेषः ॥

यथा वा—

**सरजस्कां स्नातामथ शौरिर्मामाह्वयत्समं भोक्तुम् । इत्यवशादुक्त्वैका बाल्ये मैत्री ह्यकृत्रिमेत्यगदीत् ॥ ३६० ॥**

अत्र ऋतुस्नातस्वकर्मकोपभोगफलकशौरिकृताह्वानरूपं वाक्यार्थं तथ्यभूतं गुरुजननिकटे प्रमादादुदीर्य तावतैव प्रबुद्धया बाल्ये मैत्री ह्यकृत्रिमेति वदन्त्या कयाचन विदग्धया नायिकया बाल्यनिर्वर्तितधूळीकेळीधूसरितत्वनिमित्तकस्नानकर्तृस्वकर्मकसहभोजनक्रियाफलकतादात्विकशौरिकृताह्वानरूपतया स एवान्यथा योजितः । अत्राप्यवस्थाभेदेन योजना पूर्ववदेव । श्लेषोपस्कृतत्वं तु विशेषः । तात्त्विकार्थपक्षे शौरिः रजसा आर्तवेन सह वर्तत इति सरजस्का तां, अन्यत्र सधूळिकाम् । अथ आर्तवानन्तरं धूळीलेपानन्तरं च । स्नातां मां समं परस्परानुरूपं

भोक्तुं उपभोक्तुं अन्यत्र सहभोजनाय, माणवकदशायां पुमांसः कन्याभिस्सह स्वैरं भुञ्जत इति प्रसिद्धमेवेदम्। आह्वयत् आहूतवान् इति अवशात् प्रमादात् उक्त्वा बाल्ये शैशवे मैत्री सख्यं अकृत्रिमा निर्व्याजेत्यगदीत् अवादीदित्यर्थः। बाल्ये मैत्रीत्याशुक्तिस्स्वोक्तस्यार्थस्य बाल्यनिर्वर्तितत्वद्योतनाय॥

कैतवापह्नुतिः—

**छलच्छद्मनिभाद्यैश्च वपुरात्मादिकैः पदैः।**
**निह्नुतिश्चेदभिव्यङ्ग्या कैतवापह्नुतिर्हि सा॥ ५४॥**

अत्र छलादिशब्दा विषयासत्यत्वप्रतिपादकाः। वपुरादिशब्दास्तु विषयासत्यत्वपर्यवसायिन इति विवेकः। छलादीत्यादिपदेन कपटकैतवव्याजमिषापदेशोपधिदम्भादिशब्दा गृह्यन्ते। वपुरात्मादीत्यादिपदेन रूपनामरीतिभङ्ग्यादिशब्दा इति ध्येयम्॥

यथा—

**धरणीनिभरमणीमणिफणिशिखरिच्छलकुचाग्रविन्यस्तः। हरिकैतवमृगमद इह हरतां स्वगुणेन जडतां नः॥३६१॥**

स्वगुणेन ज्ञानशक्तिवात्सल्यादिना अन्यत्र औष्ण्येन जडतां अज्ञतां शैत्यं च हरतां अपनयतात्। प्रसिद्धं ह्यज्ञानहारित्वं हरेः शैत्यहारित्वं मृगनाभेश्च। अत्र विषयासत्यत्वप्रतिपादकनिभच्छलकैतवशब्दैर्नेयं धरणी किंतु रमणीत्यादिनिषेधबोधनादेकवाक्यत्वं निषेधताद्रूप्ययोरार्थत्वं विधेयत्वं च, जडताहरणस्य विधेयत्वात्। सावयवा चेयं अनुग्राह्यानुग्राहकभावापन्नावयवकसंघातरूपत्वात्॥

यथा वा—

**शितभानुरपि प्रथयति सितभानुरिव द्विजन्म-राजत्त्वम् । मणिनूपुरयुगवपुषा फणिनायकशैल-नाथपदयुग्मे ॥ ३६२ ॥**

अत्र नेदं मणिनूपुरयुगं अपितु द्विजन्मराजत्त्वं प्रकाशयं-स्तिग्मभानुरेवेत्यसत्यपर्यवसायिवपुश्शब्दबलान्निषेधः प्रतीयते । एकवाक्यत्वादिकं पूर्ववत् । निरवयवा चेयम् । द्विजन्मराजत्वं द्विजराजत्वमित्यर्थः । 'सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः' इति श्रुतेश्चन्द्रमसो द्विजराजत्वम् । राजत्त्वमित्यत्रार्थान्तरानुरू-प्याय 'अनचि च' इति तकारस्य द्वित्वम् । पक्षे—राजतो भावः राजत्त्वं द्विविधे जन्मनी द्विजन्मनी ताभ्यां राजत्त्वं प्रकाशमा-नत्वमित्यनयोरर्थयोः श्लेषेणाभेदाध्यवसायः ॥

विमर्शिनीकारस्तु छलादीत्यादिशब्देन तृतीययाऽपि क्वचि-दसत्यत्वं प्रतिपाद्यत इत्यभाणीत् । तत्रेदमुदाहरणं—

**फणिगिरिमिषोदयाद्रौ मधुमथनच्छलसुधाक-राभ्युदये । तदुपत्यकावनच्छलजलधिः फेनायते स्म कुसुमौघैः ॥ ३६३ ॥**

फेनमुद्वमति फेनायते 'फेनाच्चेति वक्तव्यम्' इति वार्ति-केन उद्वमनार्थे क्यङ् । अत्र कुसुमौघैरिति तृतीयया नायं कुसु-मौघः किंतु फेन एवेत्यपह्नवनिबन्धनम् । यद्यपीदृशस्थले 'नद्या शेखरिणे' इत्यादाविव वैयधिकरण्येनारोपरूपं रूपकमेवेति यु-क्तम्, अथाप्यपह्नवोपक्रमानुरोधेनान्तेऽप्यपह्नवस्य तृतीयया प्र-

तिपादितत्वं विमर्शिनीकारानुरोधेनोक्तम् । वस्तुतस्तु कैतवापह्नुत्यनुप्राणितं व्यधिकरणरूपकमेवेदं भविष्यति । अत एव विमर्शिनीकारानुरोधिनाऽपि रसगङ्गाधरकारेणायं पक्षोऽनादृत इति ध्येयम् ॥

इयं मालारूपाऽपि भवति । तत्रापि बहून्निषिध्य एकस्यारोपे एकं निषिध्य बहूनामारोपे चेति द्विधेति कौस्तुभकारादयः ॥

तत्राद्या यथा—

**मणिसानुमिषाद्धरणौ फणिशय फणिमणिमिषेण पाताळे । सुरसरणौ द्युमणिमिषात्प्रतापराशिः कृतावतारस्ते ॥३६४॥**

मणिसानुः सुमेरुः । फणिशयेति भगवत्संबुद्धिः । अन्यत्सुगमम् ॥

**विद्रुममिषेण जलधौ कलधौताम्बुजमिषेण सुरसरिति । कुरुविन्दवृन्दमिषतो द्विषतां मौळिष्वभात्प्रभावस्ते ॥ ३६५ ॥**

कलधौतं हेम 'कलधौतं रूप्यहेम्नोः' इत्यमरः । मन्दाकिन्यां हेमारविन्दस्थितिः प्रसिद्धा । प्रभावः प्रतापः । 'स्यात्प्रतापः प्रभावश्च' इत्यमरः । अत्र पीतवर्णतया प्रथितस्य कनकाचलादेः लोहिततया प्रसिद्धस्य विद्रुमादेश्च लोहिततयैव कविसमयसिद्धं प्रतापं प्रत्युपमानतावर्णनं पीतलोहितयोर्वर्णयोरभेदस्यापि कविसमयसिद्धत्वादित्यवधेयम् । तथाचोक्तमलंकारशेखरे—

कमलासंपदोः कृष्णहरितोर्नागसर्पयोः ।
पीतलोहितयोस्स्वर्णपरागाग्निशिखादिषु ॥
चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः ।
दानवासुरदैत्यानामैक्यमेवाभिसंहितम् ॥ इति ॥

शीतांशुरुचिमिषाद्दिवि शीताद्र्यनिमिषधुनीमिषादवनौ । पाताले शेषमिषात्तु ख्यातानि यशांसि तव विभान्ति विभो ॥ ३६६ ॥

शीताद्रिः हिमगिरिः । अनिमिषधुनी गङ्गा । तयोर्मिषात् व्याजात् । हे विभो भगवन् ! ॥

ऊर्ध्वं नभस्तलनिभादधश्च वसुधातलच्छलाद्भगवन् । जलधिच्छलात्समन्ताद्विभा विभक्ता विभाति तव भूमन् ॥ ३६७ ॥

वसुधातलस्य नैल्यं 'यत्कृष्णं तदन्नस्य' इति श्रुत्यनुरोधिना 'क्ष्मामण्डलं कुवलयाकरकोमलाभम्' इतिवर्णनेन सिद्धमिति ध्येयम् ॥

क्वचिदिह मरकतरूपं क्वचिदभ्रनिभं क्वचित्तमालनिभम् । क्वचिदिन्दीवरदम्भं महोज्ज्वलं तव महो जगति भाति ॥ ३६८ ॥

निभशब्दोऽत्र व्याजवाची 'निभस्तु कथितो व्याजे' इति मेदिनी । अत्र श्यामलत्वेन प्रसिद्धस्य भगवन्महसः हरिद्वर्णमरकतोपमानकथनं अनुपदोदाहृतप्रमाणेन नीलहरिद्वर्णयोरभेदप्रतिपादनात् ॥

हीरमिषात्ताटङ्के हारमिषादम्ब कंधरायां ते। माल्यमिषाद्धम्मिल्ले स्मितरुचिशकला हरेर्विभान्त्यमलाः ॥ ३६९ ॥

एषूदाहरणेषु सुमेरुप्रभृतीन्बहून्निषिध्य तत्र प्रतापादेरेकस्यारोपः ॥

द्वितीया यथा—

वेदांस्तत्प्रतिपाद्यान्पुरुषार्थांस्तत्कृते नृभिरुपास्यान्। चतुरो भगवद्व्यूहान्बाहाव्याजाद्बिभर्षि जननि त्वम् ॥ ३७० ॥

चतुर इत्येतत् वेदपुरुषार्थभगवद्व्यूहानां त्रयाणामपि विशेषणम्। वेदाः ऋग्यजुस्सामाथर्वाख्याः पुरुषार्थाः धर्मार्थकाममोक्षाख्याः। भगवद्व्यूहाः वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्याः। अत्र लक्ष्मीबाहानिषेधपूर्वकं तत्र वेदादीनां बहूनामैक्यारोपः ॥

भुवनत्रयीं त्रयीं वा त्रिगुणां वा प्रकृतिमहिगिरिद्युमणे। कुक्षौ निधायभगवन्नूक्षस्यविरळवळित्रयीव्याजात् ॥ ३७१ ॥

त्रयीं ऋगादिवेदत्रयं 'स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी' इत्यमरः। त्रिगुणां सत्त्वरजस्तमोगुणात्मिकाम्। अत्रापि वळित्रयीनिषेधपूर्वकं तस्यां भुवनत्रय्यादीनामनेकेषामैक्यारोपः ॥

इत्यलंकारमणिहारे अपह्नवसरस्त्रयोदशः

## अथोत्प्रेक्षासरः.

यदन्यधर्मसंबन्धादन्यस्यान्यत्वतर्कणम् ।
सोत्प्रेक्षोक्ता त्रिधैषा स्याद्वस्तुहेतुफलात्मना ॥
उक्तानुक्तास्पदत्वेन वस्तूत्प्रेक्षा द्विधा मता ।
हेतूत्प्रेक्षाफलोत्प्रेक्षे सिद्धासिद्धास्पदत्वतः ॥

अन्यस्य विषयिणो यो धर्मः तत्सम्बन्धरूपान्निमित्तात् अन्यस्य अन्याविषयकं अन्यत्वतर्कणं अन्यत्वेन संभावनं विषयिणस्तादात्म्येन संभावनमित्यर्थः। अन्यस्येति षष्ठ्यर्थो विषयताधर्मितारूपा, विषयिण इति षष्ठ्यर्थस्तु विशेषणतारूपा विषयता । अन्यत्वेनोत्कीर्तनं च संभावनाया आहार्यतासूचनाय । तथाच विषयिनिष्ठधर्मसंबन्धप्रयुक्तं विषयधर्मिकं तादात्म्यसंसर्गेण विषयिविधेयकमाहार्यसंभावनमुत्प्रेक्षेति पर्यवसितम् । तन्निष्ठधर्मसंबन्धप्रयुक्तमाहार्यतत्संभावनामिति तु निष्कर्षः । इतरांशस्तु अव्यावर्तकत्वेन स्वरूपकथनमात्रपरः। 'मुखं चन्द्रं मन्ये' इत्युत्प्रेक्षायां चन्द्रनिष्ठाह्लादकत्वादिधर्मसंबन्धप्रयुक्तं मुखे चन्द्रसंभावनमाहार्यमस्तीति लक्षणानुगतिः । बाधाद्यभावदशायां तु जायमाना मुखादौ चन्द्रादिसंभावना नोत्प्रेक्षेति तद्वारणायाहार्येति ॥

एतेन—

दुन्दुभिकाहलहलहलबन्धुरमखिलं दिगन्तरालमभूत् । यत्तन्मन्ये फणिगिर्युत्तंसो भजति सपदि जययात्राम् ॥ ३७२ ॥

इत्यत्र दुन्दुभिप्रभृतिकोलाहलदिगन्तरालव्याप्तिरूपजययात्राप्रवृत्तधर्मसंबन्धप्रयुक्तायां भगवति तत्संभावनायामपि नातिव्याप्तिः । तस्या अनाहार्यत्वात् । 'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये' इति संभावनालंकारविषये—

**यदि जलधिर्विजलस्स्याद्यदि विसुवर्णस्सुवर्णभूभृत्स्यात् । जह्याद्रक्षादीक्षामह्याद्रिशिखामणिस्तदा मन्ये ॥३७३॥**

इत्यादावतिव्याप्तिवारणाय प्रयुक्तान्तम् । अत्र यदि जलधिर्विजलस्स्यादित्यादिसंभावनस्य विषयिनिष्ठधर्मसम्बन्धप्रयुक्तत्वाभावात् ॥

**काकोदरगिरिमेनं लोकोत्तररामणीयकं मन्ये । पदमपि परमं विजहद्विहरति यदिह श्रिया सह मुकुन्दः ॥३७४॥**

इत्यादावतिप्रसङ्गवारणाय तन्निष्ठेति संभाव्यमानवृत्तित्वं धर्मविशेषणम् । तत्र परमपदत्यागपूर्वकश्रीसहितविहरणरूपो धर्मो मुकुन्दवृत्तिः । न तु संभाव्यमानवृत्तिरिति नातिप्रसङ्गः । ननु संबन्धान्तरेणोत्प्रेक्षाया असंग्रह इति चेन्न । सर्वत्राभेदेनैवोत्प्रेक्षणमिति प्राचीनमतानुरोधेनैवमभिधानात् । एतत्सूचनायैव लक्षणे तादात्म्योपादानमिति ध्येयम् ॥

सा चोत्प्रेक्षा वस्तुहेतुफलात्मतागोचरतया त्रिविधा, वस्तुहेतुफलात्मता च वस्तुहेतुफलतादात्म्यम् । अत्र वस्तुनः कस्यचिद्वस्त्वन्तरतादात्म्यसंभावना प्रथमा वस्तूत्प्रेक्षेत्युच्यते ।

इयमेव स्वरूपोत्प्रेक्षा । अहेतोर्हेतुभावेन अफलस्य फलत्वेनोत्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षेत्युच्यते । तत्राद्या स्वरूपोत्प्रेक्षा उक्तानुक्तास्पदत्वेन द्विविधा । आस्पदं विषयः । उक्तविषया अनुक्तविषया चेति द्विविधेत्यर्थः । हेतूत्प्रेक्षाफलोत्प्रेक्षे सिद्धविषया असिद्धविषया चेति प्रत्येकं द्विविधे ॥

क्रमेणोदाहरणानि—

**हरिशेखरितादहिपतिधरणिधरादधिकतां परां लिप्सुः । हरिशिरसि भासमानस्सुरगिरिशिशुरिव महाकिरीटोऽव्यात् ॥ ३७५ ॥**

अत्र कनकमणिमयत्वादिना धर्मसंबन्धेन निमित्तेन महाकिरीटस्य सुमेरुशिशुतादात्म्यसंभावना स्वरूपोत्प्रेक्षा महाकिरीटस्य विषयस्योपादानादुक्तविषया ॥

यथा वा—

**विसृमरनिजरुचिभरपरिवलयिततनुरहिगिरीन्द्रपतिदयिता । प्रकटयतीव हिरण्यप्राकारात्वं स्वमागमप्रोक्तम् ॥ ३७६ ॥**

अत्र पिशङ्गत्वादिना गम्यमानेन निमित्तेन लक्ष्मीतनुरुचिवलयस्य हिरण्यप्राकारतादात्म्यसंभावना । वस्तुतस्तु प्रकटनक्रियोत्प्रेक्षाया एवात्र प्राधान्येन निर्दिष्टत्वाद्वक्ष्यमाणरीत्या क्रियास्वरूपोत्प्रेक्षाया एवेदमुदाहरणं भविष्यतीति ध्येयम् । अन्यत्तु अग्रे निरूपयिष्यते । अत्र 'हिरण्यप्राकारामार्द्राम्' इति श्रुत्यर्थोऽनुसंहितः ॥

अनुक्तविषया वस्तूत्प्रेक्षा यथा—

**अभिषिञ्चतीव मामयमहिराजधराधरधिपति-रमृतैः । दयनीयस्य ममालं नयने दिव्याञ्जनैरन-क्तीव ॥३७७॥**

अत्राप्यायकत्वादिना निमित्तेन गम्यमानेन भगवत्कर्तृका-नन्दनस्य तत्कर्तृकामृताभिषेकतादात्म्योत्प्रेक्षा दिव्याञ्जनाञ्जनता-दात्म्योत्प्रेक्षा चानुक्तविषया स्वरूपोत्प्रेक्षा, आख्यातोपस्थिते कर्तरि भगवतस्तादात्म्येनान्वये कर्तुर्धात्वर्थे अभिषेचने अञ्जने चान्वयात् तस्य इवशब्दार्थे संभावने तस्य च विषयतया आनन्दने अन्व-याद्भगवत्कर्तृकाभिषेचनाञ्जनसंभावनाविषय आनन्दनमिति वा-क्यार्थबोधपर्यवसानात् उभयत्रापि विषयभूतस्यानन्दनस्य विष-यिवाचकाभ्यामभिषिञ्चत्यनक्तिभ्यामन्येनानुपादानाच्च ॥

नन्वत्र अभिषिञ्चत्यनक्तीति धात्वर्थयोरभिषेचनाञ्जनयोराख्या-तोपात्ते कर्तरि विशेषणत्वेनान्वयमभ्युपेत्य कर्तुरिवशब्दार्थे संभा-वनेऽन्वयेन अभिषेचनाञ्जनकर्तृतादात्म्यमेवोत्प्रेक्ष्यताम् । ततश्च भगवतो विषयस्योपादानेन उक्तविषयतालाभात् भगवतः प्रथ-मान्तपदोपस्थापितस्य मुख्यविशेष्यतया प्रथमान्तविशेष्यकबो-धोऽपि तान्त्रिकसंप्रतिपन्न उपपादितो भवतीत्युत्प्रेक्षाद्वयमुक्ताविष-यमेवास्तु । सकृदुच्चारिताभ्यामभिषिञ्चत्यनक्तिभ्यां शक्त्या अभि-षेकाञ्जनयोः साध्यवसानलक्षणया साधारणधर्मपुरस्कारेणानन्द नस्य चोपस्थापनाया युगपद्वृत्तिद्वयविरोधेनासंभवादिति चेन्मैवं, 'लः कर्मणि च' इति सूत्रानुसारेणाख्यातस्य कर्त्रादिशक्ततया प्रकृ-ते अभिषिञ्चत्यनक्तीत्याभ्यामाख्याताभ्यां कर्तुरुपस्थितावपि 'भा-

वप्रधानमाख्यातम्' इति यास्कस्मरणात् भावो धात्वर्थः प्रधानं विशेष्यं यस्य तदाख्यातमित्यर्थकाद्धात्वर्थभूताभिषेचनाञ्जनक्रिय-योरेव विशेष्यतया तदुपसर्जनत्वेनान्वितस्य कर्तुरुत्प्रेक्षाविषय-तया इवादिशब्दार्थभूतसंभावनायामन्वयासंभवात्। एवमाख्या-तस्य क्रियोपसर्जनत्वादेव—

> लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
> इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम्॥
>
> केषांचिदुपमाभ्रान्तिरिवश्रुत्येह जायते।
> नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम्॥

इत्यादिना उत्प्रेक्षास्थले 'लिम्पतीव' इत्यत्रोपमाभ्रान्तिं केषांचि-त्संभवन्तीं प्रतिक्षिपता दण्डिना—

> कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।
> स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम्॥

इति कर्तुरुपमायामुपमानतयाऽन्वयोऽपि निराकृतः। तथाहि कारिकार्थः 'लिम्पतीव' इत्यत्र लेपनकर्तुरिवशब्दार्थे सादृश्ये उप-मानत्वेनान्वयसंभवादुपमैवात्र किं न स्यादित्याशङ्काया उत्तर-त्वेनायं श्लोकोऽवतारितः। कर्ता यद्युपमानं स्यात्तदेयं शङ्का युज्येत, न चेदं संभवति, तत्र हेतुः न्यग्भूत इत्यादिः। असौ कर्ता क्रियापदे तिङन्ते न्यग्भूतः क्रियोपसर्जनीभूत इत्यर्थः।

> फलव्यापारयोर्धातुराश्रये तु तिङस्स्मृताः।
> फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥

इत्युक्तेः। न्यग्भूततामेवोत्तरार्धेनोपपादयति—स्वेति। स्व-क्रियायाः लेपनादिरूपायः साधने व्यग्रः व्यापृतः असौ कर्ता

अन्यत् स्वसाध्यक्रियापेक्षया इतरत् व्यपेक्षितुं आकाङ्क्षितुं साधयितुमिति यावत् नालं न समर्थः । यथा कस्यचिदधीनो नान्यस्य शक्नुयात्साधयितुं कार्यं तथा एकस्याः क्रियाया विशेषणत्वेनाधीनः कर्ताऽन्यस्योपमानरूपस्य विशेषणतां नाप्तुमीष्टे, इतरविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्वयायोगात् । अतो नात्र कर्तुरुपमानत्वं संगच्छत इति । तथाच इवशब्दार्थस्संभावनं सादृश्यं वाऽस्तु, उभयथाऽपि न तत्र कर्तुरन्वय इति नोपमा युक्तेति । तस्मात्तमसि लेपनकर्तृत्वमुत्प्रेक्ष्यमिति मतमनुपादेयमेव । तस्यापि कर्तृविशेषणत्वात् । विवक्षिताविवेकेन लेपनस्यैवोत्प्रेक्षणीयत्वाच्च । एवंचोदाहृतपद्ये प्रधानभूताभिषेचनाञ्जनक्रियागोचरा संभावनैव निगीर्णानन्दनविषयेति सिद्धम् । न च युगपद्वृत्तिद्वयविरोधदोषता, तदनभ्युपगमात् । ये तु 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इत्यत्र तमोनभसो विषययोस्तत्कर्तृकलेपनवर्षणस्वरूपधर्मोत्प्रेक्षेत्याहुः, तन्मते स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा धर्मोत्प्रेक्षा चेत्येवं द्वैविध्यम् । तत्र तमोनभसोः कर्तृत्वेन विषयत्वेन च द्विवारमन्वयक्लेशः । तथा धर्म्युत्प्रेक्षा साधर्म्यप्रयुक्ता धर्मोत्प्रेक्षा तु तत्सहचरितधर्मसंबन्धप्रयुक्तेति लक्षणाननुगमः । न च तन्निष्ठतत्समानाधिकरणान्यतरत्वेन धर्मनिवेशान्नाननुगम इति वाच्यम् । सर्वत्र सादृश्यनिमित्ताया एवोत्प्रेक्षायास्संभवेनान्यतरत्वादिनिवेशप्रयुक्तगौरवस्यानुपादेयत्वादिति वदन्ति ॥

यथा वा —

श्रुत्यञ्चलसंसक्ता मुक्ताश्श्रुत्यन्तचपलमक्षियुगम् । अवलोकय भुवनमातस्तव देवि भृशं हसन्तीव ॥३७८॥

अत्रापि कर्णाभरणमौक्तिकसंबन्धिप्रकाशस्य तत्कर्तृकहास-तादात्म्योत्प्रेक्षा अनुक्तविषया । प्रकाशस्य विषयस्य निगीर्णत्वादिति बोध्यम् ॥

सिद्धविषया हेतूत्प्रेक्षा यथा—

**खञ्जनरुचिखञ्जनबलभञ्जनमणिमञ्जुरुचिनिचयनिचुले । अञ्जनशिखरिणि सततासञ्जनतो नूनमसित एष हरिः ॥ ३७९ ॥**

खञ्जयति गतिविकलं करोतीति खञ्जनः । खञ्जनरुचेः खञ्जरीटाख्यखगत्विषः खञ्जनः ततोऽप्यतिशयितनीलिमेत्यर्थः । 'खञ्जरीटस्तु खञ्जनः, खोडे खञ्जः' इति चामरः । बलभञ्जनमणयः इन्द्रनीलरत्नानि तेषां मञ्जुरुचिनिचयः निचुळः निचोळः यस्य तस्मिन् 'निचुळस्तु निचोलके' इति विश्वः । निचोलः प्रच्छदपटः 'विनयनिचुलितैः' इति मुरारिप्रयोगश्च । अत्र भगवतो नैसर्गिके श्यामलिम्नि वस्तुतोऽञ्जनगिरिसततासञ्जनं न हेतुरित्यहेतोस्तस्य हेतुत्वसंभावना हेतूत्प्रेक्षा अञ्जनगिरिसततासञ्जनस्य सिद्धत्वात्सिद्धविषया अञ्जनशब्दश्लेषभित्तिकाभेदाध्यवसायमूला । प्रसिद्धं ह्यञ्जनस्य नैल्यम् ॥

असिद्धविषया हेतूत्प्रेक्षा यथा—

**श्रीवत्स इति हरे त्वं वात्सल्यादिव रमाश्रये हृदये । किंचन लाञ्छनमश्नसि कञ्चुकिवरभूभृदञ्चलाभरण ॥ ३८० ॥**

श्रीवत्सः लक्ष्मीपुत्रः 'वत्सः पुत्रादिवर्षयोः' इति मेदिनी । 'वत्सस्सुतादौ तर्णके त्रिषु' इति रत्नमाला च । पक्षे श्रीवत्स

इति लाञ्छननाम । अञ्चसि पूजयसि आद्रियसे । पूजनं चात्र—'स च पूज्यो यथा ह्यहम् । पूज्या लालयितव्याश्च' इत्यादाविवादरणपरम् । पक्षे प्राप्नोषीत्यर्थः । अत्र श्रीवत्सनामलाञ्छनस्य रमाश्रयभूतहृदयस्थलाधिकरणकाञ्चने लक्ष्मीवत्सताप्रयुक्तं वात्सल्यं न हेतुरित्यहेतोस्तस्यासिद्धस्य हेतुतासंभावना असिद्धविषया हेतूत्प्रेक्षा श्लेषोज्जीविता ॥

यथा वा—

**भजति भुजगेशनगपतियुवतिमणीरुचिकचाकचिजितेव । विद्युन्मुखे विकारं तान्तत्वं च द्युमध्यलीनात्वम् ॥ २८१ ॥**

भुजगेशनगपतियुवतिमणी लक्ष्मीः तस्याः रुच्या प्रभया कचाकचिजितेव केशेषु केशेषु गृहीत्वा प्रवृत्तेन युद्धेन परास्तेव विद्युत् मुखे वदने विकारं पराभूतत्वचिह्नं वैवर्ण्यं तान्तत्वं ग्लानिं द्युमध्ये यत्रकापि गह्वराभ्यन्तरान्तरिक्षमध्ये लीनत्वं अदृश्यतयाऽवस्थानं च भजति । द्युमध्येत्यत्र वकारान्तस्य द्युशब्दस्य 'दिव उत्' इत्युत्वम् । यद्वा द्यु इत्यव्ययं गगनवाचि । 'द्यु क्लीबमह्नि गगने च' इति मेदिन्यनुशासनात् ॥

वास्तवार्थस्तु—मुखे आदौ विकारं वि इत्याकारकमक्षरं तान्तत्वं तकारान्तत्वं द्युः द्यु इति वर्णसमुदयः मध्ये वि त् इत्यनयोर्वर्णयोरन्तराळे लीनः स्थितः यस्यास्सा तस्याः भावः द्युमध्यलीनात्वम् । विद्युत्पदे मुखविकारवत्त्वतान्तत्वद्युमध्यलीनात्वानि द्रष्टव्यानि । द्युमध्यलीनाशब्दस्य समस्तत्वेनागुणवचनत्वात् 'त्वतलोर्गुणवचनस्य' इति न पुंवद्भावः । अत्र संज्ञाजा-

तिकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तश्शब्दो गुण-वचनशब्देनोच्यते । आकडारसूत्रभाष्यतस्तथैव लाभात् । अत एव 'एकतद्धिते च' इति सूत्रे भाष्ये 'एकत्वमिति पुंवत्त्वात्सिद्ध-म्' इत्याशङ्क्य 'न सिध्यति उक्तमेतत् । त्वतलोर्गुणवचनस्य' इत्युक्तम् । एकशब्दे सर्वनामसंज्ञया गुणवचनसंज्ञाया बाध इति तदाशयः । इदं च 'त्वतलोः' इति सूत्रशेखरे स्पष्टम् । अत्र विद्युतो मुखविकारवत्त्वादिके नैसर्गिके लक्ष्मीरुचिपरास्तत्वं न हेतुरिति तद्धेतुत्वसंभावना हेतूत्प्रेक्षा । वस्तुतस्तत्परास्तताया अभावादसिद्धविषया श्लेषोत्तम्भिता । पूर्वोदाहरणे वात्सल्यादिति हेतुत्वं तावत्पञ्चम्यैव निर्दिष्टम्, अत्र तु जितेति धर्मिविशेषण-तया जयस्य हेतुत्वमार्थम् । यथा 'पूजितस्तुष्यति' इत्यादौ पूजनादेः ॥

ननु कथं विद्युच्छब्दगतं विप्रभूतिवर्णवत्त्वं तद्वाच्ये वस्तुनि संभवेत्, येन उपपादितश्लेषमूलकाभेदकल्पनेन उक्तोऽर्थो निरु-ह्येतेति चेत् । शब्दार्थतादात्म्यस्य साम्राज्यादित्यवेहि । तथा ह्याहुश्शाब्दिकाश्शब्दशक्तिनिरूपणावसरे—"संकेतस्तु पदपदार्थ-योरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दस्सोऽर्थो योऽर्थ-स्स शब्दः' इति पातञ्जलभाष्यमुदाहरन्तः पदपदार्थयोस्संब-न्धान्तरमेव शक्तिर्वाच्यवाचकभावापरपर्याया । तद्ग्राहकं चेतरेत-राध्यासमूलं तादात्म्यं तदेव सम्बन्धः । उभयनिरूपिततादात्म्य-वानुभय इत्यर्थपदयोर्व्यवहारात् । तस्य च तादात्म्यस्य निरू-पकत्वेन विवक्षितोऽर्थश्शक्यः, आश्रयत्वेन विवक्षितश्शब्द श्शक्तः । शब्दार्थयोस्तादात्म्यादेव श्लोकमशृणोत् अर्थं वदतीति व्यवहारः 'ओमित्येकाक्षरं ब्रह्म, रामेति द्व्यक्षरं नाम मान-भङ्गः पिनाकिनः, वृद्धिरादैच्' इति शक्तिग्राहकश्रुतिस्मृतिविषये

सामानाधिकरण्येन प्रयोगश्च । तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदाभेदसमनियतम् । अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः'' इति । विस्तरस्तु मञ्जूषादौ । तस्माच्छब्दार्थतादात्म्यावलम्बनेन विद्युच्छब्दगतमपि विप्रभूतिवर्णवत्त्वं तदर्थेऽपि निरर्गळमेवेत्युपपादितोऽर्थो निरुह्यत इति न संकटं किंचित् । एवमेवान्यत्रापि बोद्धव्यं बुद्धिमद्भिः ॥

यथा वा—

अर्थिजनपीडनानामसासहिर्नूनमहिमहीध्रमगाः । क्व वसन्तमर्थिनिवहा वदान्यमब्जाक्ष जीवयन्त्येते ॥३८२॥

अर्थिजनपीडनानां असासहिर्नूनं असहिष्णुरिव 'सासहि वावहि' इत्यादिना यङन्तात्सहतेः किप्रत्ययान्ततया निपातनात्साधुः । पीडनानामिति कर्मणि षष्ठी । अहिमहीध्रं शेषाद्रिं आशीविषमयं गिरिमित्यपि गम्यते । अतिभयंकरत्वेनान्यदुर्गमत्वमनेन द्योत्यते । अगाः प्राप्तवानभूः । हे अब्जाक्ष ! एते परसंकटं मनागप्यनालोचयन्तस्स्वार्थैककृपणा इति भावः । अर्थिनिवहाः वदान्यं प्रियवचनपुरस्सरदानशीलं क्व वसन्तं जीवयन्तीति लोकोक्तिः । न खलु सुदुर्गममपि प्रदेशमास्थितवन्तं न पीडयेरन्निति भावः । अत्र भगवतोऽहिमहीध्रप्राप्त्यहेतोरप्यर्थिजनपीडनासहिष्णुत्वस्य तद्धेतुत्वसंभावना असिद्धविषया, तादृशासहनस्यासिद्धत्वात् । अत्रापि पूर्वोदाहरण इव हेत्वर्थः । पूर्वोदाहरणद्वयं श्लेषसंकीर्णम् । इदं तु शुद्धमिति वैलक्षण्यम् ॥

सिद्धविषया फलोत्प्रेक्षा यथा—

विनतानां जनतानां तमसामवसादनाय किल शौरे । शस्तघृणिं कौस्तुभमणिमरुणांशुसहस्रनिभमुरसि वहसि ॥ ३८३ ॥

अत्र कौस्तुभमणिधारणं प्रत्यफलस्यापि तमोऽवसादनस्य तत्फलत्वेन संभावना सिद्धविषया फलोत्प्रेक्षा ।

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥

इत्युक्तप्रकारेण भगवतस्तमोऽवसादनस्य स्वतस्सिद्धत्वात् ॥

असिद्धविषया फलोत्प्रेक्षा यथा—

सोदरसुधानिरन्तरसादरसहवासकुतुकपरिपूर्त्यै । काकोदरगिरिनाथः कमलायै स्मितसुधां व्यनक्ति किल ॥ ३८४ ॥

किलेत्युत्प्रेक्षाव्यञ्जकम् । अत्र भगवता लक्ष्मीं प्रति स्मितसुधाया व्यञ्जनस्य सोदरसुधानिरन्तरसादरसहवासकुतुकपरिपूर्तिर्न फलमिति तस्याः गगनारविन्दायमानायास्तत्फलत्वेन संभावना असिद्धविषया फलोत्प्रेक्षा ॥

यथा वा—

अहमपि विजितोऽस्म्यनया रमयेति व्यञ्जनाय किल भगवन् । तन्निलये निजहृदये भान्तीं बध्नासि वैजयन्तीं त्वम् ॥ ३८५ ॥

वैजयन्तीं विजयपताकां वनमालां च। अत्र भगवता लक्ष्मीनिलयभूते निजहृदये वनमालाऽभिन्नत्वेनाध्यवसिताया वैजयन्तीशब्दवाच्याया जयपताकाया बन्धनं प्रति स्वस्यापि श्रिया विजितत्वाभिव्यञ्जनं न फलमिति तस्य फलत्वेन संभावना उक्तफलस्यासिद्धत्वादसिद्धविषया फलोत्प्रेक्षा। इयं रूपकश्लेषाभ्यामुत्तम्भिता। पूर्वा तु रूपकसंकीर्णेति भिदा॥

यथा वा—

**लक्ष्मीजयकेतनतामात्मीयोरस्स्थलस्य विशदयितुम्। बध्नासि वैजयन्तीं बहुवर्णां तत्र नूनमब्जाक्ष॥ ३८६॥**

हे अब्जाक्ष! आत्मीयोरस्स्थलस्य लक्ष्म्याः जयकेतनतां विजयध्वजयष्टितां केतनशब्दोऽत्र ध्वजयष्टिवाची। पक्षे विजयगृहत्वम्। 'केतनं तु ध्वजे कार्ये निमन्त्रणनिवासयोः' इत्यजयः। विशदयितुं नूनं तत्र विजयकेतनभूते आत्मीयोरस्स्थले बहुवर्णां विचित्रां, पक्षे—'पञ्चवर्णा तु या माला वैजयन्ती गदाभृतः' इत्युक्तवर्णां वैजयन्तीं पताकां वैजयन्तीशब्दोऽत्र ध्वजपटीवाचकः। बध्नासि। यद्यपि 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इति पताकादयश्चत्वारोऽपि शब्दा ध्वजपर्यायतया सुधादौ व्याख्याताः। तथाऽपि पताकावैजयन्तीशब्दयोर्ध्वजपटीवाचित्वं केतनध्वजशब्दयोस्तद्यष्टिवाचित्वं चावश्याभ्युपेयं, तथैव प्रसिद्धेः। अन्यथा 'पताकाध्वजमालिनम्', चञ्चत्प्रदष्टचटुलाहिपताकयाऽन्ये स्वावासभागमुरगाशनकेतुयष्ट्या, प्रभावनीकेतनवैजयन्तीः' इति श्रीरामायणमाघकाव्यादिषु भूयस्सु प्रदेशेषु पताकाध्वजादिशब्दानां सहप्रयोगो विरुध्येत। न हि घटकलशा-

दीनां पर्यायशब्दानां सहप्रयोगो दृष्ट इष्टश्च । किंच उदाहृते माघकाव्यपद्ये चटुलाहिपताकयेत्यत्राहेः ध्वजपटीत्वेन रूपणस्यैव उरगाशनकेतुयष्टयेत्येतदनुरूपता । अत एव 'व्याकृत्तशीर्षकरको विमलास्थिदन्तो रक्तहृदांशुकधरो रथकेतुदण्डः' इति चम्पुभारतपद्ये केतुयष्टेः यतिधार्यदण्डत्वेन रूपणं, 'असौ ते पूर्वेषां सुचरितपताका यदमरस्रवन्ती' इति मुरारिमिश्रपद्ये मन्दाकिन्यास्सुचरितपताकात्वेन रूपणं च योयुज्यते । 'ध्वजार्धसम्मितां चैव पताकां चैव चित्रयेत्' इति ध्वजारोहणप्रकरणगतपाञ्चसंहितावचनं चात्रैवानुकूलम् । अत्र विशदयितुमिति तुमुनोऽर्थः फलम् । एवं वक्ष्यमाणोदाहरणेऽपि । पूर्वोदाहरणेषु चतुर्थ्यर्थः फलम् । अत्र भगवता निजोरस्स्थलस्य लक्ष्मीजयकेतनताभिव्यञ्जनं तत्र वैजयन्तीबन्धनं प्रत्यफलं तत्फलत्वेन संभाव्यत इति फलोत्प्रेक्षा तादृशव्यञ्जनस्यासिद्धत्वादसिद्धविषया केतनवैजयन्तीशब्दप्रतिपाद्यगृहध्वजवनमालापताकारूपार्थद्वयश्लेषाभित्तिका - भेदाध्यवसायमूलातिशयोक्त्यनुप्राणितेति विशेषः ॥

यथा वा—

**अञ्जनभूधरविभुना व्यञ्जयितुं माधवत्वमिव नैजम् । हृद्याऽतिमृदुलताश्रीरामोदं प्रापितोपवनमालम् ॥ ३८७ ॥**

अञ्जनभूधरपतिना नैजं माधवत्वं मधुमासत्वं श्रीपतित्वं च । 'माधवोऽजे मधौ राधे' इति मेदिनी । व्यञ्जयितुमिव उपवनमालं वनराजीसमीपे वैजयन्तीसमीपे च । हृद्या हृदयस्य प्रिया वक्षसि स्थिता च । अतिमृद्व्यश्च ताः लताश्च तासां श्रीस्समृद्धिः, पक्षे अतिशयिता मृदुलता सुकुमारता यस्यास्सा

श्रीः लक्ष्मीः आमोदं सौरभं हर्षं च प्रापिता । अत्र भगवता स्वत एवातिमृदुलताश्रीरामोदं प्राप्यते न तु स्वं माधवत्वमभिव्यञ्जयितुमित्यफलस्य तद्व्यञ्जनस्य फलत्वेन संभावनाफलोत्प्रेक्षा तादृशाव्यञ्जनस्यासिद्धत्वादसिद्धविषया । इयं सभङ्गश्लेषेणोत्तम्भिता । पूर्वा त्वभङ्गश्लेषेणेति भिदा ॥

यथावा—

सरसहिततामवाप्तुं विहाय तामरसतां स्वतस्सिद्धाम् । उरगवरगिरिपते भवदुरसि सरसिजानि माल्यतां प्रापुः ॥ ३८८ ॥

सरसेभ्यो रसिकेभ्यः हिततां सरसतां हिततां वा अवाप्तुं तां तथाविधां अरसतां अरसिकत्वं, पक्षे तामरसतामिति समस्तं पदम् । तामरसत्वमित्यर्थः । अत्र सरसहितताप्तेश्शङ्क्यमानायास्सरसिजकर्तृकमाल्यताप्ति प्रत्यफलस्यापि फलतया संभावना असिद्धविषया फलोत्प्रेक्षा इयमपि पूर्ववत्सभङ्गश्लेषदत्तहस्तैवेति ध्येयम् ॥

यथावा—

न्यसितुं पदमहिशिखरिण्यकृतकनगरात्त्वरान्वितोऽवतरन् । क्षुभितं वलग्नमच्युत संवाहयितुं किलात्र करमदधाः ॥ ३८९ ॥

अत्र परमव्योमावधिकसत्वरावतरणप्रयोज्यक्षोभाश्रयस्वावलग्नकर्मकसंवाहनस्य भगवत्कर्तृकस्य तत्कर्तृकस्वाभाविकनिजावलग्नाधिकरणकसव्यपाणिन्यसनं प्रत्यफलस्यापि फलत्वेन संभा-

वना फलोत्प्रेक्षा संवाहनस्य विषयस्यासिद्धत्वादसिद्धविषया। इयं शुद्धा पूर्वास्तु संकीर्णा इति वैलक्षण्यम् ॥

अत्रैवं बोधप्रकारः--वस्तूत्प्रेक्षोदाहरणे 'सुरगिरिशिशुरिव महाकिरीटः' इत्यत्र सुरगिरिशिशुत्वावच्छिन्नस्य इवार्थे संभावनायां प्रकारतयाऽन्वयः। संभावनायाश्च विषयतासंबन्धेन महाकिरीटेऽन्वयः। तथाच सुरगिरिशिशुप्रकारकसंभावनाविषयो महाकिरीट इति बोधः। महाकिरीटविषया सुरगिरिशिशुप्रकारिका च संभावना तादात्म्यसंसर्गेणैव, तथाऽनुभवात्, चमत्कृतिप्रयोजकस्य संसर्गान्तरस्याभावाच्च। न त्वेवं सुरगिरिशिशुत्वप्रकारिका, तस्य सुरगिरिशिशूपसर्जनत्वात्। एवं ध्रुवं नूनमित्यादिशब्दसमभिव्याहारेऽपि बोध्यम्। 'मुखं चन्द्रं मन्ये' इत्यादौ तु चन्द्राभिन्नमुखविषया संभावनेति बोधः, नामार्थयोरभेदान्वयव्युत्पत्तेः। एवं 'मुखं चन्द्रं संभावये तर्कये' इत्यादावपीति ध्येयम्। अभिषिञ्चतीवेत्यनुक्तविषयोत्प्रेक्षोदाहरणे तु अभिषिञ्चतिना साध्यवसानलक्षणया अभिषेचनानन्दोभयसाधारणेनाप्यायकत्वादिना रूपेणोपस्थापिते आनन्दने अभिषेचनसंभावनान्वयादाप्यायकं भगवत्कर्तृकस्वकर्मकाभिषेचनप्रकारकसंभावनाविषय इति बोधः। एवमनक्तीवेत्यादावपि ज्ञेयम्। "लिम्पतीव तमोङ्गानि' इत्यत्र व्यञ्जनयोपस्थापिते व्यापने तादृशसंभावनान्वयः" इति काव्यप्रदीपकारः ॥

हेतूत्प्रेक्षोदाहरणे 'अञ्जनशिखरिणि सततासञ्जनतो नूनमसित एव हरिः' इत्यत्र पञ्चमीस्थानिकतसेर्हेतुरर्थः। तत्र चाभेदेन प्रकृत्यर्थान्वयः हेतोश्च स्वप्रयोज्यतासंबन्धेनासितत्वविशिष्टेऽन्वयः। विशेषणस्य प्रयोज्यत्वे विशिष्टस्यापि तत्प्रयोज्यत्वाव्याहतेः। यद्वा स्वप्रयोज्याश्रयत्वसंबन्धेनान्वयः। तस्य प्र-

कारतासंबन्धेन संभावनायां तस्याश्च विषयतया हरावन्वयः। तथाचाञ्जनगिर्यधिकरणकसततासञ्जनाभिन्नहेतुकासितप्रकारकसंभावनाविषयो हरिरिति बोधः। न च तादात्म्यसंबन्धेन हेतुविधेयकत्वाभावान्नेयं हेतूत्प्रेक्षा स्यात्। किंतु तादात्म्येन तथाविधासितस्वरूपोत्प्रेक्षैवेति वाच्यम्। विवक्षितविवेचनयाऽञ्जनगिरिसततासञ्जने हेत्वभेदस्योत्प्रेक्षणीयतया सततासञ्जनं प्रति विशेष्यभूतस्यापि हेतोर्विधेयत्वाभ्युपगमात्। मुखचन्द्र इति रूपक इवानुयोगित्वमुखस्याभेदस्य सततासञ्जनसंसर्गत्वाभ्युपगमेन च सततासञ्जने हेत्वभेदभानसंभवात्। हेतुविशिष्टस्वरूपोत्प्रेक्षाया मुखतः प्रतीयमानत्वेऽपि विवक्षावशेन हेतूत्प्रेक्षात्वेनैव व्यपदेशः। यथा 'दध्ना जुहोति' इत्यत्र मुखतो दधिविशिष्टहोमप्रतीतावपि विवक्षितविवेचनया होमे दधिविधित्वव्यपदेश इति ज्ञेयम्। न च स्वप्रयोज्यत्वसंबन्धेन स्वप्रयोज्याश्रयत्वसंबन्धेन वा हेतुरूपधर्मोत्प्रेक्षैव असितपदार्थे स्वीक्रियतां किमेतादृशकल्पनायासेनेति वाच्यं, धर्मोत्प्रेक्षाभ्युपगमे दूषणस्य पूर्वमेवोदीरितत्वात्। अत एव 'हर्षाल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः' इति हेतूत्प्रेक्षामुदाहृतवतः काव्यप्रकाशकृतोऽपि तत्र हर्षहेतुकलगनतादात्म्यसंभावनमेव स्वाभाविके लगनेऽभिमतम्। अस्मदुक्तरीत्या तु लक्ष्मीरूपे विषये यथोक्तहर्षहेतुकलग्नतादात्म्यसंभावनमुचितं लगनस्य धर्म्युपसर्जनत्वेन संभावनायामन्वयायोगादिति दिक्। एवमुदाहृतासिद्धविषयहेतूत्प्रेक्षायामपि द्रष्टव्यं, विषयस्य सिद्धत्वासिद्धत्वाभ्यां बोधे विशेषाभावादित्यलम्॥

विनतानां जनतानामिति फलोत्प्रेक्षोदाहरणे तमसामवसादनायेति चतुर्थ्यर्थः फलम्। तत्र चाभेदेन प्रकृत्यर्थान्वयो

हेतूत्प्रेक्षावदेव । फलस्य च प्रयोजकतासंसर्गेण कौस्तुभधारणे स्वप्रयोजकाश्रयतासंबन्धेन तदाश्रये वाऽन्वयः । तत्तादात्म्यसंसर्गकसंभावनायाश्शौरी विषयतया । एवंच तमोऽवसादनाभिन्नफलककौस्तुभवहनाश्रयसंभावनाविषयश्शौरिरिति बोधः । एवं तुमुन्नन्तस्थले फलं तुमुनोऽर्थः बोधस्तु तुल्य एव । फलोत्प्रेक्षात्वं चोक्तरीत्योपपादनीयमिति दिक् । एवं कुवलयानन्दानुसारेण उत्प्रेक्षायाष्षड्विधत्वं दर्शितम् ॥

प्राचां मते तु—उत्प्रेक्षा तावद्द्विविधा, वाच्या प्रतीयमाना च । इव नूनं शङ्के संभावयामि मन्ये जाने तर्कये ऊहे उत्प्रेक्षे अवैमि प्रत्येमि वेद्मि ध्रुवं प्रायः किलेत्यादिभिः प्रतिपादकैश्शब्दैस्सहिता यत्र संभावनासामग्री तत्रोत्प्रेक्षा वाच्या । यत्र च प्रतिपादकशब्दरहितं सामग्रीमात्रं तत्र प्रतीयमाना । यत्र तत्सामग्रीविधुरं प्रतिपादकशब्दमात्रं तत्र संभावनामात्रमेव नोत्प्रेक्षा । सापि प्रत्येकं त्रिधा—स्वरूपोत्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षा चेति। तत्र जातिगुणक्रियाद्रव्यरूपाणां तदभावरूपाणां च पदार्थानां तादात्म्येनेतरेण वा संबन्धेन जातिगुणक्रियाद्रव्यात्मकैर्धर्मैस्तैस्समुचितैः उपात्तैरनुपात्तैः निष्पन्नैः निष्पाद्यैर्वा निमित्तभूतैर्यथासंभवं जातिगुणक्रियाद्रव्यात्मकेषु विषयेषूत्प्रेक्षणं स्वरूपोत्प्रेक्षा । तत्राभेदेन संसर्गेण धर्मिस्वरूपोत्प्रेक्षा, संसर्गान्तरेण धर्मस्वरूपोत्प्रेक्षा चोच्यते । उक्तविधेषु पदार्थेषु प्रागुक्तप्रकाराणां पदार्थानां तथाविधैरेव निमित्तैर्यथासंभवं हेतुत्वेन फलत्वेन च संभावनं हेतूत्प्रेक्षा फलोत्प्रेक्षा चोच्यते । एताश्च कश्चिन्निष्पन्नशरीराः कश्चिन्निष्पादनीयशरीराश्चेत्येवमाद्यनल्पविकल्पास्संपद्यन्ते । तत्र दिङ्मात्रं प्रपञ्च्यते ॥ तत्र उपात्तजातिनिमित्तकजातिभावस्वरूपोत्प्रेक्षा यथा—

वृषशैलेशकटाक्षश्रियोऽनवरतं निवाससरसि- रुहम्। अम्ब मुखं तव मन्ये भ्रमरकनिकरेण भृशमुपरि चलता ॥ ३१० ॥

कटाक्षस्य श्रीश्शोभैव श्रीः लक्ष्मीः तस्याः। भ्रमरकाः द्वि- रेफाः ललाटगतचूर्णकुन्तलाश्च, तेषां निकरेण। अत्र मुखत्वजात्य- वच्छिन्ने सरसिरुहत्वजात्यवच्छिन्नं तादात्म्येन संभाव्यते। तत्र श्लेषखंपादिताभेदोपरिचलद्भ्रमरकनिकररूपजातिर्निमित्तमुपात्तम्॥

उपात्तगुणनिमित्तजातिभावस्वरूपोत्प्रेक्षा यथा—

निश्वसनप्रोत्क्षिप्तानधरोष्ठनिरोधपङ्क्तिभावगता- न्। गळशङ्खजान्विजाने विशदान्मौक्तिकमणींस्त- वाम्ब रदान्॥ ३११ ॥

निश्वसनेन निश्वासमारुतेन प्रोत्क्षिप्तान् ऊर्ध्वं प्रणुन्नान् अध- रोष्ठयोः निरोधेन पङ्क्तिभावं श्रेणीभूयावस्थानं गतान् प्राप्तान् 'द्वितीया श्रित' इत्यादिना समासः। यथा मारुतोत्कृतानि धान्यानि यत्किञ्चिद्व्यवधायकवस्तुप्रतिघातेन श्रेणीभूयावतिष्ठन्ते तथेति भावः। अत्र दन्तत्वजात्यवच्छिन्नेषु मौक्तिकत्वजात्यव- च्छिन्नास्तादात्म्येनोत्प्रेक्ष्यन्ते,तत्र विशदत्वगुणो निमित्तमुपात्तम्॥

यथावा—

लावण्यजलनिधौ तव वदनेऽहिगिरीश भाति गङ्गेव। मृगनाभितिलकयमुनामिळिता मौक्तिक- ललाटिका धवला॥ ३१२ ॥

ललाटे भवा ललाटिका 'कर्णललाटात्कनलङ्कारे' इति कन्। ललाटे लम्बतया निबद्धः पत्रपाश्याख्याभरणविशेषः 'पत्रपाश्या ललाटिका' इत्यमरः। अत्र मौक्तिकललाटिकात्वजात्यवच्छिन्ने गङ्गात्वजात्यवच्छिन्नं तादात्म्येनोत्प्रेक्ष्यते। तत्र धवलेति गुणो निमित्तमुपात्तम्॥

यथावा—

तपनात्मभवाऽभूवं तुहिनांशोरपि सुता भवेयमिति। असिता वदनेन्दौ तव जनिता यमुनेव तिलकरेखैषा॥ ३१३॥

अत्र यमुनेवेति जात्युत्प्रेक्षायां असितेति गुणो निमित्तमुपात्तम्। गङ्गायमुनयोर्द्रव्यत्वेन विवक्षायां द्रव्योत्प्रेक्षाया एवेदमुदाहरणद्वयं भविष्यतीति ध्येयम्॥

उपात्तक्रियानिमित्तजातिभावस्वरूपोत्प्रेक्षा यथा—

वृषगिरिपतिहृदि सौधे नायकमणिना दृढोपगूढायाः। मुक्ताहारलतायाः पुलका इव भान्त्युदित्वराः किरणाः॥ ३१४॥

अत्र किरणरूपजातौ पुलकत्वरूपजात्यवच्छिन्नानां तादात्म्येन संभावनम्। तत्रोपगूहनक्रियाया निमित्तता॥

उपात्तद्रव्यनिमित्तकजातिभावस्वरूपोत्प्रेक्षा यथा—

फणिशिखरिशिखरभास्वन्विकस्वराम्भोरुहं भवद्वदनम्। संभावयामहे ननु लक्ष्म्याऽनारतमिहैव विहरन्त्या॥ ३१५॥

इहैव वदन एव विहरन्त्या लक्ष्म्या सुषमया श्रिया च भवद्वदनं विकस्वराम्भोरुहं संभावयामहे निरन्तरलक्ष्मीविहाराश्रयत्वात्प्रफुल्लकमलत्वेनोत्प्रेक्षामहे इत्यर्थः । अत्र मुखत्वजात्यवच्छिन्ने अम्भोरुहत्वजात्यवच्छिन्नतादात्म्योत्प्रेक्षणम् । तत्र श्लेषसंपादितसुषमाभेदरमारूपद्रव्यं निमित्तमुपात्तम् । अत्र लक्ष्मीशब्दस्यैकव्यक्तिवाचित्वात् द्रव्यत्वम् । एतेनोत्प्रेक्षायां जातिद्रव्ययोर्निमित्तत्वमपरिगणयन्त उपेक्षणीयाः । उक्तं च चित्रमीमांसायाम्—

> उत्प्रेक्षायां निमित्तत्वं यज्जातिद्रव्ययोरपि ।
> तेनापि विकलां विद्मो निमित्तगणनामिमाम् ॥

इति । इमां निमित्तगणनां प्राचीनोक्तामित्यर्थः । उदाहृतं च तत्र जातिद्रव्यनिमित्तकोत्प्रेक्षाद्वयम् ॥

अनुपात्तनिमित्तजातिभावस्वरूपोत्प्रेक्षा यथा—

**भ्रूयुगळधनुर्लस्तकसंहितनासाकरीरसंलग्नम् ।**
**मधुरिपुमृगमदतिलकं ननु भुवनजिगीषुमदनशरफलकम् ॥ ३१६ ॥**

अत्र मृगमदतिलकत्वजात्यवच्छिन्ने मदनशरफलकत्वजात्यवच्छिन्नतादात्म्यसंभावनायां असितत्वसूक्ष्माग्रत्वादिनिमित्तमनुपात्तम् । वस्तुतस्तु प्रथमार्धप्रतिपादितो धर्मः वक्ष्यमाणरीत्या रूपकेण विषयविषयिसाधारणीकृत इत्युपात्त एव । असितत्वादिरेवानुपात्तः तस्मादिदं पद्यमुपात्तानुपात्तनिमित्तकजातिभावस्वरूपोत्प्रेक्षाया एव वक्ष्यमाणरीत्या उदाहरणं भवितुमर्हति । न तु केवलानुपात्तनिमित्तायाः ॥

शुद्धानुपात्तनिमित्ता यथा—

हरफालनयनवितनुं स्मरममुनैवोपजीवयितु-
मनसा । हरिणा स्वफालकलितं नयनमिवोर्ध्वाञ्च
लं जयति तिलकम् ॥ ३१७ ॥

हरस्य फालनयनेन वितनुं विगतशरीरं स्मरं अमुनैव फालनयनेनैव उपजीवयितुमनसा हरिणा श्रीनिवासेन स्वस्य फाले ललाटे कलितं सृष्टं 'कवीनां कलिः कामधेनुः' इत्याहुः। ऊर्ध्वं अञ्चलं अग्रं यस्य तत्तथोक्तं नयनमिव तिलकं कस्तूरीचित्रकं जयति लोके नयनयोर्वर्तुलमूलत्वकुञ्चितसूक्ष्माग्रत्वदर्शनेन तिलकस्य तत्संभावनालाभाय ऊर्ध्वाञ्चलं नयनमित्यभिहितम् । न हि नयनस्योर्ध्वाञ्चलत्वमन्तरेण वर्तुलमूलाकुञ्चितसूक्ष्माग्रकस्तूरीतिलकतादात्म्यसंभावनं संभवति । अत्र हरहरिशब्दाभ्यां हरणरूपप्रवृत्तिनिमित्तकाभ्यामुभयोस्तौल्यनिमित्तकस्पर्धा द्योत्यते । सा चोपपादिताया उत्प्रेक्षाया उपस्कुरुत इत्यवधेयम् । अत्र नयनत्वजात्यवच्छिन्नतादात्म्यसंभावनायां नैल्यादिनिमित्तमनुपात्तम् ॥

यथावा—

शिखरगशिखिपिञ्छाञ्चलचन्द्रकमाला रमानि-
वासगिरेः । फणिभूभृत्त्वं प्रथयितुमुन्मिषिता ल-
सति नयनमालेव ॥ ३१८ ॥

फणिभूभृत्त्वं भुजगराजत्वं शेषाद्रित्वं च । अत्र चन्द्रकमालायां जातौ नयनमालाजात्यवच्छिन्नं संभाव्यते । श्यामारुणत्वादिनिमित्तमनुपात्तम् ॥

एवं शुद्धा उपात्तनिमित्तका अनुपात्तनिमित्तका अपि जातिभावस्वरूपोत्प्रेक्षाः प्रदर्शिताः ॥

अथ मिश्रास्ता उदाह्रियन्ते—

**हृदयास्पदया रमया प्रसारिता नाभिकमलगं स्वसुतम्। उद्वोढुं भुजयुगळी किल शौरेर्भाति यष्टिरालम्बा ॥ ३११ ॥**

यष्टिर्नाम—

एकावळी नाम यथेष्टसंख्या हस्तप्रमाणा मणिभिः प्रयुक्ता।
संयोजिता या मणिना तु मध्ये यष्टीति सा भूषणविद्भिरुक्ता॥

इति वराहमिहिरोक्तलक्षण एकावल्यपरनामधेयो मुक्ताहारविशेषः। आलम्बत इत्यालम्बा लम्बमानेत्यर्थः। अत्र भगवतो हारयष्ट्यां जातौ तद्वक्षस्स्थलावस्थितलक्ष्मीसंबन्धिभुजत्वजात्यवच्छिन्नस्तादात्म्येनोत्प्रेक्ष्यते। तत्र च हारयष्टिगतानां लावण्यप्रसारितत्वलम्बत्वानां धर्माणां निमित्ततानिष्पत्तये विषयिलक्ष्मीभुजयुगळीगतत्वमवश्यं संपादनीयम्। तेषां च मध्ये अनुपात्तस्य लावण्यस्य लक्ष्मीदिव्यविग्रहसंबन्धित्वादेव भुजयुगळीगतत्वं संपन्नम्। इतरयोरपि संपादनाय भगवन्नाभीकमलगतस्वसुतचतुराननसमुद्वहनं फलमुत्प्रेक्षितम्। तत्साधनताज्ञानस्य प्रसारितत्वलम्बत्वानुकूलयत्नजनकत्वात्। एवं च विषयगततादृशोद्वहनफलकप्रसारितत्वलम्बत्वाभ्यां विषयगतयोस्स्वाभाविकप्रसारितत्वलम्बत्वयोरभेदाध्यवसानातिशयोक्त्या साधारण्यसंपत्तौ सत्यां निमित्तता भवति। न चात्र फलस्याप्युत्प्रेक्षणात्फलोत्प्रेक्षेति युक्तं वक्तुम्। उत्प्रेक्ष्यमाणफलनिष्पादितनि-

मित्तोत्तम्भितायां स्वरूपोत्प्रेक्षायामेव विधेयत्वेन चमत्कृतेर्विश्रमात् उत्प्रेक्षाप्रतिपादकस्य किलशब्दस्य फलेनानन्वयाच्च तयैवात्र व्यपदेशो युक्तः। अनिगीर्णविषया चेयमुपात्तानुपात्तक्रियागुणात्मकनिमित्ता निष्पाद्यविशिष्टशरीरा तादात्म्योत्प्रेक्षा। लक्ष्मीभुजयुगळ्यास्स्वतस्सिद्धत्वेऽपि प्रसारितत्वविशिष्टायास्तस्याः कविनैव निष्पादितत्वात्॥

यथा वा—

**सोदरकमलालालनमोदगळत्कौस्तुभाश्रुभरबिन्दून्। धाराकारान् शौरेर्हारानाभिलम्बिनो मन्ये॥ १००॥**

अत्र शौरिहारे जातौ तद्वक्षस्स्थलावस्थितकौस्तुभानन्दबाष्पबिन्दुत्वजात्यवच्छिन्नस्य तादात्म्येनोत्प्रेक्षणम्। तत्र च धाराकारत्वानाभिलम्बित्वथाळथळ्यानां धर्माणां निमित्तत्वनिष्पत्त्यै विषयिकौस्तुभानन्दबाष्पबिन्दुगतत्वसंपादनमावश्यकम्। तेषां च मध्ये अनुपात्तस्य थाळथळ्यस्यानन्दबाष्पसंबन्धितयैव तद्बिन्दुगतत्वं संपन्नम्। अन्ययोर्धाराकारत्वलम्बित्वयोरपि संपादनाय सोदरकमलालालनमोदगळत्त्वं हेतुत्वेन संभावितम्। एवं च विषयिगततादृशगळनहेतुकधाराकारत्वलम्बत्वाभ्यां विषयगतयोस्स्वाभाविकधाराकारत्वलम्बत्वयोरभेदाध्यवसानमूलातिशयोक्त्या सत्यां साधारण्यसंपत्त्यां स्यान्निमित्तता। उक्तविषया चेयमुपात्तानुपात्तक्रियागुणनिमित्ता निष्पाद्यविशिष्टशरीरा जात्युत्प्रेक्षा, कौस्तुभाश्रुबिन्दूनां कविनैव निष्पादितत्वात्॥

यथा वा—

**नाथ तव नाभिसरसीमग्ननिजस्वसृरमाहृदुद्ध-**

तये। हृदयगकौस्तुभलम्बीकृता भुजयुगीव भाति हारलता ॥ ४०१ ॥

अत्रापि हारलतायां जातौ भुजयुगीत्वजात्यवच्छिन्नं तादात्म्येन संभाव्यते। तत्र च लम्बत्वप्रकाशवत्त्वयोर्धर्मयोर्निमित्ततानिर्वृत्तये विषयिभूतकौस्तुभभुजयुगीगतत्वमवश्यसंपाद्यम्। तयोर्मध्ये अनुपात्तस्य प्रकाशवत्त्वस्य कौस्तुभानुबन्धित्वेनैव भुजयुगीगतत्वं संपन्नम्। लम्बत्वस्यापि तद्गतत्वसंपादनाय भगवन्नाभीसरसीनिमग्ननिजस्वसृरमापानसोद्धरणं फलत्वेनोत्प्रेक्षितम्। एवंच विषयिगततादृशोद्धरणफलकलम्बत्वेन विषयगतस्य स्वाभाविकलम्बत्वस्याभेदाध्यवसायमूलकातिशयोक्त्या साधारण्ये संपन्ने निमित्तत्वं निष्पद्यते। अन्यत्सर्वं पूर्वतरोदाहरणवदेव। इयमप्युपात्तानुपात्तक्रियागुणात्मकनिमित्ता निष्पाद्यविशिष्टशरीरा जात्युत्प्रेक्षैव, कौस्तुभभुजयुगस्य कविनैव निष्पादितत्वादिति॥

यथा वा—

निरवधिपरिमळलोभान्नासाचम्पकनिभालनभयाच्च। मृगमदतिलको माधववदनाब्जे निश्चलः किल भ्रमरः ॥ ४०२ ॥

निभालनं दर्शनम्। अत्रापि नैश्चल्यविशिष्टे श्रीनिवासकस्तूरीतिलके जातौ विषये नैश्चल्यविशिष्टभ्रमरजात्यवच्छिन्नस्य तादात्म्येनोत्प्रेक्षणम्। तत्र तिलकगतस्य नैश्चल्यस्य भ्रमरगतत्वमन्तरेण तिलकभ्रमरयोरभेदस्य दुरुपपादतया तत्सिद्ध्यर्थं तस्य विषयगतत्वं साध्यम्। तत्र नैल्यस्यानुपात्तस्य उत्प्रेक्ष्य-

माणे विषयिणि सिद्धत्वान्निश्चलत्वस्य निष्पादनाय निरवधि-परिमळलोभः नासाचम्पकनिभालनभयं चेत्येतदुभयं हेतुत्वेनो-त्प्रेक्षितम् । इहापि पूर्ववत्स्वाभाविककल्पितयोरभेदाध्यवसाना-त्साधारण्यम् । पूर्वं हि यथा फलस्योत्प्रेक्षणेऽपि न फलोत्प्रे-क्षा तथेहापि हेतोरुत्प्रेक्षणे न हेतूत्प्रेक्षेति ध्येयम् ॥

यथा वा—

**चिबुके विसृत्वरास्तव हारलताघृणिशिखा जननि भान्ति । ह्रीनमितमुखोन्नमनप्रसारिता इव तदीयकरशाखाः ॥ १०३ ॥**

अत्र हारलताकिरणशिखारूपजातौ अङ्गुलिरूपजात्यवच्छि-न्नतादात्म्यसंभावना । तत्र च अनुपात्तस्यौज्ज्वल्यस्य धर्मस्य उपात्तयोः विसृत्वरत्वप्रसारितत्वयोर्धर्मयोर्वस्तुप्रतिवस्तुभावापन्न-योरभेदाच्च विषयविषयिसाधारण्यम् । अन्यत्सर्वं पूर्ववदेव । एवमन्यत्राप्यूह्यम् ॥

एवं जातिभावस्वरूपोत्प्रेक्षा दिगुदाहृता ॥

तादात्म्येन गुणभावस्वरूपोत्प्रेक्षा यथा—

**नीलगुणेनाक्रान्ते सुवर्णवर्णस्य तव वपुषि शौरे । बहिरुद्गतं विजाने पीतं गुणमुज्ज्वलं कनक-वसनम् ॥ १०४ ॥**

हे शौरे! तव कनकवसनं सुवर्णवर्णस्य 'आप्रणखात्सर्व एव सुवर्णः । रुक्माभं स्वप्नधीगम्यम्' इत्यादिश्रुतिस्मृतिभि-स्सुवर्णवर्णत्वेनोक्तस्य तव वपुषि नीलगुणेन आक्रान्ते सति

बहिरुद्गतं तत्रानवकाशाद्बहिरुत्सृत्वरमित्यर्थः। पीतं गुणं विजाने उत्प्रेक्षे। अत्र कनकवसने जातौ पीतगुणस्तादात्म्येनोत्प्रेक्ष्यते। तत्र उज्ज्वलत्वं गुण उपात्त इत्युपात्तगुणनिमित्तकगुणभावस्वरूपोत्प्रेक्षेयम्॥

यथा वा—

**मधुरतमां सर्वेषां महागसां मज्जनाय सुनिषेव्याम्। जाने तव करुणां श्रीजाने स्वामिंस्त्वदीयपुष्करिणीम्॥ १०५॥**

मधुरतमां अतिप्रियां अतिस्वाद्वीं च 'स्वादुप्रियौ तु मधुरौ' इत्यमरः। महत् आगः पापं येषां ते तथोक्तानां 'पापापराधयोरागः' इत्यमरः। सर्वेषां सर्वैर्जनैरित्यर्थः। 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी। मज्जनाय स्नानार्थं सुनिषेव्याम्। अन्यत्र महतां आगसां अपराधानां मज्जनाय अदर्शनायेति यावत्। सर्वेषां अखिलैरपराधिजनैरित्यर्थः। सुनिषेव्यां सुखेन सेवनीयाम्। अत्र स्वामिपुष्करिणीरूपद्रव्ये करुणारूपगुणतादात्म्यसंभावनायां श्लेषोत्तम्भितो माधुर्यगुणः सेव्यत्वरूपक्रिया च निमित्ते उपात्ते इति विशेषः॥

एवं जात्यादिनिमित्तकगुणभावस्वरूपोत्प्रेक्षा अप्युदाहार्याः.

अनुपात्तनिमित्तकगुणभावस्वरूपोत्प्रेक्षा यथा—

**ऊर्ध्वप्रसरनिरोधकसरोजबान्धवविलोकनक्रोधात्। आरुण्यमिवोद्भिन्नं फणिशिखरिशिखासु मणिकुलं कनति॥ १०६॥**

मणयोऽत्र पद्मरागा विवक्षिताः । अत्र पद्मरागकुले जातौ आरुण्यगुणस्तादात्म्येन संभावितः । औज्ज्वल्यादिकं निमित्तमनुपात्तम् ॥

यथा वा—

रसनारुण्याक्रमणाद्दशनाळ्यां स्थातुमन्तरमलब्ध्वा । तत उद्गतं प्रतीमस्सितगुणमखिलाम्ब तव मितं हसितम् ॥ १०७ ॥

अत्र स्मिते जातौ सितगुणस्य तादात्म्येन संभावनं, तत्र निमित्तं किमप्यनुपात्तम् ॥

यथा वा—

अन्तरमानादुच्चैरुद्वान्तं हस्तयोरिवारुण्यम् । तत्रोल्लसदब्जयुगं चित्ते करवाणि भुवनजननि तव ॥ १०८ ॥

अत्र पद्मे जातौ आरुण्यगुणोत्प्रेक्षा अनुपात्तनिमित्ता ॥

यथा वा—

मन्ये कौस्तुभरत्नं प्रतियत्नं श्रीशवक्षसोऽनूत्नम्। श्रीतनुसर्जनशेषं धात्रा लावण्यराशिमुपनिहितम्॥

अत्र कौस्तुभरत्नस्य लावण्यराशिरूपगुणभावस्वरूपोत्प्रेक्षायां दर्शनीयत्वादिर्गुणोऽनुपात्तः ॥

एवम्—

मूर्तिमदिव सौशील्यं स्फूर्तिमदिव भावयामि

वात्सल्यम् । धाम किमप्यतिनैल्यं श्रीमत्फणिशि-
खरिशिखरगमतुल्यम् ॥ ४१० ॥

इत्यादावपि गुणभावस्वरूपोत्प्रेक्षा अनुपात्तनिमित्ता बो-
ध्या । महतो मन्दैस्सह नीरन्ध्रसंश्लेषणस्वभावत्वं सौशील्यत्वम् ।
दोषतिरस्कारिप्रीतित्वं वात्सल्यत्वम् । अतिनैल्यमिति बहुव्रीहिः ॥

एवं गुणभावस्वरूपोत्प्रेक्षा दिक्प्रदर्शिता । अथ क्रिया-
भावस्वरूपोत्प्रेक्षा ॥

तत्र उपात्तजातिनिमित्तकक्रियाभावस्वरूपोत्प्रेक्षा यथा—

शृङ्गाग्रपातिनिजझरशीकरनिकरैर्मरुत्प्रसरनु-
न्नैः । अर्पयति वियद्गङ्गा पुष्पाञ्जलिमिव फणीश-
गिरिपतये ॥४११॥

अत्र पुष्पाञ्जलिसमर्पणरूपक्रियाभावस्वरूपोत्प्रेक्षायां मरु-
त्प्रसरनुन्नशीकरनिकररूपजातिर्निमित्तमुपात्तम् । पुष्पाञ्जलिमर्प-
यतीत्यत्राञ्जलावर्पणस्य बाधात्तद्विशेषणेषु पुष्पेष्वन्वयः । स्वर्गो
ध्वस्त इत्यादिवत् । अञ्जलिस्थपुष्पाणि विकिरतीत्यर्थः । 'स-
विशेषणे हि विधिनिषेधौ विशेष्ये बाधे विशेषणमुपसंक्रामतः'
इति हि न्यायविदः । अत एव 'सीतां भर्त्सयन्तीस्ता राक्षसी-
रभ्रुणोत्कपिः' इत्यादिप्रयोगास्संगच्छन्ते । वक्तव्यान्तरं तु ल-
क्ष्मीसहस्रप्रादुर्भावस्तवकरत्नप्रकाशिकायां निरूपितमस्माभिः ॥

उपात्तगुणनिमित्तकक्रियाभावस्वरूपोत्प्रेक्षा यथा—

पटुतरशशधरविशदस्फटिकशिलाप्रचुरशिख-

रधवलिम्ना । स्फुटमपहसति महीध्रान् स्फटाध-
रगिरिर्हरिं वहन्नन्यान् ॥ ४१२ ॥

अत्रापहसनक्रियाभावस्वरूपोत्प्रेक्षायां स्फटिकशिलाशिखर-
धावल्यरूपगुणो निमित्तमुपात्तम् ॥

उपात्तक्रियानिमित्तकभावस्वरूपोत्प्रेक्षा यथा—

तुङ्गेभ्यश्शृङ्गेभ्यस्समुद्गिरन्निर्झरानुदारतरान् ।
स्वस्मिन्मुकुन्दवासानन्दाद्बाष्पायते किल वृषाद्रिः॥

बाष्पमुद्वमति बाष्पायते 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ् ।
अत्र बाष्पोद्वमनरूपक्रियाभावस्वरूपोत्प्रेक्षायां निर्झरोद्गिरणक्रिया-
न्निमित्तमुपात्तम् ॥

एवमुपात्तद्रव्यनिमित्ताऽप्युदाहार्या ।

यथा वा—

करपत्त्रेण द्वेषान्मध्ये भित्वा प्रकोष्ठके प्रोतम् ।
क्रन्दति सितकरबिम्बं शिञ्जन्मणिवलयमम्ब तव
मन्ये ॥ ४१४ ॥

अत्र प्रथमान्तविशेष्यकशाब्दबोधवादिनामभेदसंसर्गेण शि-
ञ्जद्विशिष्टे मौक्तिकवलये करपत्त्रकर्तृकद्वेषहेतुकमध्यच्छिद्रीकरण-
पूर्वकप्रकोष्ठाधिकरणकप्रवयनकर्माभिन्नोत्प्रेक्षितसितकरबिम्बतादा-
त्म्योत्प्रेक्षणपूर्वकं क्रन्दनकर्तृत्वं धर्म उत्प्रेक्ष्यते । तत्र तादा-
त्म्योत्प्रेक्षणे धर्म्युत्प्रेक्षायां साधारणो धर्मः, संबन्धान्तरेणो-
त्प्रेक्षणे धर्मोत्प्रेक्षायां तत्समानाधिकरणो धर्मश्च विषयगतो नि-
मित्तमिति स्थिते प्रस्तुते क्रन्दनकर्तृत्वरूपधर्मोत्प्रेक्षायां तत्स-

मानाधिकरणप्रवयनकर्मत्वरूपधर्मस्य विषयगतत्वसिद्धये अनुवाद्यतया मौक्तिकवलयतादात्म्यमनुपात्तधावल्यनिमित्तकमुत्प्रेक्ष्यते । तत्र यथा विशिष्टोपमायामुपमानोपमेयविशेषणानामार्थमौपम्यं एवमत्रापि विषयभूतमौक्तिकवलयविशेषणस्य प्रवयनस्य मूलोत्प्रेक्षाविषयिभूतसितकरबिम्बविशेषणेन प्रवयनेनाभेद आर्थः । ततश्च सितकरबिम्बकर्मकप्रवयने सिद्धे मुख्योत्प्रेक्षा निर्व्यूढा भवति । क्रन्दनशिञ्जनयोरपि बिम्बप्रतिबिम्बभावेनाभेदः । तेन प्रकोष्ठकप्रोतशिञ्जदभिन्नो मौक्तिकवलयः प्रकोष्ठकप्रोतसितकरबिम्बाभिन्नः क्रन्दनक्रियानुकूलव्यापारवानिति बोधप्रकारः । आख्याते भावनाप्राधान्ये तु अभेदेन क्रोशनक्रियोत्प्रेक्षा । तत्र शाब्दवृत्तौ वलयविशेषणतया प्रतीयमानमपि शिञ्जनं संभावनाविषयतयाऽवतिष्ठते अध्यवसानवशात् । क्रन्दनक्रियायां च तादृशवलयो विशेषणम् । तादृशवलये चाभेदेन तादृशसितकरबिम्बम् । न तु सितकरबिम्बमेव साक्षात्क्रियायाम् । तथा सति वलयस्यानन्वयापत्तेः । विषयिविषयविशेषणयोः प्राग्वदेव बिम्बप्रतिबिम्बभावेनाभेदप्रतिपत्तिरिति ॥

एवं क्रियाभावस्वरूपोत्प्रेक्षामार्गः प्रदर्शितः ॥

अनुपात्तनिमित्तकक्रियाभावस्वरूपोत्प्रेक्षा यथा—

**तत्तादृशि फणिशिखरिणि कृतावसथस्य कस्यचिद्धाम्नः । स्मरणं तदीयमूर्तेश्चित्ते मम वज्रलेपमिव दत्ते ॥४१५॥**

अत्र वज्रलेपनदानक्रियोत्प्रेक्षायां अविश्लेषेण संनिधापनं निमित्तं नोपात्तम् ॥

अथ द्रव्यभावोत्प्रेक्षा—

तत्र उपात्तजातिनिमित्तकद्रव्यभावोत्प्रेक्षा यथा—

**भगवति मधुरिपुमहिळे भवतीमुखमस्य सं-मुखीनेन । द्रवता विधुकान्तेन स्वान्ते संतर्कयेत को नेन्दुम् ॥ ४१६ ॥**

अस्य मुखस्य सम्मुखीनेन अभिमुखावस्थायिना द्रवता दयार्द्रेण रागद्रुतहृदयेन वा पक्षे जलस्राविणा । विधुकान्तेन विधुर्भगवानेव कान्तः वल्लभः तेन । पक्षे—

अमृतांशुकरस्पर्शाद्यत्क्षरत्यमृतं क्षणात् ।
चन्द्रकान्तं तदाख्यातं दुर्लभं स्यात्कलौ युगे ॥

इति स्कान्दोक्तलक्षणश्चन्द्रकान्तमणिः तेन । अत्र मुखरूपजातौ इन्दुरूपद्रव्यतादात्म्योत्प्रेक्षणे श्लेषकल्पिताभेदश्चन्द्रकान्तमणिरूप-जातिर्निमित्तमुपात्तम् ॥

उपात्तगुणनिमित्तकद्रव्यभावोत्प्रेक्षा यथा—

**करचरणाद्यवयववत् स्फुरदाकाशं विनीलम-हिशैले । उदितं ब्रह्म विजाने यदिदमनन्तं वदन्ति निगमान्ताः ॥ ४१७ ॥**

अत्र श्रीनिवासे परब्रह्मणि द्रव्ये नीलत्वानन्तत्वगुणनिमि-त्तकमाकाशरूपद्रव्यतादात्म्योत्प्रेक्षणम् । आकाशस्य एकत्वादिदं द्रव्यम् । निगमान्ताः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्या उपनि-षदः । अनन्तं त्रिविधपरिच्छेदराहितं ब्रह्म । पक्षे अन्तरिक्षं

'अनन्तं गगने क्लीबे पुमान्केशवशेषयोः' इति रत्नमाला। अत्र नीलत्वादिर्गुण उपात्तः॥

उपात्तक्रियानिमित्तकद्रव्यभावोत्प्रेक्षा यथा—

**स्वात्युज्ज्वलत्वहेतोः प्रमोदवर्षं ददात्यलं यदयम्।**
**त्वन्नासामणिमेनं शुक्रं मन्ये ततोऽम्बुनिधिकन्ये॥**

यत् यस्मात् अयं त्वन्नासामणिः नासिकाभरणमौक्तिकं 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इत्यमरः। स्वात्यां स्वातीनक्षत्रे उज्ज्वलत्वं अनस्तगत्वेन प्रकाशमानत्वं तस्माद्धेतोः। पक्षे स्वस्य आत्मनः अत्युज्ज्वलत्वहेतोः औज्ज्वल्यसद्भावाद्धेतोः अलं पर्याप्तं प्रदत्तो मोदो येन तत् प्रमोदं 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति दत्तशब्दस्य लोपः। वर्षं वृष्टिं ददाति॥

वरुणस्य दिशि स्वात्यां चरन्कविरनस्तगः।
संपूर्णां तनुते वृष्टिं जगदानन्ददायिनीम्॥

इत्युक्तरिति भावः। पक्षे प्रमोदवर्षं अविच्छिन्नमानन्दमित्यर्थः। ददाति। ततः कारणात् त्वन्नासामणिं शुक्रं भार्गवं मन्ये। अत्र नासामणौ जातौ शुक्रो द्रव्यं तादात्म्येन संभाव्यते। तत्र च उपपादितश्लेषकल्पिताभेदस्वात्युज्ज्वलत्वहेतुकप्रमोदवर्षदानलक्षणक्रियारूपं निमित्तमुपात्तम्॥

उपात्तद्रव्यनिमित्तकद्रव्यभावस्वरूपोत्प्रेक्षा यथा—

**शार्ङ्गं यदेतदहिगिरिशृङ्गविहारिन्विभाति तव भूमन्। संभावयाम्यनन्तं तदेतदधिरूढया ज्यया शिरसि॥११९॥**

तदेतत् शार्ङ्गं शिरसि मूर्ध्नि अग्रे च 'शिरः प्रधाने सेनाग्रे द्रुमाद्यग्रेषु मूर्ध्नि च' इति रत्नमाला। अधिरूढया ज्यया भूम्या मौर्व्या च। 'ज्या मौर्वीभूमिमातृषु' इति रत्नमाला। अनन्तं शेषं संभावयामि उत्प्रेक्षे। अत्र शार्ङ्गे द्रव्ये शेषो द्रव्यं तादात्म्येन संभाव्यते। तत्र च ज्याशब्दप्रतिपाद्यमौर्वीभूमिरूपार्थद्वयाभेदाध्यवसायेन शिरोधिरूढभूमिरूपद्रव्यं निमित्तमुपात्तम्

अनुपात्तनिमित्तद्रव्यभावोत्प्रेक्षा यथा—

भित्वा द्वेषाद्भानोर्बिम्बं मध्ये ततो विनिर्गच्छन्
राहुरिव बाहुरच्युत तव मणिकेयूरवेष्टितो भाति॥

अत्र भगवतः केयूरवेष्टिते बाहौ मध्यभेदनपूर्वकभानुमण्डलविनिर्गतो राहुर्द्रव्यं तादात्म्येन संभाव्यते। तत्र न किंचिदपि निमित्तमुपात्तम्॥

एवं जात्यादिभावस्वरूपोत्प्रेक्षादिक्प्रदर्शिता। अथाभावाभिमानवत्यस्स्वरूपोत्प्रेक्षाः दिङ्मात्रमुदाह्रियन्ते॥

तत्र जात्यभावस्वरूपोत्प्रेक्षा यथा—

नीलैर्निजरुचिजालैर्दिनकरशून्यामिवाचरन्वन्याम्। फणिपतिशिखरिणि तस्यां रमयति रात्रिंदिवं रमां शौरिः॥ ४२१॥

तस्यां वन्यायामित्यर्थः। अत्रदिनकरशून्यामिति जात्यभाव उत्प्रेक्ष्यते। तत्र नीलरुचिरूपगुणो निमित्तम्॥

यथा वा—

कञ्चुकिगिरिमहिमभरैः कञ्चुकितं वसुमतीतलं

निखिलम् । दृश्येऽपि गिरिसहस्रे निश्शैलमिवातिवेलमाभाति ॥ ४२२ ॥

अत्र निश्शैलमिति जात्यभावोत्प्रेक्षायां शेषाद्रिमहिमव्याप्तत्वलक्षणक्रियारूपं निमित्तमुपात्तम् । एवं उपात्तजातिद्रव्यनिमित्तके जात्यभावस्वरूपोत्प्रेक्षे अप्युदाहार्ये ॥

यथा वा—

महिमा विजृम्भतेऽसावहिमूर्धन्याचलावतंसस्य । सकलमपि दैवतान्तरविकलं किल भुवनमाचरन्कोऽपि ॥ ४२३ ॥

अत्र दैवतान्तरविकलमिति जात्यभावोत्प्रेक्षायां निमित्तमनुपात्तम् ॥

गुणाभावस्वरूपोत्प्रेक्षा यथा—

विमलविशृङ्खलविसृमरकमलारुचिनिचयपरिचयपिशङ्गम् । फणिगिरिमस्तकरत्नं प्रत्यस्तमितात्मनीलिमेवासीत् ॥ ४२४ ॥

अत्र नीलगुणाभावोत्प्रेक्षायां कमलारुचिनिचयपरिचयपिशङ्गत्वगुणो निमित्तमुपात्तम् ॥

एवमुपात्तजातिक्रियाद्रव्यनिमित्तकाः अनुपात्तनिमित्तका च गुणाभावस्वरूपोत्प्रेक्षा उदाहार्याः ॥

क्रियाभावस्वरूपोत्प्रेक्षा यथा—

कन्दर्पकोटिकोटिप्रयुतायुत दिव्यरूपलावण्यम् । निर्वर्ण्य वृषाद्रीन्दुं निस्पन्द इवाभवन्निखिललोकः ॥

अत्र निस्पन्द इति क्रियाऽभावोत्प्रेक्षायां निर्वर्णनरूपक्रियात्मकं निमित्तमुपात्तम्। निस्पन्द इत्यत्र सस्य न षत्वम्। अषोपदेशत्वेन तदप्राप्तेः। तथाच वामनः—'निष्पन्द इति षत्वं चिन्त्यं लक्षणादर्शनात्' इति। लक्षणं शास्त्रमिति। हंससन्देशरसास्वादिन्यां 'दत्तनिस्पन्ददृष्टिः' इत्यस्य व्याख्यानावसरे निरूपितमस्माभिः॥

एवमुपात्तजातिगुणद्रव्यरूपनिमित्ताः अनुपात्तनिमित्ताश्च क्रियाऽभावस्वरूपोत्प्रेक्षा अप्युदाहार्याः॥

द्रव्याभावस्वरूपोत्प्रेक्षा यथा—

विशदयताऽखिलभुवनं यशसा भुजगेशशिखरिशेखर ते। अशशाङ्कमिवाकाशं न कलङ्की भाति भात्यपकलङ्के॥ ४२६॥

अपकलङ्के निष्कलङ्के भाति सति कलङ्की न भातीति योजना। अत्राशशाङ्कमिति द्रव्याभावोत्प्रेक्षायां यशसेति जातिर्निमित्तमुपात्तम्। यशसो गुणत्वविवक्षायां इयमुपात्तगुणनिमित्तेति ध्येयम्॥

यथा वा—

सत्यज्ञानानन्दे नित्यं वृषशैलशिखरतोऽस्पन्दे। परिरमति रमावासे परमपदं भवति नूनमब्रह्म॥

अत्र परमपदे अब्रह्मत्वमुत्प्रेक्ष्यत इति द्रव्याभावस्वरूपोत्प्रेक्षेयं वृषशैलाधिकरणकपरिरमणक्रियारूपनिमित्तोपादानादुपात्तनिमित्ता। ब्रह्म द्रव्यं एकत्वात्। वृषशैलशिखरतः अस्प-

न्दे अकृतकिञ्चिच्चलने परिरमति परितो विहरति सति। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्॥

यथा वा—

**तावकमहसेवनमिळदनवधिजनचरणहतिजरेणुनिभात्। धरयोर्ध्वं विसृमरया विगगनमिव खगगिरीश जगदासीत्॥ ४२८॥**

महः उत्सवः 'मह उद्धव उत्सवः' इत्यमरः। अदन्तोऽयम्। रेणुनिभात् परागव्याजात्। खगगिरिरिति शेषाद्रेरेव नामान्तरम्। अत्र विगगनमिति द्रव्याभावोत्प्रेक्षायां रेणुव्याजेनोत्प्लुत्वरी भूमिर्द्रव्यं निमित्तमुपात्तम्॥

एषा मालारूपाऽपि संभवति, यथा—

**मरकतमणिरिव विचरन् करचरणमनोहरोऽम्बुराशिरिव। स्फुरदङ्ग इवानङ्गो व्रजभुवि विजहार यदुकुलकुमारः॥ ४२९॥**

अत्र भगवद्गतानां संचारित्वादीनां मरकतादितादात्म्यविरोधिनां विरोधोपशमाय विषयिषु मरकतादिष्वारोपेण साधारणीकरणम्। न चेहोपमा शक्या निरूपयितुम्, विचरत्त्वादीनामुक्तेर्नैष्फल्यापत्तेः। न चोपमानिष्पादकं तेषां साधारण्यं तदभावेऽपि नैल्यादिभिर्धर्मैः प्रतीयमानैस्तस्या निष्पत्तेरचारुत्वादुपमानिष्पादकत्वेन कवेरविवक्षितत्वाच्च। न ह्यत्र विचरत्त्वादिभिर्धर्मैर्मरकतादिसादृश्यं भगवतः कविसंरम्भविषयः। एवं विचरत्त्वादीनां मरकतादिष्वारोपोऽपि सत्यामुपमायां निष्प्रयो-

जन एव भवेत्। अभेदप्रतिपत्तौ तु अविचरता अकरचरणेनानङ्गेन च तेन तेन कथमस्याभेदस्संभवेदिति प्रतिकूलमतिमपनेतुं विषयिगतानां विचरत्त्वाद्यारोपाणामस्त्येवोपयोगः। अत्रैव इवशब्दस्याभावे दृढारोपं रूपकम्। विषयिगतविशेषणानामभावे उपमा। इवशब्दविशेषणयोरेकतरस्याप्यभावे शुद्धरूपकमिति विवेकः॥

एवं जात्यादिभावाभावस्वरूपोत्प्रेक्षाः दिङ्मात्रेणोदाहृताः। अथ हेतूत्प्रेक्षा। तत्र जातिभावे हेतूत्प्रेक्षा यथा—

**वृषगिरिनेतुर्मणिमयसौधेनेवोरसाऽब्धिराजसुता। विस्मारिता निवासं मकरन्दपरागपङ्किले कमले॥ १३० ॥**

अत्र सौधेनेति जातिः कमलानिवासविस्मरणं प्रति हेतुत्वेनोत्प्रेक्ष्यते तदेवोत्प्रेक्ष्यमाणहेतोर्निमित्तमित्युपात्तगुणनिमित्ता जातिभावहेतूत्प्रेक्षा। हेतुफलयोरुत्प्रेक्षाविषयत्वे निमित्तस्योपादानमेव, न त्वनुपादानम्। तथाहि साध्ये अनुपात्ते साधनत्वेन निर्देशो नान्वयं पुष्णाति तथा साधने अनुपात्ते साध्यत्वेन निर्देशोऽपि। तयोरितरेतरसापेक्षत्वात् हेतूत्प्रेक्षायां हि निमित्तं फलम्। तस्यानुपादाने कं प्रति हेतुता संगच्छताम्। फलोत्प्रेक्षायां हि साधनं निमित्तम्, तस्मिन्ननुपात्ते कं प्रति फलत्वं संघटताम्। एवं च निमित्तनैमित्तिकयोरन्यतरोपादानेऽन्वयपारिपोषविरहादुभयोपादाननियमे निमित्तोपादानं नियतमेवेत्यवधेयम्। तथाच उदाहृतेऽस्मिन्पद्ये उत्प्रेक्षाया निमित्तस्य कमलनिवासविस्मारणस्यानुपादाने सौधेनेति हेतूत्प्रेक्षा न शोभते।

एवं वक्ष्यमाणफलोत्प्रेक्षायामप्यूह्यम् । तस्मात् स्वरूपोत्प्रेक्षाया-मेव निमित्तस्योपादानानुपादाने । न तु हेतुफलोत्प्रेक्षयोरिति द्रष्टव्यम् ॥

गुणहेतूत्प्रेक्षा यथा—

अच्छाच्छरुचिरयं मम सच्छात्र इति प्रमोदतो नूनम् । स्वाभिमुखे देवेऽनुप्रविशति कौस्तुभमणिं सहस्रांशुः ॥ ४३१ ॥

अच्छाच्छरुचिः अतिस्वच्छद्युतित्वात् अकुटिलप्रीतित्वाच्चे-त्यर्थः । हेतुगर्भविशेषणम् । अयं कौस्तुभमणिः मम सच्छात्रः इति प्रमोदतो नूनं देवे श्रीनिवासे स्वाभिमुखे सति सहस्रां-शुः कौस्तुभमणिं अनुप्रविशति योगक्षेमादौ तदैकरस्यं भज-तीति भावः । तत्र प्रतिबिम्बितो भवतीति वास्तवार्थः । भग-वत आभिमुख्ये सत्येव तद्वक्षस्स्थिते कौस्तुभे सहस्रांशुप्रति-फलनसंभवात्स्वाभिमुखे इत्युक्तिः । अत्र सच्छात्रताहेतुकप्रमो दो गुणः कौस्तुभानुप्रवेशं प्रति हेतुत्वेनोत्प्रेक्ष्यते । स एवा-नुप्रवेशो निमित्तमुपात्तम् ॥

क्रियाहेतूत्प्रेक्षा यथा—

हरिमुखराकाचन्द्रालोकानिशसेवनादिव रमा-याः । नयनेन्दीवरयुगळं नित्योत्फुल्लं निमीलना-ज्ञमभूत् ॥ ४३२ ॥

अत्र सेवनादिति क्रिया नित्योत्फुल्लतां प्रति हेतुतयोत्प्रे-क्ष्यते सैवोत्फुल्लता निमित्तम् ॥

यथावा—

स्वामिंस्त्वन्मुखहिमरुचिधामकृतात्परिभवा-
दिव नितान्तम् । जीवनभङ्गविलोला कमलाळी
वहति किं नु साऽरसताम् ॥ ४२३ ॥

हे स्वामिन्! त्वन्मुखमेव हिमरुचिः आत्मप्रत्यनीकश्चन्द्रमाः कमलाळीध्वंसनोपकरणत्वद्योतनाय हिमरुचिशब्दः । तस्य धाम्ना तेजसा प्रभावेण च 'गृहदेहत्विट्प्रभावा धामानि' इत्यमरः । कृतात् परिभवादिव साऽरसतामित्यत्र सा अरसतामिति छेदः, सा अतिरमणीयतया प्रसिद्धा कमलाळी पद्मपङ्क्तिः । जीवनस्य जीवितस्य भङ्गे विलोला विशेषेण सक्ता 'सर्ता ग्लाने मने' इत्याद्युक्तरीत्या जीवितपरित्यजनकृतसंकल्पेत्यर्थः । पक्षे जीवनस्य सलिलस्य भङ्गैस्तरङ्गैः विलोला चञ्चला 'लोलश्चलसतृष्णयोः' इत्यमरः । अरसतां सर्वविषयनैरस्यं वहति । परपरिभवदूनानां जीवितत्यजनदत्तदृष्टीनां सर्वत्रानास्थैव भवतीति भावः । अन्यत्र सारसतामिति समस्तं पदम् । सरोजतामिति वास्तवार्थः । अत्र परिभवरूपा क्रिया अरसतावहनं प्रति हेतुत्वेन संभाव्यते । तदेव तत्र निमित्तम् । इयं श्लेषसंकीर्णा ॥

द्रव्यहेतूत्प्रेक्षा यथा—

बलवानपि बहुपादोऽप्यलमहिभृन्महागता-
ढ्योपि । नेष्टे पदमपि चलितुं स्वस्मिन्विश्वंभरेण
किल वसता ॥ ४२४ ॥

बलवान् सामर्थ्यवानपि । पक्षे स्थौल्यवानपि 'स्थौल्य-सामर्थ्यसैन्येषु बलम्' इत्यमरः। बलसत्त्वेऽपि करणविरहे कथं गमनसंभव इत्यत आह—बह्विति । बहुपादोऽपि बहुचरणोऽपि। पक्षे बहुप्रत्यन्तपर्वतोऽपि । अत एव महत् श्लाघ्यं गतं गमनं, भावे क्तः । तेन आढ्योऽपि । पक्षे महान्तः अगाः तरवः यस्मिंस्तथोक्तः तस्य भावः महागता तया आढ्योऽपि । अहिभूभृत् शेषाद्रिः शेष इत्यपि गम्यते । स्वस्मिन् वसता विश्वंभरेणेव पदमपि चलितुं नेष्टे न शक्नोति । अत्र स्वस्मिन्नवस्थितो विश्वंभरो द्रव्यं अहिभूभृतो निश्चलतां प्रति हेतुत्वेनोत्प्रेक्ष्यते । सा निश्चलतैव निमित्तमुपात्तम् ॥

यथावा –

**निर्मलदृष्टिप्रसरणनिरोधनिर्माणनिपुणनिजमहिमा । चन्द्रादपरस्मादिव सान्द्रा शौरेस्तमस्ततिर्गळति ॥४३५॥**

निर्मला भ्रमविप्रलम्भादिसंभावनादवीयसी । पक्षे विशदा या दृष्टिः ज्ञानं, पक्षे दृक् 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः । तस्याः प्रसरणस्य निरोधनिर्माणे निपुणः निजः महिमा महत्त्वं यस्यास्सा । तमस्ततिः अज्ञानसंततिः । ध्वान्तसंहतिश्च । अत्र तमस्ततिगळनं प्रति चन्द्रो द्रव्यं हेतुतयोत्प्रेक्ष्यते । तमस्ततिगळनमेव निमित्तम् । श्लेषोत्तम्भितेयम् । एतेन द्रव्यस्य हेतुत्वेनोत्प्रेक्षणं न संभवतीति वदन्तः प्रत्युक्ताः ॥

यथावा—

**कलधौतगिरिं भवता सुश्रीकैलासमृद्धमधिवसता । अपरेणेव मुरारे श्रीदेनालंकृतोत्तराशा सा ॥**

हे मुरारे! सुश्रीकाः एलाः एलालताः ताभिः समृद्धं, अन्यत्र ऋद्धं समृद्धं सुश्रीश्चासौ कैलासश्च तं तन्नामानं कलधौतगिरिं कनकाचलं शेषाद्रेरेव नामान्तरमिदमित्यवोचामासकृत्। पक्षे रजतगिरिम्। 'कलधौतं रूप्यहेम्नोः' इत्यमरः। अधिवसता श्रीदेन भवता अपरेण श्रीदेन कुबेरेणेव सा उत्तरा श्रेष्ठा आशा पुरुषार्थविषयकतृष्णा, आशासानानामिति शेषः। अलं पर्याप्ता कृता परिपूरितेत्यर्थः। पक्षे उत्तराशा उदीची दिक् अलंकृता भूषिता। 'भूषणेऽलम्' इति गतिसंज्ञायां 'कुगति' इति समासः। तदधीशत्वात्तस्येति भावः। अत्र श्रीदेनेति द्रव्यस्य उत्तराशालङ्करणहेतुत्वेन संभावनं श्लेषोत्तम्भितम्। अत्रापरशब्दाप्रयोगे प्राचां मते शब्दमात्रसाधर्म्यात् श्लेष एव स्यात्। नवीनपक्षे अर्थसाधर्म्ये तु श्रीदस्य सिद्धतया उपमैव। तत्प्रयोगे तु प्रकृतो भगवानेवापरश्रीदत्वेनाध्यवसीयते, तस्य इवशब्देन साध्यत्वप्रतीतेरुत्प्रेक्षैव। इवशब्दाप्रयोगे तु सिद्धत्वादध्यवसायस्यातिशयोक्तिः। इवापरशब्दयोरुभयोरप्यप्रयोगे रूपकमित्यादयो विशेषा यथासंभवमूह्याः॥

इदमुदाहरणद्वयं विद्यानाथानुरोधेन। तेन हि—

प्रतापरुद्रदेवेन क्ष्माभृत्पक्षविजृम्भितम्।
समुन्मूलितमामूलादपरेणेव वज्रिणा॥

इति द्रव्यहेतूत्प्रेक्षा उदाहियत। यद्यपीदं पद्यं द्रव्यस्वरूपोत्प्रेक्षाया एवोदाहरणं भवितुमर्हति। अत्र हि इवशब्दापनयने प्रतापरुद्रे विषये अपरवज्र्यभेदरूपकमेवेति तावदविवादम्। तथाच सति तत्र इवशब्दयोजने प्रतापरुद्रे अपरवज्रिरूपद्रव्यस्वरूपोत्प्रेक्षैव इवशब्देन प्रत्याय्येत। यत्र असतीवशब्दे यत्पदार्थे यत्पदार्थरूपकं तत्रैव सतीवशब्दे तत्पदार्थे तत्पदार्थस्व-

रूपोत्प्रेक्षेति नियमदर्शनात् । तथाऽपि यदीह प्रतारुद्रदेवेन समुन्मूलितं अपरवज्रिणेवेत्यन्वयाविवक्षया प्रतापरुद्रहेतुके क्ष्माभृत्पक्षविजृम्भितसमुन्मूलने अपरवज्रिहेतुकत्वसंभावनाविषयत्वं प्रतिपिपादयिषितं तदा भवतीदं द्रव्यहेतूत्प्रेक्षाया अपि कथंचिदुदाहरणमिति तदाशय उन्नीयते । चित्रमीमांसारसगङ्गाधरकारौ तु ईदृशद्रव्यस्वरूपोत्प्रेक्षागन्धदविष्ठमेव पद्यं द्रव्यहेतूत्प्रेक्षायामुदाहरेताम् । तदनुरोधेन निस्संदिग्धमुदाहरणं तु 'बलवानपि बहुपादोपि' इति प्रागेवोपदर्शितमस्माभिरित्यलं बहुना ॥

अथाभावाभिमानवत्यः—तत्र जात्यभावहेतूत्प्रेक्षा यथा—

**गगनतले स्वप्रभया स्थगिते भानोरभावतो नूनम् । घनरुचिरुरसा कौस्तुभमिनकोटिरुचं वहत्यहिगिरीशः ॥४३७॥**

अत्र भानोर्जातेरभावः कौस्तुभधारणहेतुत्वेनोत्प्रेक्ष्यत इत्युपात्तक्रियानिमित्तजात्यभावहेतूत्प्रेक्षेयम् ॥

यथावा—

**शौरेर्जययात्रोत्थैर्भूरेणुभरैर्मुहुः कबलितायाम् । द्युसरिति सलिलाभावान्मरुतां स्वपदे ध्रुवं मरुत्वमभूत् ॥४३८॥**

स्वपदे स्वस्थाने स्ववाचकपदे च मरुत्वं मरुभूमित्वं मरुच्छब्दत्वं च । आद्यपक्षे तकारस्य 'अनचि च' इति द्वित्वम् । 'मरुतौ पवनामरौ, समानौ मरुधन्वानौ' इति चामरः ।

अत्र मरुत्त्वप्राप्तिं प्रति सलिलरूपजात्यभावो हेतुतयोत्प्रेक्ष्यते । श्लेषोज्जीवितेयम् ॥

गुणाभावहेतूत्प्रेक्षा यथा —

**विहरति मयि सानन्दं सह रमया स हरिरेव किं मेऽन्यत् । आशास्यमित्यनाकुलभावात्प्रायेण निश्चलोऽहिगिरिः ॥ ४३९ ॥**

प्रायेणेत्येतदुत्प्रेक्षाव्यञ्जकम् । अत्र अनाकुलभावादिति गुणभावो नैश्चल्यं प्रति हेतुत्वेनोत्प्रेक्ष्यते । इयं चलनरूपक्रियाभावनिमित्ता गुणाभावहेतूत्प्रेक्षा । एवं जात्यादिनिमित्ता अप्यूह्याः ॥

क्रियाभावहेतूत्प्रेक्षा यथा—

**मध्यमतां त्यक्तुं तव मध्यममर्वाक्छिरः प्रतप्यापि । तदलाभात्कृशिमानं नूनं प्रापाहिशैलपतिदयिते ॥ ४४० ॥**

तव मध्यमं मध्यमतां उत्कर्षापकर्षशून्यतां, पक्षे अवलग्नतां त्यक्तुं अर्वाक्छिरः प्रतप्यापि अधश्शिरस्तपस्तप्त्वाऽपि विलोमतयाऽवस्थानमेवाधश्शिरस्तपस्यात्वेनाध्यवसीयते । तदलाभात् मध्यमतात्यागाप्राप्तेः मध्यममिति वर्णावळेर्विलोमत्वेऽपि मध्यममित्येवावस्थानाच्छब्दार्थयोस्तादात्म्यमुपजीव्य तदलाभादित्युक्तम् । कृशिमानं प्राप । अत्र लाभक्रियाभावः कृशिमप्राप्तिं प्रति हेतुत्वेनोत्प्रेक्ष्यत इति क्रियानिमित्तक्रियाभावहेतूत्प्रेक्षेयं श्लेषातिशयोक्त्युत्तम्भिता । एवं जात्यादिनिमित्तक्रियाभावोत्प्रेक्षा अप्यूह्याः ॥

द्रव्याभावहेतूत्प्रेक्षा यथा –

अहिगिरिगा हरिरुचिभिस्स्वदक्षिणार्धाङ्गकेऽपि मेचकिते । काळी गौरी समजनि शर्वाभावादिवात्यर्थम् ॥ ४४१ ॥

काळी निसर्गतो नीलवर्णा हरार्धशरीरस्था पार्वती 'जानपद' इत्यादिना ङीष् । अहिगिरिगा भगवत्सेवार्थं शेषाद्रिगता सतीति भावः । हरिरुचिभिः श्यामलाभिरिति भावः । स्वदक्षिणार्धाङ्गकेऽपि भर्तृरूपे स्वदक्षिणार्धावयवेऽपि अर्धनारीश्वरस्य पार्वतीदक्षिणार्धशरीरस्थत्वात् । मेचकिते श्यामलिते सति । अपिशब्दस्स्वशरीरश्यामलिमानं समुच्चिनोति । शर्वाभावादिव स्ववल्लभाभावादिव शरीरदक्षिणवामार्धयोरुभयोरप्यविशेषेण निष्पद्यमाने कालिम्नि पत्यर्धशरीरेऽपि स्वशरीरार्धान्तरसंभावनया पत्युरभावमाशङ्क्य निर्वेदमश्नुवानेति भावः । अत्यर्थं गौरी बभूव पाण्डुराऽऽसीत् । अन्यथा स्वतः कालवर्णाया अस्याः कथं गौरवर्णता स्यादिति भावः । एकस्या एव पार्वत्याः कालवर्णत्वगौरवर्णत्वविरोधो जन्मभेदेन परिहार्यः । अत्र शर्वरूपद्रव्याभावः काळ्याः निर्वेदपूर्वकगौरतां प्रति हेतुत्वेन संभावित इति गुणनिमित्तेयं द्रव्याभावहेतूत्प्रेक्षा । 'अन्यार्धाभ्यामिवोत्पन्नमर्धनारीश्वरान्तरम्' इति द्रव्योत्प्रेक्षोदाहरणे 'वस्तुतोऽर्धनारीश्वरस्यैकत्वात् द्रव्योत्प्रेक्षा' इत्युक्तं चित्रमीमांसायाम् । अतोऽर्धनारीश्वरस्य द्रव्यत्वमव्याहतम् ॥

यथावा—

चिन्तामणेरभावाद्धरणौ चिन्तामणिक्षितिधरेन्द्रम् । सर्वमनोरथवितरणधूर्वहमसृजज्जगत्स्रष्टा ॥

अत्र धरण्यधिकरणकचिन्तामण्यभावश्चिन्तामणिगिरिसर्जनं प्रति हेतुतया संभावितः। क्रियानिमित्तेयं द्रव्याभावहेतूत्प्रेक्षा। चिन्तामणिगिरिरिति शेषाद्रेरेव नामान्तरमित्यवोचाम, तन्न विस्मर्तव्यम्। इति हेतूत्प्रेक्षादिक्॥

अथ फलोत्प्रेक्षा—तत्र जातिफलोत्प्रेक्षा यथा—

**रमया सह वृषशिखरिणि समये विजिहीर्षतो मुरारातेः। पटमण्डपाय नूनं जृम्भन्तेऽम्भोधरास्ससंरम्भाः॥ ४४३॥**

अत्र पटमण्डपत्वरूपजात्यवच्छिन्नः अम्भोधरजृम्भणस्य फलतयोत्प्रेक्ष्यत इति क्रियानिमित्तजातिफलोत्प्रेक्षा। न चात्र संपादनक्रियामन्तरा शुद्धाया जातेरफलत्वात्क्रियाया एव फलत्वमिति वाच्यम्। संपादनस्य संसर्गतया तद्द्वारेणैव जात्यादेः फलत्वोपपत्तेः। अन्यथा फलत्वबोधकचतुर्थ्या अनुपपत्तेः। अत एव 'यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्, ब्राह्मण्याय तपस्तेपे विश्वामित्रस्सुदारुणम्' इत्यादयः प्रयोगा उपपद्यन्ते। एवं जात्यादिनिमित्ता अपि जातिफलोत्प्रेक्षा उदाहार्याः॥

गुणफलोत्प्रेक्षा यथा—

**असितघनरुचिर इति मत्सदृशाख्यो हरिरशंसि निगमान्तैः। इति तादृशनीलिम्ने विधुः कलङ्कं दधाति किं स्वाङ्के॥ ४४४॥**

अत्र हरिविधुशब्दौ भगवच्चन्द्रोभयवाचिनौ। असितघनरुचिरः नीलाम्बुदमनोहर इति। निगमान्तैः 'नीलतोयदमध्यस्था'

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामम्' इत्यादिभिः अशंसि प्राशस्यत । अत्र नीलिमा गुणः फलत्वेनोत्प्रेक्ष्यते कलङ्कधारणं निमित्तमिति क्रियानिमित्तगुणफलोत्प्रेक्षा । एवं जात्यादिनिमित्ता अपि गुणफलोत्प्रेक्षा ऊहनीयाः ॥

क्रियाफलोत्प्रेक्षा यथा—

त्रैविक्रममिव विक्रममभ्यस्यन्तः परं तटित्वन्तः । उद्दामानः प्रावृष्युज्जृम्भन्तेऽहिगिरिमुपर्युपरि ॥

अभ्यस्यन्त इव अभ्यसितुमिवेत्यर्थः । 'लक्षणहेत्वोः' इति शता । अर्जयन्वसतीत्यादाविव हेतुरिह फलम् । अहिगिरिमुपर्युपरि अहिगिरेस्समीपोपरिप्रदेश इत्यर्थः । 'उपर्यध्यधसस्सामीप्ये' इति द्विर्भावः 'धिगुपर्यादिषु त्रिषु' इति तद्योगे द्वितीया । अत्राभ्यस्यन्त इति क्रिया फलत्वेनोत्प्रेक्ष्यते । उज्जृम्भणक्रिया निमित्तामिति क्रियानिमित्ता क्रियाफलोत्प्रेक्षा । जात्यादिनिमित्ता अप्यमुयैव दिशा प्रतिपत्तव्याः ॥

द्रव्यफलोत्प्रेक्षा यथा—

सुरभिलवनमालामिलदलिकुलतो नाभिकमलपरिलग्नान् । दधदलिनो मधुदलनो धात्रेऽनन्ताय किं नु संनद्धः ॥ ११६ ॥

वनमालामिलदलिकुलात् नाभिकमले संलग्नान् संबद्धानित्यर्थः । अनेन अलिनां तदारुण्यसंक्रान्तिर्द्योत्यते । मधुदलनः मधुमथन इत्यर्थः । अनन्ताय धात्रे अनेकांश्चतुर्मुखान्निर्मातुमिति यावत् । अत्र धाता द्रव्यं फलतयोत्प्रेक्ष्यते । अलिधारणक्रिया

निमित्तमिति क्रियानिमित्तद्रव्यफलोत्प्रेक्षा । एवं जात्यादिनिमित्ता अपि द्रव्यफलोत्प्रेक्षा उदाहार्याः ॥

अथाभावाभिमानवत्यः फलोत्प्रेक्षाः—तत्र जात्यभावफलोत्प्रेक्षा यथा—

**यमलार्जुनयोर्हरिपदकमलामर्शाद्विमुक्तिमालोक्य । मन्ये वसन्त्यहिगिरावन्ये तरवोऽप्यभूरुहत्वाय ॥ ४४७ ॥**

अत्राभूरुहत्वायेति जात्यभावः फलत्वेन संभाव्यते । विमुक्त्यालोचनक्रिया निमित्तमिति क्रियानिमित्तजात्यभावफलोत्प्रेक्षा । एवं जात्यादिनिमित्ता अप्यूह्याः । अभूरुहत्वाय अतरुत्वाय भुवि जननाभावाय च, निश्श्रेयसायेति यावत् ॥

गुणाभावफलोत्प्रेक्षा यथा—

**तैक्ष्ण्यमिह लोकबन्धोरनुचितमिति कौस्तुभो भवन्भास्वान् । नूनमतैक्ष्ण्याय हरेर्हृदयं श्रयते कृपाझरीशिशिरम् ॥ ४४८ ॥**

अत्रातैक्ष्ण्यायेति गुणभाव फलत्वेनोत्प्रेक्ष्यते । कृपाझरीशिशिरहरिहृदयाश्रयणक्रिया निमित्तम् । एवं जात्यादिनिमित्ता अपि ज्ञेयाः ॥

क्रियाभावफलोत्प्रेक्षा यथा—

**सर्वेषां स्वदयिततमहृदयस्थित्यनवलोकनायेव । विद्युत्प्रभानिभाभिस्स्वभाभिराच्छादयति दृशो लक्ष्मीः ॥ ४४९ ॥**

सर्वेषामित्येतत् दृश इत्यत्रान्वेति । अत्रावलोकनक्रियाया अभावः फलत्वेनोत्प्रेक्ष्यते । आच्छादनक्रिया निमित्तम् । एवं जातिगुणद्रव्यनिमित्ता अपि विभावनीयाः ॥

द्रव्याभावफलोत्प्रेक्षा यथा—

हिमशिखरित्रिदशसरित्कलशोदधिगिरिशशशिविलोपाय । शङ्केऽहिशैलशेखरयशोविलासो दिशो विशो (भ)धयते ॥ ४५० ॥

अत्र हिमशिखरिमुखद्रव्याभावः फलत्वेन संभाव्यते विशो(भ) धनक्रिया निमित्तम् । एवमेवान्यदप्यूह्यम् ।

इह जात्यादयो हि भेदाः प्राचामनुरोधादुदाहृताः । वस्तुतस्तु नैतेषामस्ति चमत्कृतौ वैलक्षण्यमित्यनुदाहरणीया एवैते । चमत्कृतिवैलक्षण्यं स्वरूपहेतुफलात्मकानां त्रयाणां प्रकाराणामेवेति ध्येयम् ॥

एवं—मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥

इत्युक्तप्रकारवाचकशब्दघटिताः वाच्योत्प्रेक्षाः प्रदर्शिताः । तदप्रयोगे गम्योत्प्रेक्षा भवति ॥

तत्र वस्तूत्प्रेक्षा यथा—

ईप्सितसरा निकामं तव सरहिततां मदम्ब गच्छन्ती । प्राप्यातान्तोन्मुखतां सरोजयुग्यलमभूदुरोजयुगी ॥ ४५१ ॥

सरोजयुगी निकामं ईप्सिताः सराः मुक्ताहाराः यया सा ईप्सितसरा। पक्षे—ईप्सितं सरः कासारो यस्यास्सा ईप्सितसराः। सान्तोऽयं शब्दः। तव सराहिततां हाराहितत्वं अन्यत्र सवर्णरहितत्वं गच्छन्ती 'लक्षणहेत्वोः' इति शता। हेतुरिह फलम्। गन्तुमित्यर्थः। अन्यत्र हेत्वर्थे। अत एव अलं अतान्ता अम्लाना सती उन्मुखतां औत्सुक्यं, पक्षे अतान्तोन्मुखतामिति समस्तं पदम्। अतान्तः तवर्णरहितचरमभागः उत् उवर्ण इत्यर्थः। उदित्यत्र तकारोत्सादने उ इत्येवावशेषात्। सः मुखे प्रारम्भे यस्यास्सा तस्याः भावः अतान्तोन्मुखता तां 'शरदः कृतार्थता' इत्यादाविव सामान्ये नपुंसकं ततस्तल्। प्राप्य तव उरोजयुगी स्तनद्वयी अभवत् तत्वेन जातेत्यर्थः। पक्षे उक्तरीत्या सरोजयुगीशब्दः उरोजयुगीशब्दो निष्पन्न इत्यर्थः। अत्र उरोजयुग्यास्सरोजयुगीतादात्म्योत्प्रेक्षायां वाचकश्शब्दो नोपात्त इति प्रतीयमानेयम्॥

तत्रैव हेतूत्प्रेक्षा यथा—

**नीलानयनेन्दीवरविसृमररुचिनिचयसततपरिचयतः। चक्षुश्श्रुतिगिरिशिखरे साक्षाद्ब्रह्मात्तमेचकिम भाति॥ ४५२॥**

अत्र परिचयत इति हेतूत्प्रेक्षायां वाचकश्शब्दोऽनुपात्त इतीयमपि प्रतीयमाना अर्थसामर्थ्यावसेयत्वात्॥

तत्रैव फलोत्प्रेक्षा यथा—

**नन्वम्ब कर्णतां स्वामन्वर्थयितुं तव श्रवणयु-**

ग्मम् । सहजोज्ज्वलमणिकुण्डलसंस्पर्शनतः प्रतीततामेति ॥४५३॥

नन्वम्ब तव श्रवणयुग्मं कर्तृ स्वां कर्णतां कर्णशब्दवाच्यतां 'श्रोत्रराधेययोः कर्णः' इति रत्नमाला । अन्वर्थयितुं सहजं स्वजन्मसमये सहैव जातं उज्ज्वलं च, पक्षे निसर्गत एव देदीप्यमानं यन्मणिकुण्डलं सहजेनोज्ज्वलमिति समासः । तस्य संस्पर्शनतः वितरणात्, पक्षे अवमर्शात् । 'सहजस्तु निसर्गे ना सहोत्थे पुनरन्यवत्, स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्' इति च मेदिनी । प्रतीततां हृष्टतां एति शरीरेण सह जातमपि मणिकुण्डलमुत्कृत्य याचते द्विजवेषभाजे सुरराजे दत्वाऽपि नान्वतप्यत अपितु हृष्ट एवासीदिति तदौदार्यातिशयप्रशंसनम् ॥

यद्वा—स्पर्शनतः दाने विषये, सप्तम्या आद्यादित्वात्तसिः । प्रतीततां सादरतामित्यर्थः.

याचतो मोदमादत्ते वाञ्छितादधिकप्रदः ।
अनुव्रज्य प्रियं ब्रूते तस्मात्कर्णस्तवाधिकः ॥

इत्युक्तेरिति भावः । पक्षे प्रतीततां उक्तविधमणिकुण्डलस्पर्शनेन भूषिततामित्यर्थः । 'प्रतीतस्सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु, प्रतीतः प्रथिते हृष्टे परिज्ञाते विभूषिते' इति मेदिनीरत्नमाले । एति प्राप्नोति । अत एव कर्णशब्दान्वर्थनमिति भावः । महाभारते दानाय सहजकवचकुण्डलयोः कर्तनादेव हि राधेयस्य कृन्ततीति कर्ण इति नाम व्युत्पादितम् । अत्र कर्णतामन्वर्थयितुमिति फलोत्प्रेक्षायां वाचकमनुपात्तम् । एवं प्रागुदाहृते-

ष्वेव पद्येषु वाचकपरित्यागे तास्सर्वा अपि प्रतीयमाना भवन्तीति नात्र तद्विशेषाः प्रतायन्ते ॥

धर्मस्वरूपोत्प्रेक्षा यथा —

**मन्ये भवत्कृपाया मोहमपारं फणीन्द्रशिखरिविधो । पापीयसोपि जन्तोः परमं श्रेयो ददाति याऽकस्मात् ॥४५४॥**

पापीयसोपि जन्तोः गृध्रादेरिति भावः । अत्र पूर्वार्धोत्प्रेक्षितमोहरूपधर्मसिद्धये द्वितीयार्धे आकस्मिकनिरतिशयश्रेयोदानमुपात्तम् ॥

इदमत्रावधेयम् — उत्प्रेक्ष्यमाणेष्वपि यस्य विषयिण उत्प्रेक्षा विधेयतयाऽवभासते तदीयोत्प्रेक्षयैव व्यपदेशः प्राधान्यात् । तेन 'अच्छाच्छरुचिः' इति श्लोके सहस्रांशुगततया प्रमोदस्योत्प्रेक्षणेऽपि न तदुत्प्रेक्षया व्यपदेशो न्याय्यः । तस्या अङ्गत्वेनानुवाद्यत्वात् किंतु पञ्चम्यर्थोत्प्रेक्षया, तस्या एव नूनंशब्दवेद्यत्वेन विधेयत्वात् । तथा 'त्रैविक्रममिव विक्रमम्' इति पद्ये त्रैविक्रमविक्रमाभ्यसनोत्प्रेक्षयाऽपि व्यपदेशो न युक्तः किंतु शत्रर्थफलोत्प्रेक्षया । एवं 'हृदयास्पदया' इति 'नाथ तव नाभिसरसि' इत्यादिपद्येषु न फलोत्प्रेक्षया व्यपदेशो युज्यते । नापि 'करपद्मेन' इति पद्ये सितकरबिम्बतादात्म्योत्प्रेक्षया तदुन्मीलितया करपद्मकर्तृकद्वेषहेतुकमध्यच्छिद्रीकरणपूर्वकप्रकोष्ठवयनकर्मतादात्म्योत्प्रेक्षया वा, पूर्वोक्तादेव हेतोः । एवमेव सर्वत्रापि 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायात्प्रधानभूतोत्प्रेक्षयैव व्यपदेश इति । धर्मोपि तावदत्र द्विविधः—स्वत एव साधारणः, साधारणीकरणोपायेनासाधारणोपि साधारणीकृतश्च । स चोपायः क्वचिद्रूपकं

कचिच्छ्लेषः कचिदपह्नुतिः कचिद्बिम्बप्रतिबिम्बभावः कचित्तत्कराम्भितवस्तुप्रतिवस्तुभावः कचिदुपचारः कचिदभेदाध्यवसायरूपोऽतिशयः । तत्र स्वत एव साधारणो धर्मः प्रागुदाहृते 'नीलगुणेनाक्रान्ते' इति पद्ये विषयविषयिणोः कनकवसनपीतगुणयोरौज्ज्वल्यम् । साधारणीकृतस्तु प्रागुदाहृत एव 'भ्रूयुगळधनुर्लस्तकसंहितनासाकरीरसंलग्नम्' इति पद्ये प्रथमार्धगतो धर्मः रूपकेण विषयविषयिसाधारणीकृतः ॥

श्लेषेण साधारणीकृतो यथा—

**सुरभिस्वैरस्पर्शनलीलाप्यायितसमस्तलोक-स्त्वम् । यन्माधवोसि तत्त्वां वसन्तमहिशैलनाथ जानीमः ॥ ४५५ ॥**

सुरभेः कामधेनोः स्वैरस्पर्शनं स्वच्छन्दवितरणं तस्य लीलया कामगवीवादान्यकतुल्यवादान्यकेनेत्यर्थः । अन्यत्र सुरभिः घ्राणतर्पणस्सुगन्धिरित्यर्थः ।

सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः ।
सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभिस्स्मृतः ॥

इति विश्वः । स्वैरः 'मन्दस्वच्छन्दयोस्स्वैरः' इत्यमरः । यः स्पर्शनो मलयमारुत इत्यर्थः । 'स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्' इति मेदिनी । तस्य लीलया विलासेन प्रसरणेनेति यावत् । आप्यायितसमस्तलोकः उभयत्र तुल्योऽर्थः । माधवः श्रीनिवासः माधवाख्य ऋतुश्च यत् यस्मात् असि, तत् त्वां वसन्तं जानीमः । अयमुपात्त एव भवति नानुपात्तः अप्रसिद्धत्वात् । श्लेषेतरस्तु अनुपात्तश्चापि भवति यथा 'मरकत-

मणिरिव विचरन्' इत्यादौ नैल्यादिः। न चात्र विचरत्त्वादिरूप उपात्त एव साधारणो धर्मः साधारण्यार्थमेव हि विषयिण्यारोप इति वाच्यम्। तस्यारोपेण कृतेऽपि साधारण्ये असुन्दरत्वेनोत्प्रेक्षोन्मेषकत्ववैधुर्यात्। साधारणीकरणं तु प्रतिबन्धनिरासार्थमित्यवोचामैव॥

यथा—

सत्पद्मशङ्खकच्छपमकरं घननील तव मुकुन्द पदम्। वरकुन्दनखं मन्ये सुमहापद्मं ततो निधिमयं त्वाम्॥ १५६॥

हे घननील! मेघश्यामल! पक्षे घनः नीलो निधिविशेषो यस्य स तथोक्तः तस्य संबुद्धिः। हे मुकुन्द! मुक्तिदायिन्! पृषोदरादित्वात्साधुः। पक्षे हे मुकुन्दनिधे! तव पदं चरणं सन्तः पद्मशङ्खकच्छपमकराः यस्मिंस्तत् पद्माद्याकाररेखासंपन्नमित्यर्थः। पक्षे पद्मादिनामनिधिविशेषवदित्यर्थः। वराणि कुन्दानि कुन्दकुसुमानीव नखानि, पक्षे वरकुन्दौ निधिविशेषौ नखेषु यस्य तत्तथोक्तम्। ततः तस्मात् महती पद्मा श्रीर्यस्य तं, पक्षे महापद्मनिधिं च। त्वां निधिमयं 'महापद्मश्च पद्मश्च' इत्युक्तनिधिमयं मन्ये। अत्रोत्प्रेक्ष्यमाणस्य निधिमयस्य धर्मेषु पद्मादिनिध्याश्रितचरणत्वादिकेषु विशेषणीभूतैस्तत्तन्निधिभिर्विषयस्य भगवतो धर्मेषु कमलशङ्खादिरेखाश्रितपदत्वादिषु विशेषणानां पद्मादीनां श्लेषेण तादात्म्यसंपादनद्वारा तथाविधधर्माणां साधारण्यसंपत्तिः॥

यथा वा—

इह भार्गवीसमृद्धिस्सरस्वती भात्युपत्यका दु-

र्गा । अच्युतधात्रीशायितस्त्रिमूर्तिमय इव वृषाद्रि-
रयमिन्धे ॥ १५७ ॥

इह अद्रौ भार्गवी प्रपातसंबन्धिनी 'प्रपातस्तु तटो भृगुः' इत्यमरः। समृद्धिस्संपत् भाति। पक्षे संतता ऋद्धिर्यस्यास्सा समृद्धिः महाविभूतिरित्यर्थः। भार्गवी लक्ष्मीः भाति। उपत्यका आसन्नभूमिः। सरांस्यस्यां सन्तीति सरस्वती। भूम्नि मतुप्। 'तसौ मत्वर्थे' इति भसंज्ञाविधानाच्च पदकार्यरुत्वोत्वे। पक्षे भारतीत्यर्थः। गन्तुमशक्या दुर्गा च। पक्षे गौरी च भाति। अच्युतं यथा स्यात्तथा धात्र्यां भूम्यां शयितः स्थित इति यावत्। शीङः कर्तरि क्तः। पक्षे अच्युतो भगवान् धाता ब्रह्मा ईट् ईशानश्च अच्युतधात्रीशः। इदं द्वितीयाबहुवचनम्। इतः प्राप्तः। इणः कर्तरि क्तः। यद्वा—इतः अस्मिन्गिरौ सप्तम्यास्सार्वविभक्तिकस्तसिः। अच्युतधात्रीश इति प्रथमाबहुवचनं अर्थस्तूक्त एव। भान्तीति वचनविपरिणामेनान्वयः। धात्री·शयित इत्यत्र धात्रीशस् इत इति स्थिते रुत्वयत्वयोः कृतयोः 'लोपश्शाकल्यस्य' इति यलोपस्य वैकल्पिकत्वान्नेह यकारलोपः। अत एव अयं वृषाद्रिः त्रिमूर्तिमय इव हरिविरिञ्चिहरमय इव इन्धे दीप्यते। अत्र उत्प्रेक्ष्यमाणस्य त्रिमूर्तिमयस्य धर्मेषु समृद्धिभार्गव्याद्यधिकरणत्वादिषु विशेषणीभूताभिर्भार्गव्यादिभिर्विषयस्य वृषाद्रेर्धर्मेषु भृगुसंबन्धिसमृद्धिमत्त्वादिषु विशेषणीभूतानां भृगुसंबन्धिसमृद्ध्यादीनां श्लेषेण तादात्म्यसंपादनद्वारा तादृशधर्माणां साधारणतासंपत्तिः॥

यथा वा—

शुभपुष्यरागरुचिजुषि सुमहानीले विदूरभव-

कलिते । अच्युत रत्नमयत्वं त्वयि नियतमवैमि पद्मरागपदे ॥ ४५८ ॥

शुभं पुष्णातीति शुभपुट् तस्मिंस्तथोक्ते अरागेषु विरक्तेषु रुचिजुषि प्रीतिभाजि । पक्षे शुभाः पुष्यरागाः रत्नविशेषाः तै रुचिजुषि परभागभाजीति यावत् । सुमहानीले अतिमात्रश्यामले । पक्षे मणिविशेषे । विदूरः दवीयान् भवस्संसारो येषां तैः अस्पृष्टसंसारगन्धैर्नित्यमुक्तादिभिः कलिते सेविते । पक्षे विदूरभवैः वैदूर्यैः कलिते पद्मस्य राग इव रागो ययोस्ते पदे चरणे यस्य तस्मिन् । पक्षे पद्मरागाणां मणीनां पदे आश्रये अत एव हे अच्युत! त्वयि उक्तरूपे त्वयि रत्नमयत्वं अवैमि संभावये । अत्रोत्प्रेक्ष्यमाणस्य रत्नमयस्य धर्मेषु शुभपुष्यरागरुचिभाक्त्वादिकेषु विशेषणीभूतैस्तत्तद्रत्नैः विषयस्य भगवतो धर्मेषु शुभपोषकत्वादिषु विशेषणीभूतानां शुभपोषणादीनां श्लेषेण तादात्म्यसंपादनम् ॥

पूर्वोदाहरणयोराद्ये 'सत्पद्म' इति पद्ये अभङ्गश्लेषेण द्वितीये 'इह भार्गवी' इति पद्ये सभङ्गाभङ्गश्लेषाभ्यां साधारणीकरणं वक्ष्यमाणरत्नावळ्या रूपकेण च संकीर्णता च । अस्मिन् 'शुभपुष्यराग' इति पद्ये तूभयविधश्लेषेण साधारणीकृतिमात्रमिति विशेषः ॥

यथावा—

स्वायत्तहेमकूटः प्रायस्संपूज्यते महेन्द्रेण । प्रस्रवणसेवितोसावेते दासाः किमस्य शेषगिरेः ॥

अत्र हेमकूटमहेन्द्रप्रस्रवणशब्दा गिरिविशेषवाचिनः । अ-

र्थान्तरं तु स्पष्टमेव । 'उत्सः प्रस्रवणम्' इत्यमरः । एते गिरय इत्यर्थः । अत्र हेमकूटादिशैलेषु विषये शेषाद्रिदासतादात्म्योत्प्रेक्षायां तदायत्तत्वादिलक्षणो विषयिधर्मः श्लेषेण विषयाणां तदाश्रितानां च कनकशिखरवृत्रारिनिर्झराणामभेदसंपादनद्वारा विषयसाधारणीकृतः ॥

अपहुत्या साधारणीकरणं यथा—

**हृदयास्पदा तव दया वदनात् स्मितभानिभादुदश्चन्ती । भुवि फणिगिरिमणिरमणि स्वविषयमखिलं समीक्षते मन्ये ॥ ४६० ॥**

यथा अवरोधगता महाराज्ञी विलासवशादुच्चैस्सौधान्तरादुदेत्य निखिलं निजदेशं पश्यति तथा तव हृदयगा दया उच्चैर्वदनमधिरुह्य स्वगोचरमखिलं जनं समीक्षत इवेति भावः। अत्र स्वविषयविलोकनस्य दयायामुत्प्रेक्षणे तदर्थमान्तरप्रदेशाद्बहिरुद्गमनमपेक्षितं, तच्च बाहिःप्रदेशसम्बन्धरूपं स्मितप्रभामात्रवृत्ति दयायां न संभवतीति स्मितप्रभापह्नवेन दयागतं क्रियते॥

यथावा—

**मकुटादिमणिव्याजात्परितो नानात्वमेत्य भवतो नयने । पश्यत इवेश विश्वक्प्रकाशनायैष विश्वतश्चक्षुरिति ॥ ४६१ ॥**

हे ईश! सर्वेश्वर! भवतो नयने कर्तृणी एषः सर्वेश्वरो भगवान् विश्वतश्चक्षुः सर्वतोमुखलोचनवानिति प्रकाशनाय पश्यत इवेति योजना । अत्र 'विश्वतश्चक्षुरुत विश्वतोमुखः'

इति श्रुत्यर्थोऽनुसंधेयः । इह युगपत् विष्वग्दर्शनस्य नयनयोरुत्प्रेक्षायां तन्निमित्तं तयोर्विष्वग्वृत्तित्वमपेक्षितं, तच्च मकुटादिगतमणिवृत्ति न तु नयनवृत्ति भवतीति मण्यपह्नुत्या नयनगतं वितन्यते ॥

यथावा—

**तावकचरित्ररूपं देव श्रवणान्तरात्प्रविश्यान्तः ।**
**सिद्धाञ्जनं किमपि नश्शुद्धामन्तर्दृशं व्यनक्तीव ॥**

हे देव! तावकचारित्ररूपं किमपि सिद्धाञ्जनं श्रवणयोरन्तराद्विवरात् अन्तः प्रविश्य नः अन्तः दृशं दृष्टिं ज्ञानं च शुद्धां निर्दोषां सतीं सर्ववस्तुसाक्षात्करणक्षमामिति यावत् । व्यनक्ति प्रकाशयति । अत्रान्तर्दृष्टिशोधनस्य सिद्धाञ्जने उत्प्रेक्षायां तन्निमित्तं बहिःप्रदेशादन्तःप्रदेशोऽपेक्षितः । स चान्तःप्रदेशसम्बन्धरूपो भगवच्चरित्रमात्रवृत्तिस्सिद्धाञ्जने न संभवतीति भगवच्चरित्रापह्नवेन सिद्धाञ्जननिष्ठः क्रियते ॥

बिम्बप्रतिबिम्बभावेन साधारणीकरणं तु 'करपद्मेन द्वेषात्' इत्यत्र निरूपितम् ॥

यथावा—

**उपरिहरिनीलमणिरुचिकवचितहारमणि भगवतो हृदयम् । बीजाकृतमिव विलसति बहुफलदानाय तेन केदारम् ॥४६३॥**

उपरि हरिनीलमणिरुच्या कवचिताः आच्छादिताः हारस्य मणयो मौक्तिकानि यस्य तत्तथोक्तम् । नीलमणिप्रभान्तःप्रकाशमानमौक्तिकमिति भावः । भगवतः हृदयं तेन भगवता जनानामिति

शेषः। बहूनि फलानि धान्यरूपाणि, पक्षे ऐहिकामुष्मिकापवर्गिकाखिलप्रयोजनानि। तेषां दानाय बीजाकृतं यावनाळादिबीजेन सहकृष्टं उप्तकृष्टं आदौ बीजान्युप्त्वा उपरि हलविशेषकर्षणेन समीकृतकृष्णमृदिति भावः। 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ' इति बीजशब्दात्कृञो योगे कृषिरूपार्थे डाच्। 'बीजाकृतं तूप्तकृष्टम्' इत्यमरः। केदारं क्षेत्रमिव भाति। अत्र हरिवक्षसः केदारतादात्म्यसंभावनायां उपरिहरिनीलमणिरुचिकवचितहारमणिबीजाकृतयोर्बिम्बप्रतिबिम्बभावापन्नयोरभेदाध्यवसायेन साधारण्यसंपादनम्॥

एवं 'भित्वा भानोः' इत्यादावपि॥

बिम्बप्रतिबिम्बभावकरम्भितवस्तुप्रतिवस्तुभावेन यथा—

**कमलारुचिपरिवीतः कौस्तुभमणिरेष शोभते सुतराम्। स्वसृपतिविडम्बनाय स्वयमपि पीताम्बरेण किं छन्नः॥४६४॥**

स्वसृपतेः निजभगिनीजानेर्भगवतः विडम्बनाय परिहासार्थानुकरणाय। अत्र कमलारुचिपीताम्बरयोर्बिम्बप्रतिबिम्बभावः। तत्करम्भितश्च परिवीतच्छन्नयोर्वस्तुप्रतिवस्तुभाव इति तेन साधारण्यम्॥

उपचारेण यथा—

**मधुरामतिगम्भीरां विशदां शिशिरां विगाहमानानाम्। गरुडगिरिशिखरमण्डन गङ्गां मन्यामहे कथां भवतः॥४६५॥**

अत्र भगवत्कथायां माधुर्यगाम्भीर्यवैशद्यशैशिर्यविगाहनानां मुख्यानामसंभवादास्वादाविक्षोभसुप्रवेशत्वतापहरणश्रवणानाममुख्यानामुपचारेण मुख्यैस्साधारणीकरणम् । लक्षणया शक्याभेदेन लक्ष्यबोधनात् ॥

अभेदाध्यवसायमात्रेण यथा—

**सरिदधिपसुतासद्मन्युरसि हरेर्नः कुतो निवास इति । हर्षादिव कृतहासा हारा नारायणाद्रिशेखर ते ॥ ४६६ ॥**

अत्र प्रकाशप्रकटनहासकरणयोरभेदाध्यवसाय एव हर्षहेतूत्प्रेक्षानिमित्ततयोपात्तस्य हासकरणस्य प्रकटितप्रकाशकृतहासोभयसाधारण्ये बीजम् । एवं सर्वत्र हेतुफलयोरुत्प्रेक्षणे यस्य हेतुः फलं वा उत्प्रेक्ष्यते सोऽनेन प्रकारेण साधारणीकृतो निमित्तमित्यवोचामासकृत् ॥

एवं क्वचिदुपात्तो धर्मो विषयविषयिसाधारण्यविरहादचारुत्वाद्वा स्वयमुत्प्रेक्षां साक्षादुत्तम्भयितुमनीशोऽपि तदुत्तम्भनपटुधर्मान्तरोत्तम्भनेनाकूल्यसंपादनादुपयुज्यते ॥

यथा—

**मधुभेदनजययात्रादुन्दुभिनिनदैस्तथा दिशो व्याप्ताः । श्रोत्रेन्द्रियसृष्टिकथादूरमिवासीद्यथाऽखिलं भुवनम् ॥ ४६७ ॥**

अत्र दिशां दुन्दुभिनिनदव्याप्तिरूपो धर्म उपात्तो भुवनस्य श्रोत्रेन्द्रियसृष्टिकथादूरत्वसंभावनायां वैयधिकरण्येनाप्रयो-

जकोपि स्वप्रयोज्यश्रवणविवरातिमात्रपरिपूरणप्रयुक्तश्रावणज्ञान-सामान्यशून्यत्वस्य तथाविधसंभावनानिमित्तस्योत्तम्भनेनानुकू-ल्यसंपादनादुपयुज्यते ॥

विषयोप्युपात्तः पूर्वोदाहरणेषु प्रतिपादित एव । कचि-द्विषयोऽपह्नुतोपि भवति । यथा—

**मत्सुहृदिन्दुसगोत्रं मुखमिदमित्युत्पलेन नीले-न । सत्कर्तुमर्पितं तद्दळमेकं हरिमुखे नु तिलक-निभात् ॥ ४६८ ॥**

अत्र तिलकरूपविषयापह्नवो नीलोत्पलैकदळतादात्म्यसं-भावनादार्ढ्यायेति ध्येयम् ॥

इयमेव सापह्नवोत्प्रेक्षेति प्रतिपादयताऽलंकारसर्वस्वकृता स्व-रूपोत्प्रेक्षामात्रमुदाजह्रे । कुवलयानन्दचित्रमीमांसयोस्तु हेतुफ-लोत्प्रेक्षे अपि सापह्नवे दर्शिते । तत्र स्वरूपोत्प्रेक्षा अनुपदमेवो-दाहृता । यथावा—

**कनति किल रत्नगर्भास्तन इव पवनोदरंभरि-गिरीन्द्रः । चूचुकमिव हरिकपटान्मेचकममृतं ददा-ति निजमुखतः ॥४६९॥**

अमृतं पयः निश्श्रेयसं च निजमुखतः स्वाग्रभागात् । पक्षे स्वेनैवोपायेन । उपायस्थानानिविष्टेनेति भावः । 'मुखं निस्सरणे वक्त्रे प्रारम्भोपाययोरपि' इति मेदिनी । 'उपायस्स्वप्राप्तेरुपनिष-दधीतस्स भगवान्' इति ह्यन्वगृह्यताचार्यैः । यत्र हरित्वम-पह्नुतं तत्रैव चूचुकसंभावनाच्छुद्धापह्नुतिगर्भत्वम् । इवशब्दम-हिम्ना संभावनं कपटशब्दप्रयोगादपह्नवो गम्यते ॥

यथावा—

वदनेन्दावमृतरसास्वादात्काटवजिहासया लग्ने।
निम्बदळे एते नन्वम्ब भ्रूयुगमिषेण तव मन्ये ॥

अत्र भ्रूयुगळनिह्नवेन निम्बदळयुगळस्वरूपोत्प्रेक्षेयम् । यद्यपि अमृतरसास्वादनिमित्तककाटवजिहासाहेतुकत्वमपि निम्बदळयोर्जगज्जननीवदनेन्दुलग्नतायामुत्प्रेक्ष्यते । तथाऽपीयमुक्तस्वरूपोत्प्रेक्षाया अङ्गतया निबद्धेति न प्राधान्यमस्याः । यत्र ह्युत्प्रेक्षाद्वयमङ्गाङ्गिभावेन निबध्यते तत्र प्रधानभूतयैवोत्प्रेक्षया व्यपदेशो न्याय्य इत्यवोचाम, तन्न प्रस्मर्तव्यम् ॥

यथावा—

स्वयमपि मुक्ताभिख्यां लब्धुं रदनावळिच्छलाद्वज्राः । जाने मुखरुचिजलधौ जाता मातस्तवास्यशुक्तिपुटे ॥ ४७१ ॥

मुक्ता इत्यभिख्यां अभिधानं शोभां च । अत्र रदनावळिनिह्नवेन वज्रतादात्म्योत्प्रेक्षायाः मुक्ताभिख्यां लब्धुमिति फलोत्प्रेक्षा मुखरुचिजलधावित्यादिरूपकं चाङ्गतया निबद्धे ॥

यथावा—

ब्रह्मादिपावयित्र्याः पादजता नोचिता ममेति तव । वदने स्मितमिषतोऽभून्मन्ये गङ्गा भुजङ्गशिखरीन्दो ॥ ४७२ ॥

ब्रह्मादेः ब्राह्मणादिवर्णस्य चतुर्मुखादिकस्य च । पावयित्र्याः मम पादजता शूद्रता चरणजन्यता च नोचितेति गङ्गा

स्मितमिषतः तव वदने अभूत् अजनि । भगवन्मुखजन्यत्वे ब्राह्मण्यसिद्ध्या पादजताप्रयुक्तसंकोचोऽपयातीति भावः ॥

यथावा—

**अनुकूलनगभिदोऽमी कनकाद्रौ सर्वतो विसर्पन्तः । तारकजयिशरजाता न निर्झराः किंतु निर्जरा नूनम् ॥ ४७३ ॥**

अनुकूलं कूले । विभक्त्यर्थेऽव्ययीभावः । ये नगाः तरवः तान् भिन्दन्ति उन्मूलयन्तीति तथोक्ताः । पक्षे अनुकूलः नगभित् वज्री येषां ते तथोक्ताः । कनकाद्रौ शेषशैले सुमेरौ च । सर्वतः विसर्पन्तः प्रवहन्तः संचरन्तश्च । तारकाण्युडूनि जयन्तीति तथोक्तानि शराणां काशकुसुमानां जातानि वृन्दानि येषु ते तथोक्ताः । पक्षे तारकमसुरविशेषं जयतीति तथोक्तः शरजातः षण्मुखः येषां ते तथोक्ताः अमी दृश्यमानाः वस्तुविशेषाः निर्झराः वारिप्रवाहाः न किंतु निर्जरा एव नूनम् । इयं श्लेषसंपादितसाधारण्या शुद्धापह्नुतिगर्भा जातिस्वरूपोत्प्रेक्षा ॥

यथावा—

**अश्रीनिवासनिलयानसर्वतीर्थाश्रयानवेदमयान् । अन्यानचलानहिगिरिरवधीरयतीव हरिनिनादमिषात् ॥ ४७४ ॥**

हरीणां सिंहानां निनादमिषात् । इयं सापह्नवक्रियास्वरूपोत्प्रेक्षा । इयं पर्यस्तापह्नुतिगर्भाऽपि संभवतीति दीक्षिताः ॥

यथा—

स्थानेऽयमेव विष्णुर्जानेऽखिलभुवनवर्धनादिन्दुः। इन्दोस्तु स्फुटमस्मादधरत्वं स हि पदेऽस्य परिचरति ॥ ४७५॥

अखिलस्य भुवनस्य सलिलस्य न तु जलधिसलिलमात्रस्येति भावः। पक्षे जगतः वर्धनात् उत्सेचनात् समेधनाच्च अयं विष्णुरेव इन्दुरिति स्थाने युक्तं जाने इन्दोस्तु अस्मात् विष्णोः अधरत्वं निहीनत्वं स्फुटम्। हि यस्मात् सः इन्दुः अस्य विष्णोः पदे चरणे सप्तम्येकवचनं, तेन अकारे परतः प्रकृतिभावशङ्काया नावकाशः। परिचरति शुश्रूषते। तस्मादधरत्वं व्यक्तमित्यर्थः। पक्षे अस्मात् वक्ष्यमाणादेतस्माद्धेतोरित्यर्थः। अधरत्वं धरासंबन्धवैधुर्यं स्फुटम्। कुत इत्यत्राह—स इति। हि यस्मात् सः इन्दुः अस्य पदे विष्णोः पदे व्योम्नीत्यर्थः। परिचरति परितस्संचरतीति। अत्र प्रसिद्धेन्दौ इन्दुत्वापह्नवेन सकलभुवनाभिवर्धनान्निमित्ताद्भगवति तत्संभावनेतीयं पर्यस्तापह्नुतिगर्भा॥

यथावा—

विबुधैकाधारश्श्रीवृषगिरिरच्युत न मेरुरिति मन्ये। यदि विबुधैकाधारो मेरुस्स्यात्स हि न कर्बुरमयस्स्यात् ॥ ४७६ ॥

विबुधानां देवानामेकेषामेवाधारः शिवभागवतवत्समासः। पक्षे विबुधानां मुख्याधारः। मेरुः विबुधैकाधारो यदि स्यात् तदा सः कर्बुरमयः रक्षोमयः न स्यात् सुवर्णमय इति तु

वस्तुस्थितिः । 'कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः' इति मेदिनी । अत्र मेरौ विबुधैकाधारत्वनिह्नवेन श्रीवृषगिरौ तदुत्प्रेक्षा पर्यस्तापह्नुतिगर्भा उत्तरार्धोक्ततर्करूपयुक्तिपूर्वा ॥

यथावा—

**इन्दुर्न द्विजराजो द्विजराजो वाह एव तव नूनम् । स हिनस्ति विप्रयोगिन एष तु कमलाक्ष विप्रमोदकरः ॥ १७७॥**

हे कमलाक्ष! इन्दुः द्विजराजः 'तस्मात्सोमराजानो ब्राह्मणाः' इति श्रुत्युक्तरीत्या ब्राह्मणानां राजा न, किंतु तव वाह एव गरुत्मानेव द्विजराजः उक्तोऽर्थः । नूनम् । अत्र हेतुः स इत्यादिः । सः इन्दुः विप्राश्च ते योगिनश्च तानेव हिनस्ति अतः कथं स द्विजराजो भवेदिति भावः । विरहिणो हिनस्तीति वास्तवार्थः । एषः तव वाहस्तु विप्राणां मोदकरः, पक्षे वीनां पक्षिणां प्रमोदकरः तस्य तदीश्वरत्वात् । अतोऽयमेव द्विजराज इति भावः । अत्रेन्दौ द्विजराजत्वापह्नवेन गरुत्मति तदुत्प्रेक्षा सहेतुकपर्यस्तापह्नुतिगर्भा ॥

यथावा—

**न सहस्रांशुर्द्युमणिः कौस्तुभमणिमेव तर्कये द्युमणिम् । स परिष्कुरुतेऽनन्तं दिवैव नक्तंदिवमयं तु ॥ १७८॥**

सः सहस्रांशुः अनन्तं अन्तरिक्षं दिवैव परिष्कुरुते । अयं कौस्तुभमणिस्तु अनन्तं अन्तरिक्षं भगवन्तमिति तु वास्तवार्थः।

नक्तंदिवं रात्रिंदिवं परिष्कुरुत इति हेतूक्तिः । अत्र सहस्रांशौ द्युमणित्वापह्नवेन कौस्तुभमणौ तदुत्प्रेक्षा पूर्ववदेव सहेतुकपर्यस्तापह्नुतिगर्भा । सर्वेष्वप्युदाहरणेषु श्लेषसंकीर्णत्वम् ॥

हेतूत्प्रेक्षायां सापह्नवत्वं यथा—

**कमलास्तनसुहृदयमिति नूनं शृङ्गारिशेखरोऽहिगिरौ । वसति सदा नित्ययुवा मृषैव जगदुद्दिधीर्षयेति वचः ॥ ४७१ ॥**

अत्र भगवतश्शेषाद्रिनित्यनिवासे जगदुद्दिधीर्षाया हेतुत्वमपह्नुत्य तत्र कमलास्तनसुहृत्त्वहेतुकतायास्संभावनात्पर्यस्तापह्नुतिगर्भा हेतूत्प्रेक्षा ॥

फलोत्प्रेक्षायां सापह्नवत्वं यथा—

**श्रितकामधेनुतां त्वं श्रीवेंकटनाथ सूचयितुमेव ।
अधिवत्सं श्रीवत्सं धत्से नूनं न तत्परिष्कर्तुम् ॥**

श्रीवत्सं श्रीयुक्तं तर्णकम् । पक्षे तन्नाम लाञ्छनम् । अधिवत्सं वक्षसि । 'उरो वत्सं च' इत्यमरः । अत्र श्रीवत्सधारणं प्रति फले वक्षःपरिष्कारे फलत्वनिह्नवपूर्वकमाश्रितकामधेनुत्वसूचनरूपफलोत्प्रेक्षा पर्यस्तापह्नुतिगर्भेत्यलं दूरधावनेन ॥

अलंकारसर्वस्वकारादयस्तु 'कचित्पदार्थान्वयवेलायां सादृश्याभिधानादुपक्रान्ताऽप्युपमा वाक्यार्थतात्पर्यसामर्थ्यादुत्प्रेक्षायां पर्यवस्यति' इत्याहुः । तदनुसृत्य प्रागुल्लेखालंकारप्रकरणे 'मृगमदतिलकति' इति पद्ये उपक्रान्ताऽप्युपमा औचित्यादुत्प्रेक्षायां पर्यवस्यतीत्यवोचाम ॥

यथावा—

जङ्घे तव जलजेक्षण जगतीविजिगीषुमनसिजनिषङ्गौ । वपुरुपवनप्रसारिततरुणिमलावण्यकरिकरायेते ॥ ४८१ ॥

हे जलजेक्षण! तव जङ्घे वपुरेव उपवनं तस्मिन् प्रसारितौ तरुणिमलावण्ये एव करिणौ तयोः करौ ताविवाचरत इत्यर्थः। अत्र करिकरायेते इत्यत्र उपमानात्कर्तुस्सुबन्तादाचारे विहितेन क्यङा आमुखे उपमाप्रतीतावपि वपुरुपवनेत्यादिविशेषणनैरर्थक्यादौचित्येनोत्प्रेक्षायामेव पर्यवसानम् ॥

एवमुपमावाचकानां निभादिशब्दानां कल्पबादिप्रत्ययानां च प्रयोगेऽपि सामग्र्या औचित्यादुत्प्रेक्षायामेव पर्यवसानं बोध्यम् ॥

यथा—

नरहरिभुजाशिखरशिखानखांशवो दितिजहृदयगा व्यरुचन् । तदसुमरुदशनसत्वरविसृमरफणिफणशिखास्त्ररसननिभाः ॥ ४८२ ॥

वाङ्माधुर्याध्ययनोपसन्नपीयूषवीचिदेश्यमिदम् । वदनविधूत्सङ्गलुठज्ज्योत्स्नाशिशुकल्पमम्ब तव हसितम् ॥ ४८३ ॥

नाभीहृदकृतमज्जनमदनगजोदस्तहस्तदेशीया । कौस्तुभभानूत्सङ्गच्युतयमुनाभाऽच्युतस्य रोमाळी॥

रसगङ्गाधरकारस्तु क्यङाचारकिबादीनामप्युत्प्रेक्षाप्रतिपादकत्वमेवाभाणीत् । तस्यापि पर्यवसाने उत्प्रेक्षाप्रतिपादकत्व एव तात्पर्यम् । यद्वा उत्प्रेक्षावाचका एव ते स्युः । यथोक्तं कल्पतरौ—

कल्पदेशीयदेश्याद्याः स्पर्धिप्रतिभटादयः ।
निभवद्वादयश्चापि क्वचित्संभावनापराः ॥

इति । विस्तरस्तु हंससंदेशरसास्वादिन्यां 'विष्णोर्वासात्' इति पद्यव्याख्यावसरे कृतोस्माभिः । एवं रूपकादिप्रतीतिस्थलेष्वप्युत्प्रेक्षायां पर्यवसानं संभवतीति चित्रमीमांसायां प्रतिपादितम् । तदुदाहरणानि विस्तरभयान्नेह प्रदर्श्यन्ते इत्यलम् ॥

ननु गम्योत्प्रेक्षाया अलंकारताकथनमनुचितं, तस्या अलंकारध्वनित्वादिति चेच्छ्रूयताम्—यत्र विषयविषयिनिमित्तेषूपात्तेषु केवलमिवादिवाचकानुपादानमात्रेणोत्प्रेक्षाऽवगम्यते साऽतिमात्रस्फुटतया वाच्यायमानत्वादलंकारतामेवाश्नुते । यथोदाहियत 'ईप्सिततसरा निकामं' इत्यादि । यत्र चोत्प्रेक्षणीयस्य विषयिणोऽप्यनुपादानं निबद्धेन वस्तुना अलंकारेण वा उत्प्रेक्षाऽवगम्यते तत्रैवोत्प्रेक्षाध्वनिः ॥

यथा—

**उपगूढां हरिणीं श्रियमुरसा कृष्णेन वीक्ष्य वृषशैले । अभिवीक्षन्ते शश्वत्कृष्णं निजवल्लभं वनहरिण्यः ॥ ४८५ ॥**

कृष्णेन भगवता उरसा उपगूढां हरिणीं 'हिरण्यवर्णां हरिणीम्' इति हरितवर्णतया श्रुतां हरितशब्दात् 'वर्णादनुदा-

त्तात्' इत्यादिना ङीप्सान्नियोगशिष्टस्तकारस्य नकारादेशः, णत्वं च 'हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या' इत्यमरः। श्रियं लक्ष्मीं वीक्ष्य वनहरिण्यः विपिनकुरङ्ग्यः। कृष्णं कृष्णसारमित्यर्थः। 'विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपः' इति भीमसेनादिशब्दवदुत्तरपदभूतसारशब्दस्य लोपः। अत एव 'कृष्णाजिनेन संवृण्वन्' इत्यादयः प्रयोगा निर्विचिकित्साः। निजवल्लभं ईक्षन्ते। श्रीरिव वयमपि हरिणीशब्दवाच्याः भगवानिवास्मद्वल्लभोऽपि कृष्णशब्दाभिलपनीय इति पश्यन्तीति भावः। अत्र हरिणीकर्तृककृष्णसारकर्मकवीक्षणेन वस्तुना श्रीकृष्णवक्षस्समालिङ्गिता हरिणीशब्दाभिलाप्या श्रीरिव स्वयमपि तथा बुभूषव इवेत्युत्प्रेक्षा ध्वन्यते॥

यथावा –

प्रणिनंसया सुमनसां मौळिषु नमितेषु सुमनसस्तत्स्थाः। पुर एव ततोऽप्यपतन्नुरगधराधरशिरोमणेश्चरणे ॥४८६॥

सुमनसां देवानाम्। तत्स्थाः मौळिस्थाः सुमनसः कुसुमानि। अत्र सुमनःपतनेन वस्तुना नामसाम्यप्रयुक्तस्पर्धया त्रिदशमौळिभ्योऽप्यग्रे स्वयमेव प्रणिनंसव इवेत्युत्प्रेक्षा ध्वन्यते॥

निर्वेलभवदवानलखर्वेतरतापविलुलिता मनुजाः। त्वद्वदनसुधाजलनिधिमुद्वीक्षन्ते मुहुर्मुराराते ॥४८७॥

अत्र रूपकेण निमङ्क्षुमिवेत्युत्प्रेक्षा ध्वन्यते॥

यथावा—

**अतिवेले भवजलधावरिविजयायावितीर्यमा-णपथे। रघुकुलवीर तटस्थं वीक्षन्ते वानरा इव नरास्त्वाम् ॥ ४८८ ॥**

अतिवेले भवजलधौ पूर्वं जलधाविवेति भावः। अरीणां कामादीनां द्विषां दशाननादीनामिवेति भावः। विजयाय अवितीर्यमाणः अदीयमानः पन्थाः मार्गः उपायश्च येन तथोक्ते सति, तटस्थं तीरस्थं उदासीनं च त्वां वानरा इव नराः पश्यन्ति कुतोऽयममुं भवजलधिमपि शरैश्शोषयितुं सेतुना बन्द्धुं वा नोद्युङ्क्ते इति वीक्षन्त इति भावः। अत एव रघुकुलवीरेति संबोधनम्। अत्र रूपकोज्जीवितया उपमया जलधिमिव भवजलधिमपि शुशोष इषव इवेति वा विबन्धयिषव इवेति वा उत्प्रेक्षा ध्वन्यते॥

यथावा—

**उद्वेलतरं सुतरामुत्सिक्ते तव यशःपयोराशौ। उरगधराधरभास्वन्नुडुपं क्षणमपि न मुञ्चति ज्योत्स्ना ॥ ४८९ ॥**

ज्योत्स्ना कौमुदी उडुपं इन्दुमेव प्लवं न मुञ्चति स्त्रियो हि नितरां भीरव इति भावः। अत्रापि रूपकेण निमज्जनभयेनेवेत्युत्प्रेक्षाया ध्वनिः॥

ननु अध्यवसायमूलताया अतिशयोक्त्युत्प्रेक्षयोस्तुल्यत्वात्कथमनयोर्भेद इति चेत् शृणु—अध्यवसायो नामाभिन्नत्वेन प्रतिभासनम्। स च द्विविधः सिद्धस्साध्यश्चेति। यत्र

लक्ष्यमाणगुणसंबन्धाद्विषयिणो विषयगतत्वेनारोप्यमाणतया भिन्नस्यापि विषयिणो विषयक्रोडीकारेण प्रवृत्तत्वादभिन्नतया प्रतीतिः तत्राध्यवसायस्सिद्धः । एतदाश्रयेणातिशयोक्तेः प्रथमः प्रकारोऽनुपदमेव प्रदर्शयिष्यते । यत्र पुनरुपात्तविषयत्वाद्विषयिणो भिन्नत्वेन प्रतिभानं तत्र व्यञ्जनव्यापारेणाभिन्नत्वप्रतीतेस्साध्यमानत्वात्साध्यः । एतदवलम्बनेन प्रवृत्तिस्संभावनमूहो वितर्क इत्याद्यपरपर्यायाया उत्प्रेक्षाया इत्यनयोर्भेद इति ॥

इत्यलंकारमणिहारे उत्प्रेक्षासरश्चतुर्दशः.

## अथातिशयोक्तिसरः.

**निगीर्य विषयं यत्र विषय्येवाध्यवस्यते ।**
**रूपकातिशयोक्तिं तामलंकारविदो विदुः ॥**

आरोपविषयस्य मुखादेर्विशिष्य तद्वाचकपदोपादानेन विनाऽपि विषयिवाचकैश्चन्द्रादिपदैरेव ग्रहणं विषयनिगरणम् । तत्पूर्वकं विषयस्य विषयिरूपतयाऽध्यवसानं यत्र तत्र रूपकातिशयोक्तिः । विषयिरूपतयेत्यत्र रूपं च अभेदताद्रूप्यान्यतरत् । एवं च अनुपात्तविषयधर्मिकाहार्यनिश्चयविषयीभूतं विषय्यभेदताद्रूप्यान्यतरद्रूपकातिशयोक्तिरिति लक्षणं बोध्यम् । रूपकवारणायानुपात्तेति । तत्र हि विषयो मुखादिरुपात्तः । अयमेव हि रूपकादस्यां विशेषोऽतिशय उच्यते । भ्रान्तिमद्वारणायाहार्येति । उत्प्रेक्षावारणाय निश्चयेति । अत्र च विषयविषयिणोरेकपदोपात्तत्वान्नोद्देश्यविधेयभावस्संभवति । विभिन्नपदोपात्तयोरेव तदवतारात् ॥

यथा—

तिमिरनिरासपटीयान्कमलानामावहन्महामोदम् । कर्दममर्दयतितमां दुर्दममम्भोजबान्धवो द्युतिमान् ॥ ४८९ ॥

अत्र हि अम्भोजबान्धवत्वेन कौस्तुभस्य निगरणे तिमिरनिरासेत्यादिपादद्वयगते द्वे विशेषणे तदनुग्रहार्थे विषयविषयिणोस्साधारणधर्मतया साक्षादुपात्ते । तृतीयमपि तृतीयचरणगतमशाब्दिकानां नये । शाब्दिकानां तूपात्तया अम्भोजबान्धवाभिन्नकर्तृकया कर्दममर्दनक्रिययोन्नीतं तादृशकर्तृत्वं साधारणधर्मत्वेन तयोर्विषयविषयिणोस्स्थितम् । प्रथमे चरणे अज्ञानस्य तिमिरत्वेन, द्वितीये जननयनानां कमलतया, तृतीये दुरितस्य कर्दमत्वेन च निगरणं तस्मिन्नेवानुग्राहकतया । एवंच सावयवेयमतिशयोक्तिः ॥

यथा वा—

तिमिराधःकृतमिन्दुं कमलयुगं तत्र सततसंफुल्लम् । कलयन्ती भाति घने माया देवस्य काऽप्यविज्ञेया ॥ ४९० ॥

अत्र तिमिरेन्दुकमलघनमायारूपैर्विषयिभिश्चिकुरवदननयनभगवच्छ्रियो विषया निगीर्णाः । अत्र 'जनकस्य कुले जाता देवमायेव निर्मिता' इत्येतदनुसन्धेयम् । माया नाम विचित्रकार्यकरी शक्तिः ।

यत्र ह्यनुग्राहकं न निगरणान्तरं किंतु शुद्धं साधारणधर्मादि सा निरवयवा ॥

यथा—

**मधुरान् सुधाप्रवाहान्विधुशिशिरानबुधजनदुरवगाहान् । प्रमुषिततापव्यूहान् प्रविगाह्य जहामि सकलसंमोहान् ॥ ४११ ॥**

अबुधजनैः अज्ञजनैः देवेतरैश्च दुरवगाहान्, अत्र श्रीनिवासदयाविभवा निगीर्णाः । प्रथमोदाहरणे अम्भोजबान्धवपदेन साध्यवसानलक्षणया शक्यलक्ष्योभयानुगततिमिरनिरासपटीयस्त्वाद्युपात्तधर्मपुरस्कारेणोपस्थिते कौस्तुभे शक्त्युपस्थितस्याम्भोजबान्धवत्वविशिष्टस्याभेदसंसर्गेणान्वयः । शक्त्युपस्थितयोः कृतीष्टसाधनतयोरिव शक्तिलक्षणाभ्यामुपस्थितयोरप्येकपदार्थयोस्तात्पर्यवशादन्वयाभ्युपगमे बाधकविरहात् । एवं च अम्भोजबान्धवाभिन्नः तिमिरनिरासपटीयस्त्वादिमानिति बोधादियमभेदातिशयोक्तिरित्युच्यते । एवमनन्तरोदाहरणयोरपि । नन्वेवं सति किमस्य रूपकाद्वैलक्षण्यमिति चेन्नैवम् । रूपके विषयिभेदव्याप्यस्य विषयतावच्छेदकस्य भानेन वैलक्षण्यस्य स्पष्टत्वात् । यदा तु नाभेदभाने तात्पर्यं किंतु भेदभाने तदा ताद्रूप्यस्यैव बोधात्ताद्रूप्यातिशयोक्तिर्वक्ष्यते । अत्र लक्षणे विषयं निगीर्य विषय्येवाध्यवस्यत इति सामान्यत एवोक्तेश्शुद्धसाध्यवसानलक्षणया अभेदोपचारेऽप्यतिशयोक्तिरेव ॥

तत्र धर्मे धर्म्यभेदाध्यवसायो यथा—

**सकलजगदग्रगण्यं सरसिजनयनस्य परिणतं पुण्यम् । अस्मादृशां शरण्यं विस्मयनीयं विभातु लावण्यम् ॥ ४१२ ॥**

अत्र लावण्याश्रये भगवत्यां लक्ष्म्यां लावण्यारोपः । चन्द्रोऽयमित्यादौ सादृश्यस्याध्यवसाननिमित्तत्वाद्गौणत्वम् । आश्रयत्वादिसंबन्धस्य निमित्तत्वे तु शुद्धत्वमिति विवेकः । 'भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा । गौणौ शुद्धौ च विज्ञेयौ' इति काव्यप्रकाशोक्तेः । इमौ भेदौ सारोपसाध्यवसानरूपभेदावित्यर्थः । तस्मात्सादृश्यातिरिक्तसंबन्धेन यत्रान्यस्मिन्नन्यतादात्म्यारोपः सा शुद्धसाध्यवसानेति ध्येयम् ॥

कार्ये कारणाभेदाध्यवसानं यथा—

**वचनरसधुतमरन्दं वपुरसितिम्नाऽवधीरितमिलिन्दम् । वन्दारुदेववृन्दं विनतानन्दं कमप्यहमविन्दम् ॥ ४१३ ॥**

अत्र विनतानन्दरूपकार्ये तत्कारणभगवदभेदाध्यवसायः । 'हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते' इत्युक्तलक्षणहेत्वलंकारविशेषस्य तु शुद्धसारोपलक्षणामूलकत्वेनोपात्तविषयकं 'लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः' इत्यादिकं विषय इति नानेनैव कार्यकारणाभेदरूपशुद्धसाध्यवसानलक्षणामूलकेन गतार्थता ॥

सारोपा तत्र यत्रोक्तौ विषयी विषयस्तथा ।
सारोपा द्विविधा सेयं गौणी शुद्धेति भेदतः ॥
सादृश्यात्मकसंबन्धरूपा गौणीत्युदीर्यते ।
शुद्धा तदन्यसंबन्धरूपा सा तु निगद्यते ॥
मुखेन्दुर्नयनानन्दस्तन्व्या विजयते तराम् ।
निगीर्य विषयं यत्र विषय्येव निबध्यते ॥

तत्र साध्यवसाना स्याद्गौणी शुद्धेति सा द्विधा।
सरोजकाहळीरम्भासैकताकाशभूधरैः ॥
शङ्खेन्दुतिमिरैस्सृष्टा वल्ली कामिजनोत्सवः ॥

इति काव्यदर्पणे सोदाहरणे सारोपसाध्यवसानलक्षणे प्रदर्शिते। अनुपदपद्योदाहृतकाव्यप्रकाशकारिकार्थस्फुटप्रतिपत्तये काव्यदर्पणलक्षणोदाहरणम्। एतेन 'प्रत्यासत्तिरसौ रसस्य जयति त्रस्यत्कुरङ्गेक्षणा' इत्यलंकारकौस्तुभकृतो विश्वेश्वरस्य कार्यकारणाभेदाध्यवसानलक्षणातिशयोक्तेरुदाहरणमचतुरश्रं वेदितव्यम्। तत्र त्रस्यत्कुरङ्गेक्षणेति विषयस्योपादानेनातिशयोक्तेर्विषयनिगरणप्रधानाया अविषयत्वादुक्तरीत्या हेत्वलंकारपार्थक्यावश्यंभावेन तदुदाहरणताया एवास्य युक्ततया उदाहरणान्तरप्रदर्शनस्यैवोचितत्वात्। 'अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सह' इति साहित्यदर्पणोक्तहेत्वलंकारलक्षणं च 'हेतुहेतुमतोरैक्यं हेतुम्' इति प्रदर्शितचन्द्रावलोकलक्षणाविसंवाद्येव अभेदेन अभेदारोपेण अभिधा उक्तिरिति तदर्थात्। यत्पुनः—

तारुण्यस्य विलासस्समधिकलावण्यसंपदो हासः।
धरणितलस्याभरणं युवजनमनसो वशीकरणम् ॥

इति तदीयमुदाहरणं, तत्तु 'लक्ष्मीविलासा विदुषाम्' इत्यादिसंप्रतिपन्नोदाहरणविसंवादितयाऽनादर्तव्यम्। अत्र वशीकरणहेतुर्नायिकावशीकरणत्वेनोक्तेति विवृततया साध्यवसानलक्षणामूलकातिशयोक्त्युदाहरणार्हत्वात्तस्य। कौस्तुभकारस्तु—"अभेदेनाभिधाहेतुः' इति साहित्यदर्पणोक्तहेत्वलंकारस्यातिशयोक्तावेवान्तर्भावः" इत्यभाणीत् ॥

साहित्यदर्पणोक्तेति हेत्वलंकारं विशिंषतोऽस्यायं भावः—'युवजनमनसो वशीकरणम्' इति तदीयोदाहरणे साध्यवसा-

नलक्षणामूलकहेतुहेतुमदभेददर्शनेन तल्लक्षणस्य तथाविधहेतुहेतुमदभेदतत्परतावगमात्तादृशहेत्वलंकारस्यातिशयोक्तावेवान्तर्भावः न तु सारोपलक्षणामूलकहेतुहेतुमदभेदस्यापीति ॥ उल्लेखादीनामप्यत्रैवातिशयोक्तौ कौस्तुभकृताऽन्तर्भावनं तु नातीव रमणीयमिति स्वयमेव विदां कुर्वन्तु सहृदया इति विरम्यते विस्तरभयात् ॥

मालारूपाऽपीयं दृश्यते यथा—

सौराज्यं जगतीनां सौमङ्गल्यं सुपर्वसुदतीनाम् ।
सौभाग्यमहिगिरिपतेस्सौलभ्यं हन्त नयनयोर्भजते ॥ ४१४ ॥

अत्र सौराज्यादिरूपकार्येषु तत्कारणभगवदभेदाध्यवसायः ॥

अत्रातिशयोक्तौ रूपकविशेषणं रूपके प्रदर्शिताः प्रकारा अत्रापि संभवन्तीति सादृश्येन प्रदर्शनार्थम् । मुख्यरूपकाभेदस्यातिशयोक्तावसंभवाद्रूपकपदं 'मासमग्निहोत्रं जुहोति' इत्यत्राग्निहोत्रपदवत्तद्धर्मातिदेशेन तत्सदृशपरम् । तेनात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति विधाद्वयं तत्राप्याधिक्यन्यूनतानुभयविभागश्चेत्येतत्सर्वं विभावनीयम् ॥

तत्राधिकाभेदरूपकातिशयोक्तिर्यथा—

अञ्जनगिरिशिखरोल्लसदञ्जनमद्भुतमिदं नृणां जातु । सञ्जितमिह लोचनयोर्व्यञ्जयति सदा स्वमेव निधिम् ॥ ४१५ ॥

अत्र कदाचिल्लोचनासञ्जितात्स्वातिरिक्तनिधिव्यञ्जकात्प्रसिद्धाञ्जनादञ्जनाभेदाध्यवसितस्य कदाचिल्लोचनगोचरीकृतस्य भगवतस्सततमपि स्वाभिन्ननिधिव्यञ्जकतोक्तेराधिक्यं द्रष्टव्यम् ॥

यथा वा—

जाम्बूनदाद्रिशृङ्गे जम्बूरद्भुततमेयमुद्भूता । न फलप्रत्ययलोपो यस्याः परिदृश्यते कदाचिदपि ॥

जाम्बूनदाद्रेः शेषागिरेः शृङ्गे अद्भुततमा इयं जम्बूः जम्बूत्वेनाध्यवसितो भगवानिति भावः । उद्भूता अवतीर्णा । अद्भुततमत्वमेवाह—नेत्यादि । यस्याः जम्ब्वाः फलैः प्रत्ययः प्रथितत्वं तस्य लोपः फलवत्ताप्रसिद्ध्यभाव इत्यर्थः ॥

प्रत्ययः प्रथितत्वेऽपि सनादिज्ञानयोरपि ।
आचारे शपथे रन्ध्रे विश्वासाधीनहेतुषु ॥

इति मेदिनी । भगवत्पक्षे तु—फलप्रत्ययस्य तत्तदभीप्सितप्रयोजनसिद्धिविषयकविश्वासस्येत्यर्थः । लोपः कदाचिदपि न परिदृश्यते । प्रसिद्धजम्ब्वाः कदाचित्फलप्रसिद्धिलोपस्संभवेदपि अस्यास्तु न तथा । एतदाश्रितानामीप्सितं फलं सिध्यति वा न वेति विशयेन विश्वासलोपः कदाचिदपि न भवेदिति भावः । पक्षे जम्बूः जम्बूशब्दः अर्थगतस्य स्त्रीत्वस्य शब्दे आरोपः । अद्भुततमा । तदेवाह—नेति । यस्याः पञ्चम्येकवचनमिदम् । फलप्रत्ययलोपः कदाचिदपि न परिदृश्यते । जम्बूशब्दात्फलरूपेऽर्थे वैकारिके अणि 'जम्ब्वा वा' इति वैकल्पिके लुप्यनुशिष्टेऽपि अस्याः जम्बूशब्दव्यक्तेः कदाचिदपि फलप्रत्ययलोपः फलार्थविहिताणप्रत्ययलोपः न दृश्यत इत्यद्भुतत्वमिति भावः ।

वास्तवार्थस्तूक्त एव । अत्र प्रसिद्धजम्ब्वपेक्षया प्रसिद्धजम्बूशब्दापेक्षया च जम्बूत्वेनाध्यवसितस्य भगवत उक्तरीत्याऽऽधिक्यं श्लेषमूलकं द्रष्टव्यम् । शब्दपरार्थान्तरं चमत्कारातिशयाय ॥

न्यूनाभेदरूपकातिशयोक्तिर्यथा —

**सौशील्यमुख्यशुभगुणराशीन्भवतो हरे श्रुतिशतोक्तान् । अविदन्तः पशवोऽमी विनदन्त्यचतुष्पदा वृथा दिक्षु ॥ ४१७ ॥**

अत्र पश्वभेदेनाध्यवसितानामचतुष्पदत्वोक्तेर्न्यूनता ॥ अनुभयाभेदरूपकातिशयोक्तिस्तु 'तिमिरनिरासपटीयान्, मधुरान्सुधाप्रवाहान्' इति प्रागुदाहृतपद्यद्वये द्रष्टव्या ॥

अधिकताद्रूप्यरूपकातिशयोक्तिर्यथा —

**नीरन्ध्रगुणप्रोतं स्फारं विशदयति निजरुचिभिरमृतम् । अन्यदिदमसितरत्नं धन्यं मां विदधदहिशिखरिखनिजम् ॥ ४१८ ॥**

नीरन्ध्रैः सान्द्रैः गुणैः सर्वज्ञत्वादिभिः प्रोतं संवलितम् । अन्यत्र नीरन्ध्रं सुषिरविरहितं तथाऽपि गुणेन तन्तुना प्रोतं स्यूतं चेति विशेषणोभयपदकर्मधारयः । अहिशिखरिखनिजं न तु सिंहलाकरजं अन्यत् लोकविलक्षणं इदं असितरत्नं महानीलरत्नं तत्त्वेनाध्यवसितश्रीनिवास इति यावत् । मां धन्यं कृतार्थं धनं लब्धारं च विदधत्सत् निजरुचिभिः स्वविषयकप्रीतिविशेषैः अन्यत्र स्वप्रभाभिः । अमृतं स्वानुभवरूपं मुक्त्यैश्वर्यं विशदयति विवृणुते । पक्षे अमृतं क्षीरं विशदयति पाण्डुरं

करोति, न तु नीलम् । अत्र 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति श्रुत्यर्थोऽनुसंधेयः । तथाहि 'एष परमात्मा यं साधकं प्रार्थयते तेन लभ्यः । प्रार्थनीयेन पुंसा लभ्य इत्यर्थः । तत्प्रार्थनीयत्वं च तत्प्रियतमस्यैव पुंसः । तत्प्रियतमत्वं च तत्प्रीतिमत एव । ततश्च भगवद्विषयिणी उपासकस्य प्रीतिः भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवति । तस्योपासकस्य एष आत्मा परमात्मा स्वां तनुं स्वरूपं विवृणुते प्रकाशयति स्वानुभवं प्रयच्छति' इत्यभाषि । वृणुत इति पाठेऽपि स एवार्थः । अत्र अन्यदित्यनेन निर्ज्ञातनीलरत्नाद्वैलक्षण्यं नीरन्ध्रेत्यादिना नीरन्ध्रगुणप्रोतत्वाहिशिखारेखानिजत्वामृतविशदीकरणैस्सरन्ध्रगुणप्रोतात्सिंहलाकरजात् क्षीरनीलतानिष्पादकात्तस्मादाधिक्यं च दर्शितम् ॥

एवम्—

कानपि भजे विलासान्कण्ठीरवभूधरेन्द्रकृतवासान् । लक्ष्मीकटाक्षदासान् ललितशरच्चन्द्रचन्द्रिकाहासान् ॥४९९॥

इत्यादावप्यधिकताद्रूप्यरूपकातिशयोक्तिर्द्रष्टव्या ॥

न्यूनताद्रूप्यरूपकातिशयोक्तिर्यथा—

पन्नगसन्नगनेतुस्सन्नयविन्नैरुदीरितं नाम । वाचाऽपि नाभिदधतो नीचाः केऽमी पिशाचका दृश्याः ॥५००॥

सन्नयो वेदान्तशास्त्रं विन्नः विचारितो यैः तथोक्तैः 'रदाभ्याम्' इति निष्ठातस्य पूर्वस्य दस्य च नत्वं 'विन्नवित्तौ वि-

चारिते' इत्यमरः । आहिताग्न्यादेराकृतिगणत्वान्निष्ठायाः परनिपातः । नामापि वाचेत्यन्वयः । अत्र केऽमी पिशाचका इत्यनिर्ज्ञातत्वप्रकाशनान्निर्ज्ञातपिशाचकेभ्यो वैलक्षण्यं, दृश्या इत्यनेनादृश्येभ्यस्तेभ्यो न्यूनता च दर्शिते ॥

अनुभयताद्रूप्यरूपकातिशयोक्तिर्यथा—

**शितिकण्ठकृतनिषेवणमविकुण्ठस्पर्शनप्रथितविभवम् । कमपि घनं फणिशिखरिणि कलयामि घनागमान्तसंलक्ष्यम् ॥५०१॥**

शितिकण्ठेन महादेवेन मयूरैश्च कृतनिषेवणं अविकुण्ठं निरर्गळं स्पर्शनं वितरणं तेन, पक्षे अप्रतिहतेन मारुतेन 'स्पर्शनो मारुते पुंसि दाने स्पर्शो नपुंसकम्' इति मेदिनी । प्रथितविभवं, घनाः ये आगमान्ताः उपनिषदः तैः संलक्ष्यं ज्ञेयं तेषु प्रतिपाद्यं वा । 'तं त्वौपनिषदम्' इति श्रुतेः । पक्षे घनागमस्य प्रावृषः अन्ते मध्ये संलक्ष्यं दृश्यम् । कमपि घनं कलयामि ॥

यथावा—

**सुमनःकदम्बतान्तेश्शमनं तपनोद्भवोष्मभयदमनम् । कमपि घनाघनमेनं कलयन्नुज्जीवनं लभे नूनम् ॥५०२॥**

सुमनसां मालतीनां कदम्बानां नीपानां च पक्षे देवनिवहानां 'सुमनाः पुष्पमालत्योः,' 'कदम्बं निकुरुम्बे स्यान्नीपसिद्धार्थयोः पुमान्' इति च मेदिनी । तान्तेः ग्लानेः शमनम् । तपनात् भानोः उद्भवतीत्युद्भवः पचाद्यच् । य ऊष्मा तस्मात्

भयं तस्य दमनं ग्रीष्मातपोष्मप्रशमयितारमित्यर्थः । पक्षे तपनो नरकविशेषः 'तपनो ग्रीष्मभल्लातनरकान्तरभास्कराः' इति रत्नमाला । तस्मात् उद्भवो य ऊष्मा तापः तद्भयस्य शमनम् । यद्वा—तप्यते अनेनेति तपनः तापहेतुः उद्भतश्चासौ भवस्संसारः तस्मिन् ये ऊष्माणः आध्यात्मिकादयस्तापाः तद्भयशमनमित्यर्थः । कमपि घनाघनं श्रीनिवासमिति यावत् । कलयन् सेवमानः उज्जीवनं उत्कृष्टं सलिलं, पक्षे उत्तरणमिति यावत्। लभेय नूनमिति संभावनायाम् । अत्र 'स्वोज्जीवनेच्छा यदि ते' इत्यादिकं स्मर्तव्यम । उदाहरणद्वयेऽपि कमपीत्यनेन लोकसिद्धघनाद्वैलक्षण्यं प्रदर्शितं न त्वाधिक्यं न्यूनता वेत्यनुभयताद्रूप्यरूपकातिशयोक्तिरियं श्लेषोज्जीविता ॥

इदं सर्वं कुवलयानन्दाद्यनुरोधेन । जगन्नाथस्तु 'विषयिवाचकपदस्य विषये साध्यवसानलक्षणायाश्शक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकबोधत्वं कार्यतावच्छेदकम् । एवंच निगरणे सर्वत्र विषयितावच्छेदकधर्मरूपेणैव विषयस्य भानं न विषय्यभिन्नत्वेनेति स्थिते अभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यमयुक्तम्' इत्यभाणीत् । अत्र वैद्यनाथः—'इदं प्रौढिविलसितं, शक्यतावच्छेदकस्य लक्ष्ये पूर्वमप्रतीतत्वेन तद्विशिष्टतया लक्षणाया असंभवात् । यद्धर्मविशिष्टे शक्यसंबन्धग्रहस्तद्धर्मप्रकारकलक्ष्योपस्थितेस्समानप्रकारकशाब्दबोधे हेतुत्वात्, लक्षणापरिहार्याया अनुपपत्तेस्तदवस्थत्वाच्च । एवमपि तात्पर्यवशात्तादृशबोधाङ्गीकारे तद्वशादेव शक्याभेदप्रकारकबोधेऽपि बाधकाभावान्मात्रपदेन विषयतावच्छेदकस्यैव व्यावर्तनात्' इत्यवादीत् ॥

ननु 'अञ्जनगिरिशिखरोल्लसत्' इत्याद्युक्तोदाहरणेषु इद-मिति विषयस्योपादानात्कथमतिशयोक्तिरिति चेच्छ्रूयताम्—इदं-त्वस्य विषयिविशेषणत्वेन विवक्षायामतिशयोक्तिः। विषयवि-शेषणत्वविवक्षायां तु रूपकमेव। एवं गौरयमित्यादावपि। अत एवातिशयोक्तावभेदोऽनुवाद्य एव न विधेय इति प्राचामुक्ति-स्संगच्छते। अत एव च प्रकाशकृता 'नयनानन्ददायीन्दो-र्बिम्बमेतत्प्रसीदति' इत्यतिशयोक्तिरूपकसंकरस्योदाहरणं च यो-युज्यत इति दिक्॥

सापह्नवातिशयोक्तिः—

**उक्ता सापह्नवा सैव यद्यपह्नुतिगर्भिता॥**

सैव रूपकातिशयोक्तिरेव अपह्नुतिगर्भिता चेत्सापह्नवाति-शयोक्तिरुक्ता भवति। तथाच सापह्नवत्वनिरपह्नवत्वभेदेनाति-शयोक्तिर्द्विविधेति ध्येयम्॥

यथा—

**अधिफणिधरणिधराग्रं निधिरक्षय्योऽखिलोप-जीव्योऽस्ति। धनदावसथे निधिरिति मनुते सर्वोऽ-पि कियदिदं मौग्ध्यम्॥५०३॥**

अत्र अधिफणिधरणिधराग्रं निधिरित्यतिशयोक्तिः धनदा-वसथस्थो न निधिरित्यपह्नुतिगर्भा। निह्नवोऽत्र मौग्ध्योपन्यासा-दर्थसिद्धः॥

यथावा—

**मृगपतिनगशिखरलगज्जगदान्ध्यं हरति खलु**

जगच्चक्षुः । अन्धान्कतिचन रचयन्निन्धां न रविर्भवेज्जगच्चक्षुः ॥५०४॥

जगतामान्ध्यमज्ञानमिति यावत् । कतिचन दिवान्धादीन् । इन्धां दीप्यताम् । "ञि इन्धी दीप्तौ" । कर्तरि लोट्प्रथमैकवचनम् । अत्र मृगपतिनगशिखरलगज्जगच्चक्षुरित्यतिशयोक्तिः न रविर्जगच्चक्षुरिति पर्यस्तापह्नुतिगर्भा ॥

यथावा—

गारुत्मतमिदमेव हि गारुत्मतशैलशिरसि यद्रत्नम् । अज्ञास्तद्गारुत्मतमाहुः प्रथते यदश्मगर्भ इति ॥५०५॥

गरुत्मतोऽयं गारुत्मतः स चासौ शैलः शेषाद्रिरेव 'वेदाद्रिर्गरुडाद्रिश्च' इति तन्नामसु पाठात् । तस्य शिरसि शिखरे यद्रत्नं भगवानिति यावत् । गारुत्मतगिरिशिखरभवत्वादिदमेव गारुत्मतरत्नं, अज्ञास्तु अश्मा गर्भो जन्मस्थानं यस्य सः अश्मगर्भः केवलप्रस्तरजन्य इति यद्रत्नं प्रथते तद्गारुत्मतमाहुः । केवलाश्मजन्यस्य गारुत्मतरत्नतामभिदधाना मूढा एवेत्यर्थः । अत्र गारुत्मते तद्धर्मनिह्नवेन भगवति तदध्यवसानादपह्नुतिगर्भाऽतिशयोक्तिः । अज्ञा आहुरित्यनेन निह्नवस्यार्थिकत्वम् । अत्राद्ये उदाहरणे केवलापह्नुतिगर्भत्वं, इतरयोस्तु जगच्चक्षुष्ट्वगारुत्मतत्वानिह्नवे युक्तिप्रदर्शनात्सहेतुकपर्यस्तापह्नुतिगर्भत्वामिति ध्येयम् । एवंच सापह्नवातिशयोक्तावपि द्वैविध्यमभ्युपगन्तव्यम् ॥

भेदकातिशयोक्तिर्यत्प्रस्तुतस्यान्यतोच्यते ॥

प्रस्तुतस्यान्यत्वं अभेदेऽपि भेदः स यत्र लोकोत्तरत्वप्रतिपत्त्यर्थो वर्ण्यते सा भेदकातिशयोक्तिरित्यर्थः । अभेदे भेदवर्णनं चाहार्यं ज्ञेयम् । एवमुत्तरत्रापि । तेन भ्रान्तौ नातिप्रसङ्गः ॥

यथा—

**अन्यदिदं तव मौग्ध्यं कन्येऽब्धेरन्यदेव वैदग्ध्यम् । येन जगज्जनिहेतुर्नूनं क्रीतः फणीन्द्रगिरिकेतुः ॥५०६॥**

मौग्ध्यं सौन्दर्यं 'उदययौवना मुग्धा लज्जाविजितमन्मथा' इत्युक्तलक्षणावस्थाविशेषो वा, वैदग्ध्यं चातुर्यम् ॥

यथावा—

**अमृतमयी काचिदियं सृष्टिर्यस्त्वद्गुणान्गृणाति जनः । न प्राकृतजनगन्धं सहते जात्वपि यदृच्छयाऽप्येषः ॥५०७॥**

यः जनः त्वद्गुणान् गृणाति स्तौति, इयं अमृतमयी निःश्रेयसमयी काचित्सृष्टिः । इयमिति विधेयसृष्टिशब्दानुरोधिनी स्त्रीलिङ्गता । अत एव एष त्वद्गुणस्तोता जनः जात्वपि यदृच्छयाऽपि प्राकृताः प्रकृतिपरिणामभूताः पक्षे पामराः ये जनाः 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः' इत्यमरः । तेषां गन्धं संबन्धं न सहते । इयं प्राकृती चेत्सृष्टिः कथं प्राकृतजनगन्धं न सहेत अतो मन्ये नैषा प्राकृती सृष्टिः किंत्वन्यैवामृतमयीति भावः । अत्र प्रसिद्धप्राकृतसृष्ट्यन्तर्गतस्यापि भगवदुपश्लोकितृजनस्य तद्भेदो वर्णितः ॥

यथावा—

अन्या मनसो वृत्तिर्मान्यानां देव तावकीना-
नाम् । आहंकारिकतां यत् क्वचिदपि नोपाश्नुते कथं-
चिदपि ॥५०८॥

आहंकारिकतां सात्त्विकाहंकारपरिणामतां, पक्षे अहंकार-
मर्हतीत्याहंकारिकं तस्य भावं 'तदर्हति' इति ठक् । अहंयु-
त्वमित्यर्थः । अत्राहंकारिकस्यापि भागवतमनसस्तद्भेदो वर्णि-
तः । आद्या शुद्धा । अन्ये श्लेषसंकीर्णे ॥

असंबन्धेऽपि संबन्धो वर्णोत्कृष्ट्यै यदीर्यते ।
संबन्धातिशयोक्तिं तामलंकारविदो जगुः ॥

संबन्धश्चाभेदभिन्नत्वे सत्यन्यत्वाद्यानिरूपितो ग्राह्यः । तेन
रूपकातिशयोक्त्यादिप्रभेदेषु नातिप्रसङ्गः ॥

यथा—

रुचिरतरनिजतनूरुचिनिचयप्राचुर्यमेचकितभु-
वनम् । चलदलकविलसदलिकं कलयाम्यनिला-
शनाद्रिपतितिलकम् ॥५०९॥

अत्राखिलभुवनस्य श्रीनिवासदिव्यविग्रहरुचिमेचकितत्वासं-
बन्धेऽपि तत्संबन्धोक्तिः ॥

यथावा—

वयमपि कतिपयदिवसैः पयसिजनयनाङ्घ्रिधू-
ळिधुतजाडिमाः । स्त्रीत्वं स्फुटयेम स्वकमित्यहि-
गिरिपतिशिलाः प्रमोदन्ते ॥५१०॥

जडिमा अचेतनत्वमित्यर्थः । धुतजाडिमा इत्यत्र 'डाबुभाभ्याम्' इति डाप् । स्त्रीत्वं स्फुटयेम सांप्रतं स्ववाचके शब्दे शास्त्रमात्रसमधिगम्यमास्त स्त्रीत्वं, इतःपरं भगवच्चरणरेणुव्यतिकराविनिर्धूतप्रस्तरभावाः 'स्तनकेशवती नारी' इत्युक्तलक्षणं लौकिकस्त्रीत्वं चार्थगतं क्रमेण प्रकाशयेम गौतमशापाद्ग्रावभावभागहल्येवेति भावः । अत्राहिगिरिशिलानामुक्तविधप्रमोदासंबन्धेऽपि तत्संबन्धकल्पनं वर्ण्योत्कर्षार्थम् ॥

यथा वा—

**रविनिभकौस्तुभतेजसि विसरति परितस्तवान्तिके नमताम् । द्युसदां किरीटमणयो हरे पराः कीटमणय एवासन् ॥ ५११ ॥**

हे हरे! पराः श्रेष्ठाः किरीटमणयः कीटमणयः खद्योता एवासन् रविनिभकौस्तुभतेजसि खद्योतवत्तिरोहितरुचोऽभवन्नित्यर्थः । 'खद्योते स्यात्कीटमणिर्ज्योतिर्मालीं तमोमणिः' इत्यभिधानचिन्तामणिपरिशिष्टे तिर्यक्काण्डे । पक्षे अपरा इति छेदः अपगतरेफाः किरीटमणयः कीटमणयः इति निष्पन्ना इत्यर्थः । रेफोत्तरमकारोच्चारणं मुखसुखार्थं, रेफरूपव्यञ्जनमात्रापसारणे ककारोत्तरवर्तिन इकारस्य रेफोत्तरश्रुतस्य ईकारस्य च सवर्णदीर्घे तथात्वस्य दर्शनादिति भावः । अत्र किरीटमणीनां कीटमणित्वासंबन्धेऽपि तत्संबन्धकल्पनम् । अर्थान्तरं तु चमत्कारातिशयाय ॥

**योगेऽप्ययोगोऽसंबन्धातिशयोक्तिरुदीर्यते ॥**

संबन्धेऽप्यसंबन्धकल्पनमसंबन्धातिशयोक्तिरित्यर्थः ।

यथा—

दर्वीकरगिरिशेखरसर्वेश्वरसेवनेन धन्यतमाः ।
अपुनर्भवाय केचिन्निपुणाः स्पृहयन्ति नो कदाचिदपि ॥ ५१२ ॥

अपुनर्भवाय निश्श्रेयसाय । अत्र मोक्षस्पृहासंबन्धेऽपि तदसंबन्धवर्णनम् ॥

यथा वा—

सारोहश्रममहिगिरिपारोदितमेनमर्चयन्तु नराः । अवरोहश्रमवर्जितमवरोधैस्समभिहार्चयन्त्यमराः ॥ ५१३ ॥

अत्रावरोहश्रमसंबन्धेऽपि तदसंबन्धवर्णनम् ॥

हेतुकार्यसहत्वे स्यात्सेयमक्रमपूर्विका ॥

कार्यकारणयोस्तुल्यकालत्वे सेयमतिशयोक्तिरक्रमशब्दपूर्विका अक्रमातिशयोक्तिस्स्यात् ॥

यथा—

संदधति चापमाराद्विषतां नयनानि संदधति चापम् । अञ्जनगिरिपतिपाणौ गां जहति च तेऽपि गां जहति ॥ ५१४ ॥

अञ्जनगिरिपतिपाणौ चापं कार्मुकं संदधति अधिज्यं कुर्वति सति द्विषतां नयनानि चापं धनुस्संदधति । पक्षे च आपमिति छेदः । नयनानि च आपं अपां समूहं संदधति । अ-

त्याहितेन बाष्पं मुञ्चन्तीत्यर्थः। तस्मिन् भगवत्पाणौ गां बाणं जहति सति ते द्विषन्तोऽपि गां बाणं, पक्षे भुवं च जहति त्यजन्तीत्यर्थः । संदधति जहतीत्यत्र संपूर्वकाद्धातेर्जहातेश्च लट्प्रथमपुरुषबहुवचनम् । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः। अत्र यदा धनुषस्सज्जीकरणं तदैव द्विषतां बाष्पमोचनं, यदा बाणत्यागस्तदा क्षोणीत्याग इति हेतुकार्ययोस्सहत्वं वर्णितम् ॥

यथा वा—

**संभ्रमतश्चलति पुरस्संभ्रमतश्चलति भवति रिपुनिवहः। चक्रं त्यजति च चक्रं त्यजति मृगेन्द्राचलेन्द्रमौळिमणे ॥५१५॥**

भवति त्वयि संभ्रमतः रिपुनिरासे त्वरया अत्यादरेण वा पुरः अग्रतः चलति सति रिपुनिवहोऽपि संभ्रमतः उक्तोऽर्थः, पक्षे आवेगाद्भयाद्वा 'संभ्रमस्त्वरा' इत्यमरः, 'संभ्रमोऽत्यादरे भीतावावेगे' इति रत्नमाला च। पुरः अग्रतः स्वनगराच्च चलति। त्वयि चक्रं सुदर्शनं त्यजति प्रयुञ्जाने सति रिपुनिवहोपि चक्रं सुदर्शनं राष्ट्रं च त्यजति मुञ्चति लोकान्तरं गच्छतीति भावः। 'चक्रं चये जलावर्ते रथाङ्गे राष्ट्रसैन्ययोः' इति रत्नमाला। अत्र यदा भगवतो रिपुनिग्रहार्थं पुरश्चलनं तदैव रिपूणां नगरत्यजनं, यदा सुदर्शनप्रयोगस्तदा राष्ट्रत्याग इति कार्यकारणयोर्यौगपद्यमभिहितम् ॥

यथावा—

**कङ्कटकं विशति त्वयि वेङ्कटगिरिनाथ वैरिवि-**

जयाय । कं कटकं प्रविशाम स्वयमिति रिपवोऽ-पि संभ्रमन्तितराम् ॥ ५१६ ॥

हे वेङ्कटगिरिनाथ! त्वयि कङ्कटकं कवचं 'उरश्छदः कङ्कटकः' इत्यमरः । विशति सति रिपवोपि कङ्कटकं पक्षे कं कटकं गिरिनितम्बं प्रविशेमेति संभ्रमन्तितराम् । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । अत्रापि कवचप्रवेशगिरिनितम्बप्रवेशयोर्यौगपद्यं दर्शितम् ॥

हेतुप्रसक्तिमात्रेण कार्यं चेद्विनिबध्यते ।
चपलातिशयोक्तिस्सा निपुणैर्विनिगद्यते ॥

हेत्वभावेऽपि हेतुप्रसक्तिमात्रेण कार्यवर्णनं चपलातिशयोक्तिरित्यर्थः । प्रसक्तिर्ज्ञानम् ॥

यथा—

काञ्चन सपद्ममाला लीला विहरन्ति पद्मवन-लोलाः । आवासेषु तदेषां श्रीवासस्पिषेविषा यदा येषाम् ॥५१७॥

अत्र श्रीनिवाससेवाभावेऽपि तदिच्छामात्रेण भक्तजनावासेषु श्रीविहाररूपकार्यं वर्णितम् । अत्र श्रीर्लीलात्वेनाध्यवस्यते॥

यथावा—

त्वयि जागरं विविक्षति जातु रणेनोत्सुके मुराराते । जागरमाविशति सदा रणरणकेन स्वयं द्विषन्निवहः ॥५१८॥

हे मुराराते! त्वं जातु कदाचित् रणेनोत्सुके समरे उद्युक्ते 'प्रसितोत्सुकाभ्यां तृतीया च' इति रणशब्दात्तृतीया। अत एव जागरं कवचं 'जागरः कवचोऽस्त्रियाम्' इत्यमरः। विविक्षति प्रवेष्टुमिच्छति न तु प्रविष्टे सति द्विषन्निवहः रणरणकेन भयसंभ्रमेण सदा न तु कदाचित् जागरं कवचं निद्राक्षयं च विशति प्राप्नोति। अत्र कवचसन्नद्धत्वरूपहेत्वभावेऽपि तदिच्छामात्रेण रिपूणां निद्राक्षयरूपकार्यं वर्णितम्॥

अत्रोदाहरणद्वयेऽपि प्रासङ्गश्रीनिवाससेवनयुद्धसन्नद्धत्वादिकारणविरहेऽपि सिषेविषुगृहाधिकरणकश्रीविहरणद्विषत्कर्तृक जागरणप्राप्तिरूपकार्योदयवर्णनाद्विभावनालंकारेणैव चमत्कृतेर्न चपलातिशयोक्तिरित्यलंकारान्तरमभ्युपेयम्, 'अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम्' इति लाक्षारसासेचनरूपकारणविरहेऽपि रक्तिमलक्षणकार्योदयवर्णनलक्षणविभावनातो वैलक्षण्याभावात्। अत एव नैनां व्यवजह्रिरे प्राञ्चः। दीक्षितास्तु—विभावनायां कारणाभावो वाच्यः, अत्र कारणप्रसक्तिकथनेन कारणाभावो गम्य इत्येतावन्मात्रेण विच्छित्तिविशेषसद्भावमनुसंधायालंकारान्तरमाहुः॥

**हेतोः कार्यस्य च स्याच्चेत्पौर्वापर्यविपर्ययः।**
**अत्यन्तातिशयोक्तिं तामाहुः काव्यविचक्षणाः॥**

यथा—

**एनांसि दवीयांसि श्रेयांसि च पुरत एव भूयांसि। पश्चान्नृणां रसज्ञा वेङ्कटनाथाभिधामृतरसज्ञा॥५१९॥**

यथावा—

उद्रिक्तरजास्तापस्सर्वपथीनः प्रशाम्यति पुरैव।
वर्षति कामं पश्चाद्घनस्स कृष्णो वृषाद्रिशिखरस्थः ॥ ५२० ॥

सर्वपथान्व्याप्नोति सर्वपथीनः 'तत्सर्वादेः पथि' इत्यादिना व्याप्नोतीत्यर्थे खः। सर्वतोमुख इत्यर्थः। उद्रिक्तं रजः गुणविशेषः पांसुश्च यस्मिन् सः तथाभूतः तापः आध्यात्मिकादिः ग्रैष्मश्च पुरैव शाम्यति। पश्चात् वृषाद्रिशिखरस्थः घनः सकलकल्याणगुणसान्द्रः कृष्णो भगवान् पक्षे कृष्णः श्यामलः घनः मेघः कामं वर्षति ईप्सितार्थं प्रदत्ते। पक्षे पर्याप्तं यथा स्यात्तथा वर्षति सिञ्चतीत्यर्थः॥

यथावा—

प्रथमतरमेव तमसां वलयं विलयं प्रयाति विनतानाम्। पश्चात्तेषु प्रसरति परिस्फुरन्पद्मिनीसखालोकः ॥ ५२१ ॥

तमसां अज्ञानानां तिमिराणां च। पद्मिनी श्रीः कमलिनी च तस्यास्सखा भगवान् भानुश्च तस्य आलोकः कटाक्षः प्रकाशश्च। 'पद्मिनी करिणीस्त्रीश्रीसरोऽञ्जनलिनीषु च' इति रत्नमाला। उदाहरणत्रये भगवन्नामोच्चारणवर्षणपद्मिनीसखालोकप्रसरणानां कारणानां पश्चाद्भावः एनोदूरीभवनतापशमनतमोविलयनानां कार्याणां प्राथम्यं च वर्णितमिति लक्षणानुगतिः। आद्या शुद्धा, द्वितीयतृतीये तु श्लेषसंकीर्णे इति विशेषः। एतास्तिस्रोऽप्यतिशयोक्तयः कार्यशैघ्र्यप्रत्यायनार्थाः॥

अथोक्तेषु प्रभेदेषु अनुगतप्रवृत्तिनिमित्तविरहात्कथमतिशयोक्तिपदवाच्यत्वमिति चेदत्राहुः—तावत्प्रभेदान्यतमत्वमेव सर्वानुगतमतिशयोक्तिपदप्रवृत्तिनिमित्तं तदेव च सामान्यलक्षणमिति प्राञ्चः। अन्ये तु—संबन्धे असंबन्धः असंबन्धे संबन्ध इति भेदद्वयं नातिशयोक्तिः ईदृशातिशयस्य रूपकदीपकोपमापह्नुत्यादिषु स्वभावोक्तिभिन्नेषु प्रायेण सर्वेष्वलंकारेषु सद्भावात्। न हि यथाऽवस्थितवस्तुकथनेऽस्ति काचिद्विच्छित्तिः, कार्यकारणपौर्वापर्यविपर्ययस्यापि तेनैव व्याप्ततया भेदान्तरतानापत्तेश्च। तस्माद्विषयिणा निगीर्याध्यवसानं विषयस्य तस्यैवान्यत्वं यद्यादिशब्दैरसंभविनोऽर्थस्य कल्पनं कार्यकारणपौर्वापर्यविपर्ययश्चेत्येतदन्यतमत्वमतिशयोक्तित्वमित्याहुः। नव्यास्तु उपमानेनोपमेयस्य निगीर्याध्यवसानमेवातिशयोक्तिः। प्रकारान्तरे त्वतिरिक्तालंकारान्तरकल्पनमेवोचितम्। न ह्येतच्चतुष्टयासाधारणातिशयोक्तिलक्षणं संभवि, येनैकधर्मावच्छिन्नत्वेनैकालंकारतोच्येत। न चैतदन्यतमत्वमेव सर्वानुगतमस्तीति वाच्यम्। विच्छित्तिवैलक्षण्यसद्भावेऽन्यतमत्वस्याप्रयोजकत्वात्। अन्यथा उपमानरूपकादिकतिपयान्यतमत्वं सकलान्यमत्वं वाऽतिशयोक्तिलक्षणं विधाय उपमादीनामप्येतद्भेदापादनस्य सुवचत्वात्। न चातिरिक्तालंकारकल्पने गौरवमिति वाच्यं, प्रधानोत्कर्षकत्वरूपस्यालंकारत्वस्य त्वयाऽप्यङ्गीकारात्। पदार्थान्तरस्य च मयाऽप्यकल्पनात्। अलंकारविभाजकोपाधिपरिगणनस्य च पौरुषेयत्वादिति वदन्ति॥

वस्तुतस्तु—रूपकभिन्नत्वे सति चमत्कृतिजनकाहार्यारोपनिश्चयविषयत्वमेवातिशयोक्तिसामान्यलक्षणम्। रूपकवारणाय सत्यन्तं, भ्रान्तिवारणायाहार्येति। उत्प्रेक्षानिरासाय निश्चयेति।

रूपकातिशयोक्तावभेदस्य द्वितीये प्रभेदेऽन्यत्वस्य तृतीये संब न्धस्य चतुर्थे असंबन्धस्य पञ्चमे सहत्वस्य षष्ठे हेतुप्रसक्ति-जन्यत्वस्य सप्तमे पूर्वापरत्वयोश्च तथाविधारोपविषयत्वस्य स-द्भावात्सर्वत्र लक्षणानुगतिः । न चैवंविधारोपस्य रूपकस्वभा-वोक्तिव्यतिरिक्तेष्वलंकारेषु प्रायशस्सत्त्वादतिप्रसङ्ग इति वाच्यं इष्टापत्तेः । चमत्कृतौ प्रधानभूतस्यालंकारान्तरस्याङ्गतयाऽतिश-योक्तेरवस्थानेऽपि तथा व्यपदेष्टुमनर्हत्वात् । प्रधानभूतालंका-रस्यैव व्यपदेशार्हत्वाच्च । अत एव काव्यप्रकाशकृता विशे-षालंकारप्रस्तावे "सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणत्वे-नावतिष्ठते, तां विना प्रायेणालंकारत्वाभावात् । अत एवोक्तं—

सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ।
यत्नोस्यां कविभिः कार्यः कोऽलंकारोऽनया विना ॥" इति ॥

दण्डिनाऽप्युक्तम्—

अलंकारान्तराणामप्येकमाहुः परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥ इति ॥

इत्यभिहितामित्यपि वदन्ति ॥

इत्यलंकारमणिहारेऽतिशयोक्तिसरः पञ्चदशः.

---

अथ तुल्ययोगितासरः—

## वर्ण्यानामेव वाऽन्येषामेव वा धर्म एककः ।
## अन्वितो वर्ण्यते यत्र तत्र स्यात्तुल्ययोगिता ॥

वाशब्दो व्यवस्थितविकल्पार्थः । तथाच प्रकृतानामेव वा अप्रकृतानामेव वा यत्रैकधर्मान्वयित्वं सा तुल्ययोगिता, तुल्यानां

प्राकरणिकाप्राकरणिकान्यतरमात्रनिबन्धनसादृश्यवतां योगिता एकधर्मान्वयित्वं यत्रेति व्युत्पत्तेः। वर्ण्यानामित्यादौ बहुत्वं द्वयोरप्युपलक्षणम्। धर्मश्चात्र चमत्कारीति ज्ञेयम्। एवंच अनेकप्रस्तुतमात्रसंबद्धैकचमत्कारिधर्मानेकाप्रस्तुतमात्रसंबद्धैकधर्मान्यतरत्वं लक्षणं बोध्यम्। 'मुखं विकसितस्मितं' इत्यादावतिप्रसङ्गवारणायानेकेति। तत्र च मुखप्रेक्षितादिरूपानेकवर्ण्यसंबद्धो नैको धर्म इति तन्निरासः। दीपकवारणाय मात्रेति। प्रस्तुताप्रस्तुतप्रभेदसाधारण्यायान्यतरत्वनिवेशः। धर्मश्चात्र प्रायशो गुणक्रियारूप एव संभवतीति प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगितेत्युक्तं कुवलयानन्दे। तदेतदुपलक्षणं धर्ममात्रस्य। एतच्चोदाहरणावसरे स्फुटीभविष्यति। औपम्यं चात्र गम्यं, तत्प्रयोजकस्य समानधर्मस्योपादानाद्वाचकाभावाच्च। अत एवालंकारिकाणामपि सादृश्यं पदार्थान्तरं, न तु साधारणधर्मरूपमिति विज्ञायते। अन्यथा औपम्यस्यात्र गम्यत्वोक्तेरनुपपत्तेः। केचित्तु—सादृश्यभाव एवातिरिक्तः। सादृश्यं तु तत्तत्साधारणधर्मात्मकमेव। स चेवादिपदानां शक्यतावच्छेदकः तत्तत्साधारणधर्मवाचकैस्तु तत्तत्साधारणधर्मस्य स्वशक्यतावच्छेदकतत्तद्धर्मरूपेण बोधनेऽपि सादृश्यभावरूपेण बोधो व्यञ्जनसाध्य एवेत्यपि वदन्ति॥

यथा—

**अश्रूदञ्चति चक्षुषि वपुषि च पुलकोऽथ संभ्रमो मनसि। अञ्जनभूधरधामन्नञ्जलिरपि मस्तके तव स्मरताम्॥५२२॥**

अत्र भागवतानां वर्ण्यत्वात्तदीयत्वेन प्रकृतानां कर्तृणामश्रुप्रभृतीनामुदञ्चनक्रिया समानधर्मत्वेनोपात्ता। चक्षुरादीनामधिक-

रणानां च । कारकाणां सर्वेषां क्रियान्वयित्वस्य तुल्यत्वात् । एवमष्टानां क्रियारूपधर्मैक्येऽपि द्वयोर्द्वयोरेवौपम्यं प्रतीयते, न परस्परमष्टानाम् । तदधिकरणत्वतत्कर्तृत्वरूपे विशेषे सामान्यस्य पर्यवसानात् । तव स्मरतामित्यत्र 'अधीगर्थ' इति षष्ठी ॥

**चरणेऽम्बुजमदहरणे सोढनतैनासि मदम्ब तव मनसि । वचने च मधुररचने मृदुता लोकोत्तरा विभातितराम् ॥५२३॥**

अत्र मृदुतेति गुणः तदन्वितत्वं चरणादीनां, विभानक्रियायास्साक्षाद्धर्मिभिरनन्वयात् ॥

यथावा—

**येनाश्रितो धवलिमा विपरीतोऽकारि धवलिमा येन । तस्मिन् शङ्खे चक्रेऽप्यहिशैलपतेर्महो ज्वलति किमपि ॥५२४॥**

येन शङ्खेन धवलिमा पाण्डुरिमा आश्रितः. येन चक्रेण धवलिमा विपरीतः व्यत्यस्तः अकारि धवलिमा परास्त इति यावत् । इत्यापाततो विरोधः । धवलिमा इत्यानुपूर्व्या वैपरीत्ये मालिवध इति निष्पद्यते । प्रकृतिमात्रस्यापि मालिवधेत्यस्य सुबन्तता कल्पनीया । 'न केवला प्रकृतिः प्रयोक्तव्या' इति निषेधोऽपि कचिच्चित्रकाव्ये न दोषाय । यथोक्तं काव्यार्थचिन्तामणौ—

प्रातिलोम्यादिचित्रेषु प्रकृतेरेव हि कचित् ।
प्रयोगोऽपि न दोषाय नदी दीनो यथोच्यते ॥

इति । येन चक्रेण मालिनाम्नो राक्षसस्य वधः अकारीति तु

वास्तवार्थः। शब्दार्थयोस्तादात्म्यं न विस्मर्तव्यम्। अहिशैलपतेः शङ्खे चक्रेऽपि मह इति योजना। अत्र मह इति गुणरूपैकधर्मान्वयित्वं शङ्खचक्रयोः। यदि च 'ते पाञ्चजन्यचक्रे दीपयतश्शेषशैलनाथकरौ' इत्युत्तरार्धे पठ्यते तदा क्रियारूपो धर्मः। यदि च—'ते पाञ्चजन्यचक्रे दीप्तिं धत्तोऽद्भुतां वृषाद्रिपतेः' इत्युच्यते तदा गुणविशिष्टा क्रिया, केवलगुणेन साक्षात्संबन्धाभावात्। केवलक्रियायाश्चाहृद्यत्वात्। अत्र द्वयोरेव धर्मान्वयः॥

**वदनं नयनयुगं वा हृदयं वा नाप्रसन्नमम्ब तव। करयुगळमधरबिम्बं चरणयुगं वाऽपि भवति नानरुणम्॥ ५२५॥**

अत्र नाप्रसन्नं नानरुणमित्यभावरूपे धर्मे प्रस्तुतानां वदनादीनां करयुगळादीनां चान्वयः। अत एव लक्षणे सामान्यतो धर्म इत्येव निवेशितं न तु गुणक्रियारूपविशेषिततया। इदं च रसगङ्गाधरकृदनुरोधेन। स हि 'प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता' इति सर्वस्व कुवलयानन्दोक्तिं दूषयन् 'गुणक्रियारूपेत्युक्तिरापाततः—

शासति त्वयि हे राजन्नखण्डावनिमण्डलम्।
न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः॥

इत्यत्राभावरूपस्यैव धर्मस्यान्वयात्' इत्यभाणीत्। अन्ये तु 'शासति' इति पद्ये निश्चिन्ते नेति निश्चिन्तभेदश्शत्रुमित्रमण्डलधर्मतयोपात्तो गुणस्वरूप एव, चिन्ताभावबद्भेदस्य चिन्तानतिरिक्तत्वात्। अन्यथा चिन्ताभावाभावस्याप्यतिरिक्तत्वापत्तेः। अथ तत्रापीष्टापत्तावपि अभावस्य कथंगुणबहिर्भावः, जातिक्रियाद्रव्यातिरिक्तस्यैव 'चतुष्टयी शब्दानां प्रवृत्तिः' इति वदद्भिश्शा-

ब्दिकैस्तदनुयायिभिरालंकारिकैश्च गुणत्वाभ्युपगमादित्याहुः । अत एव जातिगुणयोर्विरोधे प्रकाशकृता 'गिरयोप्यनुन्नतियुजः' इति, विद्यानाथेनापि 'अमदस्सार्वभौमोपि' इति चोदाहृतं संगच्छते । अनुन्नतीत्यादेरभावस्यागुणत्वे तदुदाहरणासंगतिः स्पष्टैव । तस्मादभावस्यापि गुणत्वाद्धर्मस्य गुणक्रियारूपतोक्ताबप्यदोष एव । एवंच—अस्मिन्नुदाहरणेऽपि नाप्रसन्नामित्यादौ गुणरूप एव धर्म इति ध्येयम् । वस्तुतस्तु लक्षणे तेन रूपेण धर्मो निवेशितोऽस्माभिरिति न कोपि दोषः ॥

अधिफणिगिरिमणिनीरदमचञ्चलासीद्रमा च विभुता च । क्षमयाविपुलासीत्तन्मानसवृत्तिश्च तस्य करुणा च ॥५२६॥

फणिगिरिमणिर्भगवान् नीरद इव तस्मिन् अधिफणिगिरिमणिनीरदं, विभक्त्यर्थेऽव्ययीभावः । रमा अचञ्चलासीत् चञ्चलेवाचारीत्, विद्युदिवाभादित्यर्थः । चञ्चलाशब्दादाचारक्विपि लुङ्, अडागमः । विभुता ऐश्वर्यं च अचञ्चला निश्चला आसीत् अभवत् । 'अस भुवि' इत्यस्माल्लुङ् । 'अस्तिसिचोऽपृक्ते' इतीट्, 'श्नसोः' इत्यल्लोपस्याभीयत्वेनासिद्धत्वादाट् । तस्य भगवतो मानसवृत्तिः क्षमया क्षान्त्या अविपुलासीत् विपुलेवाचारीत् भूतुल्याऽऽसीदित्यर्थः । विपुलाशब्दादाचारक्विपि लुङ् पूर्ववत् । पक्षे विपुलेति छेदः । तस्य करुणा च विपुला महती आसीत् । श्रीश्रीनिवासस्यैश्वर्यक्षमाकृपाः श्रीलक्ष्मीनिवासनिबन्धना इति भावः । अत्रोभयसाधारणयोर्गुणाक्रिययोरभावाच्छब्दमात्रं श्लेषमूलेनाभेदाध्यवसानेन संपिण्डितोऽर्थो वा धर्मः ॥

यथा वा—

**दन्ताळी ग्रीवाऽपि च मुक्ताळ्या नासिता तव मुरारे। नाऽप्रमदं जातुचिदपि वक्षश्चेतश्च वारिजाक्ष तव ॥ ५२७ ॥**

हे मुरारे! तव दन्ताळी मुक्ताळ्या इति छेदः, मुक्ताहारापेक्षया नासिता नञ्शब्देन समासः असिता न भवति किंतु सिता धवळैवेत्यर्थः। ग्रीवाऽपि च मुक्ताळ्येति तृतीयैकवचनं, मुक्ताहारेण असिता असंदानिता न भवति किंतु संदानितैव 'बद्धे संदानितं मूतं मुद्दितं संदितं सितम्' इत्यमरः। हे वारिजाक्ष! तव वक्षः चेतश्च अप्रमदं अविद्यमानमानिनीकं अविद्यमानलक्ष्मीकमित्यर्थः, अविद्यमानप्रहर्षं च न, किंतु सलक्ष्मीकमेव सहर्षमेवेति भावः। अत्र सितत्वसप्रमदत्वनिषेधसंभावनाऽपि नञ्द्वयेन व्युदस्यते। यथोक्तं वामनेन—'संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति। अत्रापि पूर्वोदाहरणवदेव धर्मः, तस्याभावरूपत्वं तु विशेषः॥

क्वचिदध्याहृतोपि धर्मवाचकश्शब्दस्तुल्ययोगितां प्रयोजयति। यथा—

**दिव्यतमं रूपं तव भव्यतमा श्रीरियं च वनमाला। स्तव्यतमो मणिरच्युत भाव्यं विशयेन किं तव परत्वे ॥ ५२८ ॥**

तव परत्वे विशयेन संशयेन भाव्यं किं संदेहो न भवत्येवेत्यर्थः। अत्र परत्वसंशयक्षेपकारणतया प्रस्तुतानां दिव्यरूपादीनामस्तीति क्रियायामन्वयः। 'अस्तिर्भवन्तिपरोऽप्रयुज्य-

मानोप्यस्ति ' इत्यनुशासनात् । भवन्तिरिति लटस्संज्ञा । 'भुवो झिच्' इत्यौणादिको भवतेर्झिच्प्रत्ययः । 'झोऽन्तः' इति झस्यान्तादेशः । आस्तक्रियाया अप्रयोगेऽपि तदाक्षेपश्शीघ्रोपस्थितिकत्वात् । तर्हि प्रतिवाक्यमपि कुतो नाध्याह्रियतामिति चेन्न । लाघवादेकत्राध्याहृतस्यैवान्यत्रानुषञ्जनीयताया न्याय्यत्वात् । विश्वेश्वरीयालंकारकौस्तुभे ईदृशमुदाहरणं प्रदर्शितम् ॥

अप्रकृतानामेव यथा—

**मानववर्गो निखिलो दानववर्गश्च नमति नन्तव्यम् । अहिराजगिरिशिखामणिमत्र कथं नमदभेदवार्ता स्यात् ॥ ५२९ ॥**

नन्तव्यं 'नन्तव्यः परमइशेषी' इत्युक्तरीत्या सर्वशेषितया नमिकर्मीकरणार्हं अहिराजगिरिशिखामणिं निखिलो मानववर्गो दानववर्गश्च नमति । अत्र नमतां मानवानां दानवानां च वर्गे अभेदवार्ता कथं स्यात्, नमने अवैलक्षण्येऽपि मानवानां दानवानां च परस्परं वैलक्षण्यादिति भावः । यद्वा—अत्र नन्तव्ये भगवति अभेदवार्ता नमद्भिस्सहाभेदकथा कथं स्यात् । नन्तृनन्तव्ययोश्शेषशेषिणोरभेदायोगादिति भावः । अथवा अत्र नमतोर्मानवदानववर्गयोः मदभेदवार्ता मदो नाम कुलशीलाद्यभिमानेनान्यावधीरणहेतुश्चित्तविकारविशेषः यो ह्यरिषड्वर्गे गणितः । तस्य भेदवार्ता विदारणवृत्तान्तः कथं न स्यात् भगवत्प्रणन्तॄणां कामादिनिखिलदोषदूरीभावादिति भावः । पक्षे—अत्र मानवदानववर्गशब्दयोः मदभेदवार्ता मकारदकारयोर्वैलक्षण्यकथा कथं न स्यात् । तावन्मात्रभेदस्य दृश्यमानत्वादिति भावः । अत्राप्रकृतयोर्मानवदानववर्गयोर्नमनक्रियारूपधर्मैक्यम् ॥

यथा वा—

यत्साधुमनीषायां पररूपं स्फुरति तद्धि मार्तण्डेऽपि। आह सदाकृतिगण्यं परमेकं श्रुतिरवैमि शाब्दोक्तिश्च ॥ ५३० ॥

यत् परस्य ब्रह्मणो रूपं साधूनां योगिनां मनीषायां बुद्धौ स्फुरति,

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥

इति श्रुत्युक्तरीत्या अन्तर्यामिविग्रहविशिष्टं स्वरूपं सूक्ष्मदर्शिभिस्सूक्ष्मया बुद्ध्या ऐकाग्र्यसंपन्नया दृश्यत इत्यभिप्रायः। तद्धि तदेव 'हि हेताववधारणे' इत्यमरः। पररूपं परस्य ब्रह्मणो रूपं 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादि श्रुतं दिव्यमङ्गळविग्रहविशिष्टं स्वरूपं मार्तण्डे आदित्येऽपि स्फुरति दीप्यते। कथमनयोरैक्यं त्वया विदितमित्यत्राह—आहेति। श्रुतिः 'स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः' इति श्रुतिः सदाकृतिगण्यं सत्या आकृत्या विग्रहेण गण्यं प्रशस्यमिति यावत्। दिव्यमङ्गळविग्रहविशिष्टमित्यर्थः। परं परमात्मस्वरूपं उभयत्र विद्यमानमिति भावः। एकं अभिन्नं आह अवैमि तस्माज्ज्ञाने, वाक्यार्थः कर्म। शाब्दोक्तिश्चेममेवार्थमाह—तथाहि, पक्षे—यत् साधु सम्यगनुशिष्टं पररूपं पूर्ववर्णस्य परवर्णतापत्तिरूप एकादेश इत्यर्थः। मनीषायां मनीषाशब्दे स्फुरति प्रकाशते। तत्र मनस ईषेति विग्रहे नकारानन्तरभाविनः अस् इत्यस्य ईकाररूपपरवर्णरूपसंपत्तेः स्फुटत्वादिति भावः। तद्धि

तदेव पररूपं मार्तण्डे मार्तण्डशब्देऽपि स्फुरति । मृते अण्डे जातो मार्तण्ड इत्यत्र तद्धितप्रकृतिभूतमृतण्डशब्दे तकारोत्तरवर्त्यकारस्य तत्परभूताकाररूपैकादेशदर्शनादिति भावः । परं अनयोश्शब्दयोर्मध्ये परत्र पठितं मार्तण्डशब्दं एकं एकमेव । न तु मनीषाशब्दमपि, तस्य वक्ष्यमाणगणे पाठदर्शनादिति भावः । सर्वदा आकृतिगण्यं आकृत्या पररूपवत्त्वाकारेण गण्यं शकन्ध्वादिगणं लब्धारं 'धनगणं लब्धा' इति यत् । लब्धेति तृन्नन्तेन लाभताच्छील्यं द्योतितम् । उक्तगणे पठितुमर्हमिति यावत् । शाब्दोक्तिः शब्दशास्त्रीयं 'शकन्ध्वादिषु पररूपं वाच्यम्' इति वार्तिकमित्यर्थः । आह वदतीति अवैमि संभावये । मनीषाशब्दवन्मार्तण्डशब्दस्य गणे पाठाभावादुक्तपररूपवत्त्वाकारेणायं शकन्ध्वादिगणे पठनीय इति संभावये । अन्यथा पररूपविधायकशास्त्रान्तरादर्शनादयमसाधुतामश्नुवीतेति भावः । अत एव—शकन्ध्वादिगणपाठान्ते 'आकृतिगणोऽयं मार्तण्डः' इत्युक्तिश्च संगच्छते । शकन्ध्वादिशब्दरूपनिष्पत्त्यनुगुणं तेषु शब्देषु टेः पररूपं वाच्यमिति वार्तिकार्थः । अत्राप्रकृतयोः श्रुतिशाब्दोक्त्योराहेति क्रियायामन्वयः । श्लेषोपस्कृतेयम् ॥

यथा वा—

**सुरवरमाणिक्यं ननु सुरवरगाणिक्यमपि वृषाद्रिमणे । सेवाते तव लक्ष्मीं मागाभिन्ने इमे खलु समाने ॥ ५२१ ॥**

ननु वृषाद्रिमणे ! सुरवरमाणिक्यं इन्द्रनीलरत्नं सुरवराणां देवोत्तमानां गाणिक्यं गणिकासमूहोपि 'गणिकाया यञिति वक्तव्यम्' इति गणिकाशब्दात्समूहार्थे यञ् । 'गणिकादेस्तु गा-

णिक्यम्' इत्यमरः। तव लक्ष्मीं शोभां पक्षे श्रियमित्यर्थः। तव लक्ष्मीमित्यनेन 'विष्णोश्श्रीरनपायिनी' इत्यादिप्रसिद्धं नित्यव्यवस्थितपतिपारार्थ्यं व्यञ्जितम्। 'तवैवोचितया तव श्रिया' इत्येतदत्रानुसंहितम्। सेवाते भजेते। इन्द्रनीलप्रभाया अपि तव दिव्यविग्रहशोभा सुतरामतिशेते इति भावः। पक्षे रम्भाद्यप्सरोनिवहः किंकरीभूय तव दिव्यमहिषीं वरिवस्यतीति भावः। इमे सुरवरमाणिक्यसुरवरगाणिक्ये भिन्ने परस्परविलक्षणे मा गाः मा ज्ञासीः 'ये गत्यर्थास्ते ज्ञानार्थकाः'। कुतः? इमे समाने तावकलक्ष्मीसेवनरूपधर्मवत्तया अन्योन्यं तुल्ये खलु। पक्षे इमे सुरवरमाणिक्यसुरवरगाणिक्यरूपे पदे मागाभिन्ने इति समस्तं पदं, मागावर्णाभ्यामेव भेदवती परस्परविलक्षणे इत्यर्थः। समाने अन्यवर्णानुपूर्व्या तुल्ये खलु। अत्राप्यप्रकृतयोस्सुरवरमाणिक्यसुरवरगाणिक्ययोर्भगवल्लक्ष्मीकर्मकसेवनक्रियायामन्वयः पूर्ववत्॥

**हरिरुचिकृतपरिभवभरचिन्तादन्तुरनिजान्तरङ्गाणाम्। निश्श्वेतनताऽऽविरभूदिन्दीवरजलधरेन्द्रनीलानाम्॥ ५३२॥**

अत्र गुणः, आविर्भावक्रियायास्साक्षाद्धर्मिभिरनन्वयात्। 'चिन्तादन्तुरनिजान्तरङ्गाणि। सुतरां पर्यम्लासिषुः' इति द्वितीयतृतीयपादयोः 'इन्दीवरजलधरेन्द्रनीलानि' इति तुर्यपादस्य च कल्पने क्रिया। 'दधते निश्श्वेतनताम्' इति तृतीयपादे कृते गुणविशिष्टा क्रिया। एवमुत्तरत्र यथासंभवमूह्यम्॥

**महसा तवासुराणां मलीमसे मानसे च वदने च।**

**यदुवीर निर्मलानि त्रिदशमृगदृशां दिशां च वदनानि ॥ ५३३ ॥**

अत्र मलीमसत्वं गुणः पूर्वार्धे। उत्तरार्धे निर्मलानीति मालिन्याभावरूपो धर्मः केषांचिन्मते। वस्तुतस्तु सोपि गुण एव ॥

यथा वा—

**भूषयति वृषगिरिं त्वयि सुरासुराः किन्नरा नरा वाऽपि। नाभक्तिजुषो भगवन्नाप्राप्तमनोरथाश्च जातु स्युः ॥ ५३४ ॥**

अत्रापि पूर्वोदाहरणवद्गुण एव ॥

यथा वा—

**आदौ विरुद्धवर्णौ परस्परमथेक्षणेन ते प्रायः। भवतो रमे सवर्णौ स चञ्चरीकश्च पुण्डरीकं च ॥**

हे रमे! सः नीलवर्णत्वेन प्रसिद्धः चञ्चरीकः भ्रमरः पुण्डरीकं सिताम्भोजं च। आदौ त्वत्कटाक्षसान्निध्यात्पूर्वं परस्परं विरुद्धे वर्णे ययोस्ते तथोक्ते असितसितवर्णत्वादन्योन्यविरुद्धवर्णे इत्यर्थः। 'नपुंसकमनपुंसकेन' इत्यादिना नपुंसकलिङ्गशेषः। अथ अनन्तरं कदाचिदिति यावत्। ते तव ईक्षणेन कटाक्षवीक्षणेन सवर्णौ समानो वर्णो ययोस्ते तथोक्ते भवतः तुल्यवर्णे संपद्येते। कटाक्षस्य कालिम्ना धवलिम्ना वा असितवर्णे सितवर्णे वा भवत इति भावः। 'कटाक्षाः कालिन्दीकुवलयकचग्राहिरुचयः, विधुकिरणधारासहचरी कटाक्षाणां रेखा' इत्यादौ कटाक्षाणां द्वैवर्ण्यस्य कविसमयासिद्धत्वात्। प्राय इति संभावना-

याम् । पक्षे—चञ्चरीकपुण्डरीकपदे आदौ चतुर्वर्णात्मकयोस्त्वयोः प्रथमभागे परस्परं विरुद्धौ वर्णौ अक्षरे ययोस्ते तथाभूते भवतः। आदिभागस्थयोः चञ्च पुण्ड इत्यनयोरन्योन्यविरुद्धाकारत्वादिति भावः । अथ वर्णद्वयानन्तरं ईक्षणे न इति छेदः । नेत्येतदुत्तरान्वयि । ईक्षणे दर्शने सति सम्यग्विमर्शे सतीत्यर्थः । रमे असवर्णे इति छेदः । अस्मिन्पक्षे ते इत्येतत्प्रथमाद्विवचनम् । ते चञ्चरीकपुण्डरीके प्रायः भूम्ना न तु सर्वात्मना, अन्ते विसर्गबिन्दुभ्यामसावर्ण्यदर्शनादिति भावः । असवर्णे न भवतः, किंतु सवर्णे एव । यद्वा—ईक्षणेनेति तृतीयान्तमभिन्नपदमेवास्तु । रमे सवर्णे इत्येवास्तु, तथाच दर्शनेन विचारेण प्रायः सवर्णे एव तुल्यवर्णानुपूर्वीके एव भवत इत्यर्थः । रीकेति वर्णानुपूर्व्यास्तुल्यत्वादुभयत्रेति भावः । अत्रापि गुण एव, भवनक्रियायास्साक्षाद्धर्मिभ्यामनन्वयात् अप्रकृतयोश्चञ्चरीकपुण्डरीकयोरुक्तेन गुणेनान्वयः । इयं च वक्ष्यमाणतद्गुणालंकारसंकीर्णा शब्दपरार्थवर्णनरूपचमत्कारविशेषोपस्कृतेति विशेषः ॥

यथावा—

**भुवनं दधदप्युदरे भुवनान्तर्विंशदपीह नित्यजडम् । भगवंस्तवोपमायामब्भ्रं चेन्दीवरं च बाह्यमभूत् ॥५३६॥**

अत्रापि पूर्वोदाहरण इव गुण एव । उदराधिकरणकभुवनधारणभुवनान्तःप्रवेशाभ्यां यथाक्रममब्भ्रेन्दीवरयोर्भगवत्साम्यसंभावनेऽपि नित्यजडत्वात्तत्साम्ये तयोर्बाहिष्कृतेरिति भावः । इयं भुवनंजडशब्दश्लेषभित्तिकाभेदाध्यवसायानिर्व्यूढा ॥

**अवतो जगन्ति भगवन्भवतो महसा फणीन्द्र-गिरिभास्वन् । द्विषतां तन्महसामपि निकुरुम्बं नि-जगृहेऽप्यभासि खलु ॥५३७॥**

भवतो महसा तेजसा द्विषतां निकुरुम्बं निजगृहे निगृहीतं, निपूर्वकाद्ग्रहेः कर्मणि लिट् । अत एव अभासि द्विषन्निग्रहीतृत्वादेव तेन व्यरोचीति भावः । भासतेर्भावे लुङि चिण् । अपिस्समुच्चये । तन्महसां द्विषत्तेजसां निकुरुम्बमपि निजगृहेऽपि स्वभवनेऽपि भासो भासनं प्रकाशः, भासतेर्घञ् । सोऽस्यास्तीति भासि तन्न भवतीत्यभासि । स्वगेहेऽप्यप्रकाशं किमुतान्यत्रेति भावः । खल्विति प्रसिद्धौ । अत्राप्रकृतयोर्द्विषत्तत्तेजसोस्साधारणगुणक्रियाभावाच्छब्दमात्रं श्लेषमूलकाभेदाध्यवसानसंपिण्डितोऽर्थो वा धर्मः ॥

यथावा—

**विन्दन्परमघवत्त्वं त्वयेक्षितो जन उपेक्षितश्चाम्ब । शाम्यति महामरावत्युदीर्णतृष्णोऽभ्युदूढलेखश्च ॥५३८॥**

हे अम्ब! त्वया ईक्षितः जनः परं श्रेष्ठं च तन्मघवत्त्वं इन्द्रत्त्वं, पक्षे परमिति व्यस्तं पदम् । अत्यन्तमिति तदर्थः । अघवत्त्वं दुःखित्वं पापित्वं व्यसनित्वं वा 'अंहो दुःखव्यसनेष्वघम्' इत्यमरः । विन्दन्, अभ्युदूढाः सर्वापद्भ्यस्समुद्धृताः लेखाः देवाः येन स तथोक्तः । पक्षे अभ्युदूढाः वहनकर्मीकृताः लेखाः राजकीयपत्राणि येन स तथोक्तः । लेख-

वाहक इत्यर्थः । 'लेखो लेख्ये सुरे' इति मेदिनी । महती च सा अमरावती च तस्यां उदीर्णा तृष्णा उत्तरोत्तराभिवर्धनस्पृहा यस्य स तथोक्तः । पक्षे महति मरौ धन्वभूमौ 'समानौ मरुधन्वानौ' इत्यमरः । अत्युदीर्णा अतिमात्रप्रवृद्धा तृष्णा पिपासा यस्य स तथोक्तः । 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः । श्राम्यति एकत्र देवोद्धरणादिव्यापारैः अन्यत्र लेख्यवहनादिभिरिति भावः । अत्रापि पूर्ववदेव धर्मो ज्ञेयः ॥

इयं बिम्बप्रतिबिम्बभावेनापि दृश्यते, यथा 'अश्रूदश्रुति चक्षुषि वपुषि च पुलकः' इत्यादिप्रागुदाहृतपद्ये चक्षुर्वपुरादीनां बिम्बप्रतिबिम्बभावः । एवमन्यत्रापि द्रष्टव्यम् ॥

केचित्तु रशनारूपाऽपीयं दृश्यत इति वदन्ति ॥

सा यथा—

**मीनचकोरकुरङ्गास्संगाहन्ते वनं त्वदक्षिजिताः।**
**विद्रुमपल्लवबिम्बान्यप्यम्ब त्वदधरावधूतानि ॥**

वनमित्यत्र यथार्हमरण्यमुदकं चेत्यर्थो ग्राह्यः । विद्रुमाणामब्धिजन्यत्वाद्वनस्थितिः । मीन इव चकोरश्चकोर इव कुरङ्ग इति प्रतीतेः रशनारूपतेति ध्येयम् । वस्तुतस्त्वियं बहूनामप्रस्तुतानामेकधर्मान्वयरूपैव तुल्ययोगिता । लक्षणे वर्ण्यानामन्येषां वेति बहुवचननिर्देशात् ॥

यत्र च प्रकृतानामेव वा अप्रकृतानामेव वा क्रियाणां एककारकान्वयस्साकारकतुल्ययोगितेति जगन्नाथादयः ॥

सा यथा—

**भर्तुं जगन्ति भुवमुद्धर्तुं हर्तुं प्रपन्नजनविपदम्।**

कर्तुं श्रेयो निरवधि काकोदरगिरिपतेः कईष्टेऽन्यः॥

मतान्तरे त्वत्र वक्ष्यमाणस्समुच्चयालंकार एव॥

इयं व्यङ्ग्या यथा—

नक्तंदिवं मुरारे ज्वलतस्तव तेजसः कथा यत्र। तत्र कदाचिद्दीप्यन्को वा भानुः कृशानुरपि॥

अत्र को वेत्यनेन वाच्यलक्ष्यव्यतिरिक्तस्यागणनीयत्वस्य भानुकृशानुभ्यामप्रकृताभ्यामन्वयो व्यज्यते॥

द्वितीयतुल्ययोगिता—

हितेऽहिते च यद्वृत्तेस्तौल्यं सा त्वपरा मता।

हिताहितविषये व्यवहारतौल्यमन्या तुल्ययोगितेत्यर्थः॥

यथा—

शपतां चैद्यादीनां जपतामपि योगिनां भवन्नाम। अददाः पदं समानं वद दाक्ष्यं यदुकुमार किमिदं ते॥४४२॥

अत्र यदुवंश्यत्वेन भगवतस्संबोधनं विवक्षितार्थस्य तदवतारीयत्वज्ञापनाय। तत्रापि कुमारेत्युक्तिर्हिताहितविभागमुग्धताभिप्रायेण॥

यथावा—

कलशाब्धिसुताकमितस्सुहृदसुहृच्च त्वया कृत-

द्शमितः । वदतोऽस्ति न मे द्वेष्यो न प्रिय इति ते न चैतदाश्चर्यम् ॥५४३॥

सुहृत् अर्जुनादिः शं सुखं इतः प्राप्तः कृतः । एवमसुहृदपि । पक्षे शमितः विनाशित इत्यर्थः ॥

यथा वा —

त्वच्चरणसम्मुखीनं तत्र पराचीनमप्यहिगिरीन्दो । त्वं वैभवसंमूर्छनभाजं वितनोषि का नु ते प्रौढिः ॥५४४॥

वैभवस्य विभुत्वस्य संमूर्छनमभिव्याप्तिः 'मुर्छा मोहसमुच्छ्राययोः' इति धातोर्ल्युट् । तद्भाजमिति सम्मुखीन पक्षे । पराचीनविषये तु वै इति प्रसिद्ध्यर्थकमव्ययम् । भवे संसारे संमूर्छनभाजं मोहभाजं वितनोषीत्यर्थः ॥

यथावा—

क्रियते हि सदास्थावरजन्मा जनताऽच्युत त्वया विनता । विमताऽपि तथाऽतितरां मम तावद्विस्मयो महानेषः ॥५४५॥

हे अच्युत! त्वया विनता विमता च जनता सदास्थावरजन्मा क्रियते, विनतपक्षे—सत्सु ब्रह्मवित्सु आस्था श्रद्धा यस्यास्सा सती प्रशस्ता आस्था यस्यास्सेति वा । वरं श्रेष्ठं जन्म यस्यास्सा तथोक्ता च क्रियते । मन्नन्तत्वान्न ङीप् । अन्यत्र—सदा सन्ततं स्थावरजन्मा वृक्षादिरूपजन्मभाक् क्रियते हिः प्रसिद्धौ । स्पष्टमन्यत् ॥

यथा वा—

**परिपुष्टधेनुकानां बालाना सवयसां च तालानाम् । कृष्ण फलाभ्यवहारं कल्पयसि स्माविमृश्य बतभेदम् ॥ ५४६ ॥**

हे कृष्ण! इयं च संबुद्धिस्तदवतारासाधारणचरितमत्र श्लोके विवक्षितामिति ज्ञापनाय। परिपुष्टाः धेनवो गावो यैस्ते परिपुष्टधेनुकाः 'शेषाद्विभाषा' इति कप् । पक्षे—परिपुष्टः धेनुकः तन्नामा गर्दभरूपोऽसुरो येषु ते तेषां सवयसां वयस्यानां 'स्निग्धो वयस्यस्सवयाः' इत्यमरः । पक्षे—सपक्षिणामित्यर्थः । 'वयः पक्षिणि बाल्यादौ' इति विश्वः । आदौ समानं वयो येषामिति विग्रहे 'ज्योतिर्जनपद' इत्यादिना समानशब्दस्य सभावः । द्वितीये वयोभिस्सह वर्तत इति सहपूर्वपदबहुव्रीहौ 'वोपसर्जनस्य' इति सहशब्दस्य सभावः । बालानां गोपालबालकानां, तालानां तृणराजतरूणां च, भेदं तारतम्यं अविमृश्य फलानां फलैर्वा अभ्यवहारं अहारम्, पक्षे—फलानां अभ्यवहारं अधःपातनं कल्पयसि स्म । बतेत्याश्चर्ये । अत्र श्रीभागवतीया धेनुकासुरवधकथाऽनुसंधेया । बालतालशब्दयोः बतभेदं बकारतकाराभ्यां वैलक्षण्यं अविमृश्य अनादृत्येत्यर्थोऽपि चमत्कारातिशयं पुष्णाति । अत्र तालानामहितत्वं चाहितधेनुकासुराश्रयतयेति ध्येयम् ॥

यथा वा—

**सद्वेषरुचिरमार्गप्रवणोऽरिष्टान्वितोऽतिरिक्तात्मा । अहितो हितश्च भवता क्रियते फणिशैलशेखर विचित्रम् ॥ ५४७ ॥**

अहितः सतां द्वेषे रुचिर्यस्य तथोक्तः अमार्गे शास्त्रविरुद्धे पथि प्रवणः अरिष्टेन अशुभेन अन्वितः अत्यन्तं रिक्तः तुच्छः आत्मा बुद्धिर्यस्य स तथोक्तः 'वशिकं तुच्छरिक्तके' इत्यमरः । बुद्धिहीन इत्यर्थः । क्रियते । हितश्चैवं क्रियते । पक्षे सन् प्रशस्तः वेषः रुचिरश्शास्त्रीयतया रमणीयः यो मार्गः पन्थाश्च तयोः प्रवणः । 'वयसः कर्मणोऽर्थस्य' इत्युक्तरीत्या वयःकर्माद्यनुरूपवेषादिक इति भावः । अरिष्टेन शुभेन अन्वितः 'अरिष्टे तु शुभाशुभे' इत्यमरः । अतिरिक्तः समधिकः आत्मा स्वभावो यस्य स तथोक्तः । लोकोत्तरस्वभाव इत्यर्थः । 'अतिरिक्तस्समधिकः' इत्यमरः । क्रियते विचित्रम् ॥

यथावा—

**स्फुटमणिकान्तिकमच्युत विदधानं प्राग्र्यभाश्रितं राष्ट्रम् । हन्त कुलालंकृत्यायोग्यं हितमहितमपि तनोषि जनम् ॥५४८॥**

हे अच्युत! हितं जनं स्फुटा व्यक्ता मणीनां कान्तिश्शोभा यस्य तं तथोक्तं 'शेषाद्विभाषा' इति कप् । राष्ट्रं प्राग्र्यया परार्ध्यया भया प्रभया आश्रितं विदधानं सर्वराष्ट्रसमृद्धिदायिनमिति यावत् । कुलस्य अन्वयस्य अलंकृत्याः अलंकारस्य योग्यं तनोषि । अहितमप्येवमेव तनोषीत्याश्चर्यम् । वस्तुतस्तु— अहितं जनमपि स्फुटाः मणिका मृद्विकाराः अन्तिके यस्य तं तथोक्तं 'अलञ्जरस्स्यान्माणिकः' इत्यमरः । राष्ट्रं प्राग्र्येण अग्रिमेण भा भ् इति वर्णेन भा इत्येतत्तृतीयैकवचनम् । श्रितं विदधानं भ्राष्ट्रं विनिर्मिमाणमित्यर्थः । राष्ट्रशब्दस्यादौ व्यञ्जनमात्रभकार-

संश्लेषणे भ्राष्ट्रमिति निष्पत्तेः । अत एव कुलालं कुम्भकारं अत एव कृत्यानां सत्कर्मणां कृत्येषु वा अयोग्यं अनर्हं

रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च स्वर्णकारस्तु सौचिकः ॥
तक्षकस्तिलयन्त्री च सूनश्चक्री तथा ध्वजी ।
नापितः कारुकश्चैव षोडशैते जनङ्गमाः ॥

इति पराशरोक्तेस्तस्य ग्रामचण्डालेष्वन्तर्भावादिति भावः ॥

यथावा—

**पौरहिततां प्रपन्नं पुलोमजातेश्वरत्वमधिधरणि।**
**प्राप्तं कलयत्यच्युत मित्रममित्रं च हन्ततव शक्तिः॥**

हे अच्युत ! तव शक्तिः पराक्रमः मित्रं सखायं युधिष्ठिरादिकं, पौरेभ्यो नागरेभ्यः हिततां अनुकूलतां प्रपन्नं प्राप्तं 'चतुर्थी तदर्थे' इत्यादिना समासः । अधिधरणि धरणौ पुलोमजातेश्वरत्वं शचीपतित्वं भूमीन्द्रत्वं सार्वभौमत्वमिति यावत् । प्राप्तं कलयति । अमित्रं चैवमेव कलयति ! हन्तेत्याश्चर्ये । वस्तुतस्त्वमित्रपक्षे—पौ पुवर्णे रहिततां विश्लिष्टतां प्रपन्नं पुलोमजातेश्वरत्वं लोमजातेश्वरत्वमित्यर्थः । तत्र पुवर्णोत्सारणे तथानिष्पत्तेः । मेषादिलोमक्रयविक्रयिकमत्यर्थानर्हानामिति भावः ॥

यथावा—

**हन्त त्वयि प्रपन्नो विप्रतिपन्नश्च यस्तयोर्जननि ।**
**अविकृतमेव विधत्से भुवनेश्वरि विश्वभोग्यमैश्वर्यम् ॥ ५५० ॥**

हे भुवनेश्वरि ! भुवनेश्वरस्य भगवतस्स्त्री । तस्यास्संबुद्धिः । यद्वा-भुवनानामीश्वरीत्येव विग्रहः 'अश्नोतेराशुकर्मणि वरट्' इत्यश्नोतेर्वरटि टित्त्वलक्षणो ङीप् । लोकानामाशुवरदात्रीत्यर्थः । 'आशुकर्मवरदानादि' इति हि व्याख्यातम् । प्रपञ्चितं चैतल्लक्ष्मीसहस्ररत्नप्रकाशिकायां प्रादुर्भावस्तबके 'अखिलेश्वरीं त्वाम्' इत्येतद्विवरणावसरे । त्वयि प्रपन्नो यः विप्रतिपन्नश्च यः तयोरुभयोरप्यविकृतमेव विश्वभोग्यमैश्वर्यं विधत्से । हन्त । एकत्र आविकृतं अविकार्यैव विश्वेषां भोग्यं भोगार्हं सकलजगदुपकारकमित्यर्थः । ऐश्वर्यं विधत्से । अपरत्र—अविद्यमानः विः विवर्णो यस्य तत् अवि, तथाविधं कृतं विश्वभोग्यं श्वभोग्यमित्यर्थः । अतितुच्छमिति भावः । शब्दार्थयोस्तादात्म्यम् । ऐश्वर्यं विधत्से ॥

यथावा—

**देवानां दैत्यानामपि तव चरणद्वयं प्रभासनदम् । तेषामुभयेषामपि सामान्यं तद्धि दैवतं भगवन् ॥५५१॥**

हे भगवन्! तव चरणद्वयं देवानां दैत्यानामपि प्रभासनदम् । कथमिदं हिताहितयोस्तुल्यफलप्रदानमुचितमित्याशङ्क्य समाधत्ते—तेषामिति । तेषामुभयेषामपि तत् तव चरणद्वयं सामान्यं दैवतं हि । उभयसाधारणदैवतत्वादुभयेषां तुल्यफलप्रदानं युक्तमेवेति भावः । हीत्येतत् 'देवानां दानवानां च सामान्यमधिदैवतम् । सर्वदा चरणद्वन्द्वम्' इति प्रमाणप्रसिद्धिं द्योतयति । प्रभासनं प्रकाशं ददातीति तथोक्तं देवपक्षे । अन्यत्र प्रभायाः असनं निरासं ददातीति तथोक्तम् । एषूदाहरणेष्वाद्यं

शुद्धम् । अन्यानि श्लेषसंकीर्णानि यथायथमलंकारान्तरसंकीर्णानि च ॥

भगवद्वर्णनौत्सुक्यपारवश्येन दर्शितम् ।
बहूदाहरणं तत्र न कार्या दोषधीर्बुधैः ॥

इयं सरस्वतीकण्ठाभरणोक्ता तुल्ययोगिता । अत्र केचित्—"नेयं तुल्ययोगिता पूर्वोक्ततुल्ययोगितातो भेदमर्हति, 'वर्ण्यानामितरेषां वा' इति लक्षणाक्रान्तत्वात् । 'प्रदीयते परा भूतिः' इत्यत्र एकानुपूर्वीबोधितवस्तुकर्मकदानपात्रत्वस्य परंपरया तादृशशब्दस्य वा धर्मस्यैक्यात् । 'यश्च निम्बम्' इत्यत्रापि कटुत्वविशिष्टनिम्बस्यैव परंपरया छेदकसेचकपूजकधर्मत्वसंभवात्" इत्याहुः । अन्ये तु—"तदेतदपेशलं, तथाहि यत्रानेकान्वयित्वेन ज्ञातो धर्मस्तेषामौपम्यगमकत्वेन चमत्कृतिजनकस्तत्र पूर्वोक्तः प्रकारः । यत्र तु हिताहितोभयविषयकशुभाशुभरूपैकव्यवहारस्य व्यवहर्तृगतस्तुतिनिन्दान्यतरद्योतकतया चमत्कृतिजनकत्वं तत्रापर इति भेदात् । न ह्यत्र पराभूतिशब्दस्य तदर्थकर्मदानस्य वा परंपरया शत्रुमित्रगतत्वेन भानं, अपितु श्लेषबलादेकत्वेनाध्यवसितस्य तादृशदानस्य राजगतत्वेनैवेति कथं पूर्वोक्तलक्षणाक्रान्तत्वम् । एतेन 'यश्च निम्बम्' इत्यत्र कटुत्वविशिष्टस्य निम्बस्यैव परंपरया छेदकसेचकपूजकधर्मत्वमिति निरस्तम् । वस्तुगत्या तद्धर्मस्यालंकारतासंपादकत्वाभावात् । अन्यथा 'संकुचन्ति सरोजानि' इत्येतावतैव तुल्ययोगितापत्तेः । किंत्वनेकगतत्वेन ज्ञायमानधर्मत्वस्यैव तुल्ययोगिताप्रयोजकत्वमिति तदभावे तदन्तर्गतिकथनमसमञ्जसमेव" इत्याहुः ॥

तृतीयतुल्ययोगिता —

यदुत्कृष्टगुणैस्साम्यवचनं साऽपरा मता ॥

उत्कृष्टगुणैस्साम्यविवक्षया साधारणधर्मकथनमपरा तुल्ययोगिता। धर्मस्य वर्ण्यावर्ण्यगतत्वादुक्ताद्विलक्षणेयम्। 'यत्प्रायं श्रूयते यच्च तत्ताद्दगवगम्यते' इति वाक्यविदाभिमतन्यायानुरोधेन प्रसिद्धगुणोत्कृष्टसाम्यस्य वर्णनीये प्रतीतेस्तुल्ययोगिताशब्दान्वर्थताऽप्यस्तीति बोध्यम्॥

यथा—

मणिराजो वनमाला श्रीवत्सो दौग्धसैन्धवी बाला। मृन्मयसुममालाऽपि च तव भूषणतामवाप किल शौरे ॥ ५५२ ॥

अत्र वर्णनीया मृन्मयसुममाला अप्रकृतैः कौस्तुभादिभिर्भूषणत्वेन समीकृत्योक्ता। मृन्मयसुममालाया एव वर्णनीयत्वेन विवक्षणाल्लक्षणसंगतिः। किलेत्यैतिह्ये। 'केनचिद्भक्तिमताऽर्पितां मृन्मयीं सुममालां कदाचित्फणिगिरौ भगवान्मूर्ध्नैवधार्षीत्' इति पौराणिकी कथाऽत्रानुसंधेया। यैवोच्यते 'दत्तां केनापि सूनावळिमाधिमकुटं मृन्मयीमव दध्रे' इति। अत्र कौस्तुभादीनां भगवदीयत्वेन प्रस्तुतत्वाभिसंधौ प्राथमिकतुल्ययोगितैवेति नेदं शुद्धमुदाहरणम्। इदं तु शुद्धम्—

कल्पद्रुः कामगवी चिन्तारत्नं त्वदाश्रितश्चापि। औदार्याज्जगतोऽच्युत खेदान्वयधूय कल्पयति मोदान् ॥ ५५३ ॥

यथावा—

कमठपतिः काकोदरकदम्बनेता हरिस्करिस्तोमः । उर्वीं वेङ्कटगिरिरपि सर्वामेतां बिभर्तितराम् ॥

अनयोरुदाहरणयोः प्रकृतयोर्भगवदाश्रितवेङ्कटशैलयोरप्रकृतगुणोत्कृष्टकल्पद्रुकमठपतिप्रभृतिभिस्समीकृत्य साधारणधर्मवर्णनम् ॥

एवम्—

त्वत्प्रतिपादितमहसो भानुस्सितभानुरपि बृहद्भानुः । त्वदनुगतो मनुजोऽपिच भगवन् जगतां तमांसि धून्वन्ति ॥ ५५५ ॥

इत्यादावपि द्रष्टव्यम् ॥

यथावा—

त्वद्विमुखचित्तवृत्तिर्धवलेतरपक्षचरमरात्रिश्च । हर्यालोकविहानात्पर्याप्तं तामसी भवत्यम्ब ॥

हे अम्ब ! हरेर्भगवतः । पक्षे—हर्योः सूर्याचन्द्रमसोः आलोकस्य कटाक्षस्य दीप्तेश्च विहानात् अभावात् पर्याप्तं यथा स्यात्तथा तामसी संपद्यते । पक्षे तमिस्रवती भवति ॥

यथावा—

अध्याता तव विद्वानत्राता नरपतिश्च दीनानाम् । धनवान्नरोऽप्यदाता धरणेर्भारायते वृषाद्रिमणे ॥

पूर्वत्रोदाहरणत्रये स्तुतिः अन्तिमोदाहरणद्वये निन्दा। एवंचोत्कृष्टगुणैरिति लक्षणे उत्कृष्टपदमपकृष्टस्याप्युपलक्षकं, तुल्यत्वावगतिहेतोः प्रायपाठस्यात्राप्यविशेषात्। इयं काव्यादर्शे दर्शिता। इमां तुल्ययोगितां केचित्सिद्धिरिति व्यवाहार्षुः। तथाच जयदेवः काव्यलक्षणप्रतिपादके तृतीये मयूखे—

सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये।
युवामेव हि विख्यातौ त्वं बलैर्जलधिर्जलैः॥

इति। सर्वस्वकारादिमतान्तरेष्वत्र समुदितयोर्वर्ण्यावर्णयोर्भगवद्विमुखचित्तवृत्तिदर्शरात्र्योस्तामसी भवतीत्येकधर्मान्वयाद्वक्ष्यमाणं दीपकमेव॥

इत्यलङ्कारमणिहारे तुल्ययोगितासरष्षोडशः

---

## अथ दीपकालंकारसरः.

---

### तद्दीपकं स्याद्वर्ण्यावर्ण्ययोरेकधर्मता॥

प्रकृताप्रकृतयोरेकसाधारणधर्मान्वयो दीपकम्। अत्र द्विवचनमविवक्षितम् 'मणिश्शाणोल्लीढः' इत्यादौ बहूनामप्येकसाधारणधर्मान्वये दीपकदर्शनात्। तुल्ययोगितायामिवात्राप्यौपम्यं गम्यम्। प्रस्तुतार्थमुपात्तो धर्मः प्रसङ्गादप्रकृतमपि दीपयति प्रकाशयति सुन्दरीकरोतीति दीपकम्। यद्वा—दीप इव दीपकं 'इवे प्रतिकृतौ' इत्यधिकारस्थेन 'संज्ञायां च' इत्यनेन कन्। दीपसादृश्यं च प्रकृताप्रकृतप्रकाशकत्वेनेति ध्येयम्॥

यथा—

आचार्यकृपाप्लुतता वाचा मधुमधुरकवनगम्भी-
रा । सा चाच्युताङ्घ्रिभक्तिः प्राचां परिपाक एव सु-
कृतानाम् ॥ ५५८ ॥

वाचेति टावन्तश्शब्दः । अत्र प्रस्तुताया अच्युताङ्घ्रिभक्तेः अप्रस्तुताया आचार्यकृपाप्लुततादेश्च प्राचीनसुकृतपरिपाकलक्षणगुणरूपैकधर्मान्वयः । अत्र कस्यचिदेव प्रस्तुतत्वे दीपकं, अन्यथा तुल्ययोगितैव ॥

यथा—

रक्तिविहीना वनिता शक्तिविहीना न शोभते
नृपता । युक्तिविहीना कविता भक्तिविहीना मति-
स्त्वयि च शौरे ॥ ५५९ ॥

अत्राभावस्साधारणो धर्मः, मतान्तरे त्वभावोऽपि गुण एवेति तुल्ययोगितानिरूपणावसरेऽवोचाम । अत्रापि कस्यचिदेव प्रकृततायां दीपकं सर्वेषां प्रकृतत्वे अप्रकृतत्वे वा तुल्ययोगितेत्यनुसंधेयम । यत्र तु क्रिया साधारणो धर्मः तत्र यावतां कर्त्रादिकारकाणां सन्निधानं तेषां स्वसजातीयेनान्येन सह तुल्ययोगिता दीपकं वा पृथक्पृथग्भवति, औपम्यस्यापि पृथगेव भासमानत्वात् ॥

यथा—

लावण्यं ललनामणिमारुण्यं विद्रुमं वृषाद्रि-

मणे। नैपुण्यं नरनाथं कारुण्यं त्वां च संप्रसाधयति ॥ ५६० ॥

अत्र कर्तृकर्मणोः॥

यथावा—

तपनीयकुण्डलं यद्रुचिरं तपनीयमण्डलं यदपि ।कुङ्कुमवर्णविशेषं तद्द्वयमभिरञ्जयत्यनन्तमपि॥

रुचिरं सुन्दरं यत् तपनीयकुण्डलं स्वर्णकर्णवेष्टनं यदपि तपनस्य भानोरिदं तपनीयं 'वा नामधेयस्य' इति वृद्धसंज्ञायां 'तस्येदम्' इत्यर्थे 'वृद्धाच्छः' इति छप्रत्ययः। मण्डलं बिम्बं कुङ्कुमस्य काश्मीरजन्मनः वर्णविशेष इव वर्णविशेषो यस्य तत्तथोक्तं अरुणवर्णमित्यर्थः। तद्द्वयमपि अनन्तं भगवन्तमपि। पक्षे—गगनमपि तमालश्यामलमपीति भावः। अभिरञ्जयति अरुणयतीत्यर्थः। किंच—तपनीयकुण्डलं यत् यदपि तपनीयमण्डलं कु म इत्याकारकवर्णावेव विशेषो वैलक्षण्यं यस्य तत्तथोक्तं, तद्द्वयमपि कुं भुवं अनन्तमन्तरिक्षमपि अभिरञ्जयति। स्ववर्णव्यापनेन लोहितीकरोतीत्यर्थः। कुमिति पृथक्पदपक्षे 'वा पदान्तस्य' इति परसवर्ण इति ध्येयम्। अत्रापि कर्तृकर्मणोः। श्लेषसंकीर्णत्वं विशेषः॥

औदार्यं कल्पतरोर्गाम्भीर्यं श्रीनिवास सलिलनिधेः। शैशिर्यं तुहिनगिरेरैश्वर्यं तव च भासते सहजम् ॥ ५६२ ॥

अत्र केवलकर्तुः ॥

सत्यविहीनं वचनं वित्तविहीनं कुटुम्बिनां भवनम् । वृत्तविहीनं जननं चित्तं हरिभक्तिहीनमपि शोच्यम् ॥ ५६३ ॥

अत्र कर्मणः ॥

इन्दिरया तव वक्षश्चन्दिरकलयाऽन्तरिक्षमब्जाक्ष । सुन्दरतामनवरतं विन्दत्यरविन्दरेखया च सरः ॥५६४॥

अत्र कर्तृकरणयोः ॥

कविना वचसा सहृदयहृदयं सुदृशा दृशा मनो यूनाम् । भवता सौशील्येन क्रीतं भुवनं समग्रमपि भूमन् ॥५६५॥

अत्र कर्तृकरणकर्मणामिति विशेषः । सौशील्यं महतो मन्दैस्सह नीरन्ध्रेण संश्लेषस्वभावः ॥

जलदस्स चातकेभ्यस्सुधामयूखश्चकोरनिकरेभ्यः । अहिगिरिपतिर्नतेभ्योऽप्यमृतं निरपेक्षमेव संदत्ते॥५६६॥

अत्र कर्तृसम्प्रदानयोः । अमृतं सलिलं पीयूषं निश्श्रेयसं च यथाक्रममर्थः । अमृतशब्दस्यावृत्त्या कर्मणोऽपीति बोध्यम् । निरपेक्षमेव प्रत्युपकाराभिसन्धिविधुरमेवेत्यर्थः ॥

अरविन्दान्मकरन्दं माकन्दान्मधुरवृत्ति फलवृन्दम् । कुन्दाद्विन्देद्गन्धं मुक्त्यानन्दं जनो मुकुन्दाच्च ॥५६७॥

अत्रापादानकर्मणोः । मधुरा वृत्तिः स्थितिर्यस्य तत् मधुरवृत्ति स्वभावमधुरमित्यर्थः ॥

यथावा—

अरुणात्त्रासस्तमसां हरिणाधीशान्मदावलकुलानाम् । हरिणाङ्कात्तापानां शरणागतितस्तवाम्ब पापानाम् ॥५६८॥

अत्रापादानकर्त्रोः । कर्ता चात्र 'कर्तृकर्मणोः कृति' इति कृद्योगलक्षणषष्ठीबोध्यः ॥

घृणिनिवहोऽम्बुजबन्धौ मणिनिवहो भासते महासिन्धौ । गुणनिवहोऽखिलबन्धौ फणिशिखरीन्दौ च नन्दयन्विश्वम् ॥५६९॥

अत्र कर्त्रधिकरणयोः ॥

कारकदीपकमपि दीपक एवान्तर्भावितं दण्डिप्रभृतिभिः । अत्र केचित्—दीपकमपि तुल्ययोगितायामेवान्तर्भवति, धर्मस्य सकृद्वृत्तिमूलकविच्छित्तेरुभयत्राविशेषात् । प्रकृताप्रकृतत्वादिविशेषस्य चावान्तरभेदसाधकत्वेऽप्यलंकारान्तरतायामसाधकत्वात् । अन्यथा तुल्ययोगितायां धर्मिणां केवलप्रकृतत्वस्य के-

वलाप्रकृतत्वस्य च विशेषस्य सत्त्वादलंकारद्वैतापत्तेः, श्लेषेऽप्येवं द्वैविध्यापत्तेः, सर्वेषामप्यलंकाराणां प्रभेदवैलक्षण्याद्वैलक्षण्यापत्तेश्च । तस्मात्प्रकृतानामेव अप्रकृतानामेव प्रकृताप्रकृतानां चैकधर्मान्वय इति तुल्ययोगितायाः एव त्रयः प्रभेदा वक्तुमुचिता इति दीपकस्य तुल्ययोगितातः पृथगलंकारतामाचक्षाणानां प्राचां दुराग्रह एवेति वदन्ति । अन्ये तु—

> नानाधिकरणस्थानां शब्दानां संप्रदीपकः ।
> एकवाक्येन संयोगो यस्तद्दीपकमुच्यते ॥

यथा—

> सरांसि हंसैः कुसुमैश्च वृक्षा मत्तद्विरेफैश्च सरोरुहाणि ।
> गोष्ठीभिरुद्यानवनानि चैव यस्मिन्नशून्यानि सदा क्रियन्ते ॥

इति भरतमुनिना दण्डिनाऽपि दीपकमात्रस्याभ्युपगमात्तत्रैव तुल्ययोगितान्तर्भावनस्य औचित्यात्तुल्ययोगितायां दीपकान्तर्भावनं मन्वतेऽनुचितम् । अमुमलंकारं धर्मस्य गुणक्रियाद्यात्मकस्यादिमध्यावसानगतत्वेन त्रिविधमामनन्ति रुद्रटादयः । तन्मते यथा—अत्रोदाहृतेष्वेव पद्येषु—'अरुणात्त्रासस्तमसाम्' इत्यत्रादौ, 'रक्तिविहीना वनिता' इत्यत्र मध्ये 'लावण्यं ललनामणि' इत्यादाववसाने च धर्मो निर्दिष्टः । वस्तुतस्तु—तत्र धर्मस्यादिमध्यावसानगतत्वेऽपि विच्छित्तिविशेषविरहात् त्रैविध्योक्तिरापातमात्रात् । अन्यथा धर्मस्योपाद्युपमध्योपान्तगतत्वे ततोपि किंचिन्न्यूनाधिकदेशवृत्तित्वे चानन्तभेदप्रसङ्गात् । अनुपदप्रदर्शितेषूदाहरणेषु केवलानुगामिसाधारणधर्मतायां दर्शितं दीपकम् । 'रक्तिविहीना वनिता' इत्यादौ बिम्बप्रतिबिम्बभावेनाप्येतददर्शि ॥

यथावा—

**नयशाली विबुधेन्द्रो जयशाली भाति सांयुगीनेन्द्रः । रयशाली खगराडुच्छ्रयशाली चापि वेङ्कटगिरीन्द्रः ॥५७०॥**

एवं तुल्ययोगितायामपि संभवतीत्युदाहार्यम् । अत्र बिम्बप्रतिबिम्बतायां न केवलं क्रियारूपमनुगामिमात्रं चमत्कारकारणम् । किंतूदाहृतरीत्या नयादिप्रतिबिम्बभावकरम्बितम् । इयांस्तु विशेषः—यत्केवलाबिम्बप्रतिबिम्बभावेनाप्युपमादीनां भवति निष्पत्तिः । यथा—प्रागुपमायामुदाहृते 'कमलाभुजयुगळाञ्चित' इत्यादौ । प्रकृते तु न तथा, अनुगामिनं विना धर्मस्वरूपस्यैवानिष्पत्तेः । न हि बिम्बप्रतिबिम्बमात्रेण धर्मस्य सकृद्वृत्तिस्संभवति । श्लेषेणाप्येतत्संभवति ॥

यथा—

**ननु नाथ शब्दविद्याविदः परब्रह्मवेदिनश्चापि ।**
**शेषगिरीश्वर नियतं भवति हि गतिरच्छगत्यर्थे ॥**

शब्दविद्याविदः व्याकरणवेत्तुः परब्रह्मवेदिनः परब्रह्मवेत्तुश्च अच्छगत्यर्थे गतिर्भवति नियतम् । तत्राद्यपक्षे—अच्छ अच्छेत्यव्ययं गत्यर्थे गत्यर्थकधातुयोगे गतिः गतिसंज्ञको भवति । 'गतिश्च' इत्यनुवर्तमाने 'अच्छ गत्यर्थवदेषु' । इति सूत्रेणाच्छेत्यव्ययस्य गत्यर्थकधातुयोगे गतिसंज्ञाविधानादिति भावः । द्वितीयपक्षे—अच्छा प्रकृतिसंबन्धविमोचयित्री या गतिः अर्चिरादिमार्गेण गमनं तस्यै तदर्थं 'अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ' । गतिः ज्ञानं भवति निष्पद्यत इत्यर्थः । अत्रा-

प्रकृतस्य शब्दविद्याविदः प्रकृतस्य परब्रह्मविदश्च अच्छगत्यर्थे गतिर्भवतीति श्लेषेण समानधर्मता ॥

अत्रेदमवधेयं, यद्यपि—

दुर्दमदारिद्र्यतमोनिर्दलनचणावुभौ समिन्धाते।
चिन्तामणिशिखरिमणिश्चिन्तामणिरिति च यस्सुपर्वमणिः ॥५७२॥

इत्यत्र प्रस्तुताप्रस्तुतयोर्युगपद्धर्मान्वयः प्रतिभाति । 'रक्तिविहीना वनिता' इत्यादिषु प्रागुदाहृतेषु पद्येषु अप्रस्तुतस्यैव प्रथमं धर्मान्वयः, तथाऽपि—तस्य प्रासङ्गिकत्वं न हीयते। वस्तुगत्या प्रस्तुतोद्देशेन प्रवृत्तस्यैव वर्णनस्य प्रस्तुतेऽप्यन्वयात् । न हि दीपस्य रथ्याप्रासादयोर्युगपदुपकारकत्वेन जामात्रर्थं अर्पितस्य सूपस्यातिथिभ्यः प्रथमपरिवेषणेन च प्रासङ्गिकत्वं हीयते। तुल्ययोगितायां त्वेकं प्रस्तुतमन्यदप्रस्तुतमिति विशेषाग्रहणात्सर्वोद्देशेनैव धर्मोक्तिरिति विशेषः। अयं चानयोरपरो विशेषः—उभयोरनयोरुपमालंकारस्य गम्यत्वाविशेषेऽपि अत्राप्रस्तुतमुपमानं प्रस्तुतमुपमेयमिति व्यवस्थित उपमानोपमेयभावः, तत्र तु विशेषाग्रहणादैच्छिकस्स इति। इदं सर्वं कुवलयानन्दे स्पष्टम् । कैश्चित्तु—मालादीपकमप्यत्रैवान्तर्भावितम, तदयुक्तम् । 'स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः' इत्यादौ सादृश्यसंपर्काभावादिति । एतच्च मालादीपकनिरूपणावसरे प्रपञ्चयिष्यते ॥

इत्यलंकारमणिहारे दीपकसरस्सप्तदशः.

## अथावृत्तिदीपकसरः.

समस्तयोर्व्यस्तयोर्वाऽऽवृत्तौ पदतदर्थयोः ।
आवृत्तिदीपकं प्राहुस्त्रिविधं बुधसत्तमाः ॥

पदतदर्थयोस्समस्तयोर्व्यस्तयोश्चानेकोपकारकतया दीपस्थानीययोरावृत्तौ त्रिविधमावृत्तिदीपकमित्यर्थः । पदतदर्थयोरुभयोरावृत्तावेकः प्रकारः, पदस्यैव अर्थस्यैव चावृत्तौ द्वौ प्रकाराविति त्रयोऽस्य प्रकाराः । एकक्रियाया अनेककारकान्वयवदनेककारकस्यावृत्तक्रियान्वयादावृत्तिदीपकमित्यन्वर्थाभिधानमिदम्॥

यथाक्रममुदाहरणानि—

हरिभूभृदुदयभाजो हरेर्महस्फूर्तिपरिचये नृणाम् । विकसति दृगब्जवृन्दं विकसति हृदयाब्जवृन्दं च ॥५७३॥

हरिभूभृत् वेंकटगिरिः स एव उदयः तं भजतीति तथोक्तः। तस्य हरेः भगवत एव भानुमतः महस्फूर्तिरुत्सवस्फूर्तिरेव तेजस्स्फूर्तिः तस्याः परिचये सति । अत्र विकसनक्रियातद्वाचकपदयोर्द्वयोरावृत्तिरितीदमुभयावृत्तिदीपकम् ॥

यथा वा—

कर्षति दृगेकतो मां श्रुतिरेषाऽन्यत्र कर्षति मुरारे । रसना परत्र कर्षति साध्वी भक्तिः किमत्र कुर्वीत ॥५७४॥

मां त्वां द्रष्टुं त्वत्कथां श्रोतुं त्वन्नाम वक्तुं चाभीप्सन्त मिति भावः। दृक् चक्षुरिन्द्रियं एकतः स्वविषये इत्यर्थः। एवमुत्तरत्रापि। शिष्टं स्पष्टम्। अत्र कर्षणक्रियातद्वाचकपदयोरुभयोरप्यावृत्तिः। इदं धूर्तबहुसपत्नीकदर्थितसाध्वीदयितवृत्तान्तसमारोपरूपसमासोक्त्या संकीर्णं, पूर्वं तु रूपकेण॥

यथावा—

प्रसजेद्यदि पापं नः प्रसजेद्दातुं हरिः फलं तस्य। प्रसजेत्कृपाऽपि लक्ष्म्याः प्रसजेत्सा स्वदयितं प्रसादयितुम् ॥५७५॥

यथावा—

करिवरनिनदो मूर्छति हरिवरनिनदोऽपि मूर्छति समन्तात्। मूर्छति च तत्प्रतिस्रुद्गुहागृहाभ्यन्तरेषु शेषगिरेः ॥५७६॥

यथावा—

कूजन्ति चक्रवाकाः कूजन्ति शुकाः पिकाश्च कूजन्ति। कूजन्ति सारसा अपि कर्णानन्दप्रदाः पृदाकुगिरौ ॥५७७॥

इदमुदाहरणत्रितयं शुद्धम्। अत्राप्याद्ययोरुदाहरणयोः कारणमाला ध्वन्यते। अन्तिमं तूदाहरणं शुद्धतमम्॥

पदावृत्तिदीपकं यथा—

व्यालोत्तमाचलेन्दोरालोकाद्दूरतस्तमो द्रवति।

शरणगतानामन्तःकरणसुधाकिरणदृषदपि द्रवति॥

अत्र द्रवतीति पदस्यैवावृत्तिः न तु तदर्थस्य, आद्यस्य धावतीति अन्त्यस्यार्द्रा भवतीत्यर्थयोर्भेदात् ॥

यथावा—

स्वैरं यशो विसृमरं स्मेरं भवतो विधूयते शौरे । स्फारं यशोऽप्यसुहृदां दूरंदूरं विधूयते दिक्षु॥

अत्रापि विधूयते इत्यनयोः विधुरिवाचरतीति प्रकम्प्यत इति चार्थभेदादिदमपि पदावृत्तिदीपकम् ॥

यथावा—

बहुशो धयति स्वामिन्नहिशैले धन्य एव तव तीर्थम् । बहु शोधयति च तमिमं कलशोदधिजाधिनाथ तत्तीर्थम् ॥५८०॥

हे स्वामिन्! अहिशैले धन्यः पुण्यवानेव तव तीर्थं त्वदभिषेकतीर्थमित्यर्थः, बहुशः बहु धयति पिबति। 'धेट् पाने' तमिमं तीर्थधातारं जनं तत्तीर्थं कर्तृ बहु यथा स्यात्तथा शोधयति शुद्धं करोति अपास्तसमस्तांहस्ततिं तनोतीत्यर्थः । अत्रापि पदमात्रावृत्तिः ॥

यथावा—

चेतो मम बहु धावति वातंधयगिरिजमद्भुतं किमपि । बहुधाऽवति च महाम्भोवहधाम तदद्भुतं स्मरन्तं माम् ॥५८१॥

मम चेतः कर्तृ। वार्तधयगिरिजातं किमप्यद्भुतं सर्वाभ्यर्थनिधिं श्रीनिवासमित्यर्थः। धावति स्मरतीति यावत्। महाम्भोवहधाम महावारिवाहनीलमित्यर्थः। तदद्भुतं भगवानित्यर्थः। स्मरन्तं मां बहुधा अवति प्रीणयति रक्षति च। अत्रापि पदमात्रावृत्तिः। आद्योदाहरणद्वये अभङ्गश्लेषेण अनन्तरोदाहृत्योस्सभङ्गश्लेषेण निर्व्यूढमिदम्॥

यथावा—

**योऽन्तर्धत्ते कमलाकान्तं काकोदराद्रिभास्वन्तम्। अन्तर्धत्ते तस्य च संतमसं भवमयं स हि नितान्तम्॥५८२॥**

यः पुमान् अन्तः मनसि धत्ते ध्यायतीत्यर्थः। तस्य पुंसः भवमयं संतमसं सः भगवान् अन्तर्धत्ते पिदधाति विनिवर्तयतीति यावत्। अत्रापि पदस्यैवावृत्तिः॥

अर्थावृत्तिदीपकं यथा—

**क्षालयति वेङ्कटाचलपालयितुरघानि सपदि नामसुधा। मार्जयति कुजनसन्नुत्यार्जितमूर्जितमपीह दौर्जन्यम्॥५८३॥**

अत्र क्रियापदभेदेऽपि तदर्थस्य शोधनस्याभेदादर्थावृत्तिदीपकमिदम्॥

यथावा—

**यत्रेन्धे वनमाला चकास्ति कौस्तुभमणिर्लसति च श्रीः। कियदिव तद्भाग्यं स्यात्पङ्कजमालाऽपि तत्र दीव्यति चेत्॥५८४॥**

अत्रापि इन्धे इत्यादिक्रियावाचिपदभेदेऽपि तदर्थस्य प्रकाशस्याभेद इति ध्येयम् । इदं च उत्कृष्टव्यक्तिसमुचितोत्तमस्थानतत्तुल्यकक्ष्यासमिन्धानापकृष्टव्यक्तिभागधेयप्रशंसालक्षण-व्यवहारसमारोपरूपसमासोक्तिसंकीर्णमिति विभावनीयम् ॥

यथावा—

**प्राप्नोति जयं लभते श्रियं ह्रियं विन्दते नयं भजते । प्रियमयतेऽपिच नियतं श्रियःपते त्वां श्रयन्नयं लोकः ॥ ५८५ ॥**

ह्रियं अकार्येभ्यो लज्जां विन्दते । अयं महान्गुणः । यथोच्यते तत्रतत्र 'ह्रीनिषेवी' इति । आद्योदाहरणद्वये कर्तॄणामावृत्तक्रियान्वयः, इह तु जयमित्यादिकर्मणामिति विशेषः ॥

नन्वत्र धर्मनिर्देशस्य प्रस्तुताप्रस्तुतोभयविषयत्वाभावात्कथं दीपकशब्दव्यपदेश इति चेन्न, अनेकोपकारकत्वसाम्येन तदुपपत्तेः । अत एव कुवलयानन्दे—'आवृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वाभावेऽपि दीपकच्छायापत्तिमात्रेण दीपकव्यपदेशः' इत्युक्तम् । अत्र मात्रपदं प्रयुञ्जानैर्दीक्षितैः पृथगेवायमलंकारो न तु दीपकप्रभेद इति सूचितम् । अत एवोक्तं दण्डिना—

अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरित्यपि ।
दीपकस्थानमेवेष्टमलंकारत्रयं यथा ॥

इति । त्रिप्रकारोऽयमलंकारो दीपकसदृश इति तदर्थः ॥

इत्यलंकारमणिहारे आवृत्तिदीपकसरोऽष्टादशः

# अथ प्रतिवस्तूपमासरः.

पदार्थारब्धो वाक्यार्थ इति पदार्थगतालंकारानन्तरं वाक्यार्थगतालंकारप्रस्तावः । तत्र सामान्यधर्मस्य इवाद्युपादाने सकृन्निर्देशे उपमा । वस्तुप्रतिवस्तुभावेन सकृन्निर्देशेऽपि सैव। इवाद्यनुपादाने सकृन्निर्देशे दीपकतुल्ययोगिते । असकृन्निर्देशे तु शुद्धसामान्यरूपत्वं बिम्बप्रतिबिम्बभावो वा। आद्यः प्रकारः प्रतिवस्तूपमा । द्वितीयप्रकाराश्रयेण दृष्टान्तो वक्ष्यते । तदेवमौपम्याश्रयेणैव प्रतिवस्तूपमा । तथाच तल्लक्षणम्—

> साद्दश्यावसिते वाक्यद्वये चेद्धर्म एककः ।
> द्विरुपात्तो भवेत्सा तु प्रतिवस्तूपमोच्यते ॥

अन्योन्यमैकवाक्यलाभार्थमुपमानोपमेयभावपर्यवसन्नयोर्वाक्ययोर्गुणक्रियारूप एक एव धर्मो वस्तुप्रतिवस्तुभावापन्नतया शब्दान्तरेण पृथङ्निर्दिश्यते चेत्सा प्रतिवस्तूपमा । प्रतिवस्तु उपमानोपमेयभावदिशि उपमा तत्प्रयोजकसाधारणधर्मोऽस्यामिति व्युत्पत्तेरित्यर्थः । अर्थान्तरन्यासवारणाय साद्दश्येति। तत्र तु समर्थ्यसमर्थकभावमात्रं विवक्षितं न तु साद्दश्यम्। बिम्बप्रतिबिम्बभावेन दृष्टान्तेऽपि धर्मोपादानात्तत्रातिप्रसङ्गवारणायैक इति । तत्र हि भिन्न एव धर्म उपादीयत इति न दोषः॥

यथा—

> नारायणगिरिरेव स्फारां कीर्तिं बिभर्ति खलु गिरिषु । ऐरावत एव परं स्मेरां दीप्तिं दधाति दिक्करिषु ॥५८६॥

अत्र बिभर्ति दधातीत्येक एव धर्म उपमेयोपमानवाक्ययोः पृथग्भिन्नपदाभ्यां निर्दिष्टः । अयमेव हि वस्तुप्रतिवस्तुभाव इत्युच्यते ॥

यथावा—

**भजतां कथं नु महता भवताऽल्पा देवता हरे समताम् । काचमणिर्नीचघृणिर्हीरेण सहक्रिमत्युदारेण ॥५८७॥**

भजतामिति लोट् ॥

यथावा—

**अहरहरपि गच्छन्तो मूढास्त्वां ब्रह्म नाप्नुवन्ति हरे । विन्दन्त्यक्षेत्रज्ञा उपर्युपरि न हि निधिं चरन्तोपि ॥ ५८८ ॥**

अत्र 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तोपि न विन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' इति दहरविद्यागतश्रुत्यर्थोऽनुसंहितः । अस्यार्थः—यथा अधस्तान्निक्षिप्तं हिरण्यनिधिं निधिमत्क्षेत्रस्वभावज्ञानहीना निधेरुपर्युपरि संचरन्तोपि न लभन्ते, एवमेवेमास्सर्वाः प्रजाः सुषुप्तिकाले अहरहर्गच्छन्त्यः सुषुप्तौ 'सति संपद्य न विदुः' इत्युक्तरीत्या अविभागं गच्छन्त्यः एतं दहराकाशाख्यं ब्रह्मरूपं लोकं न विन्दन्ति न लभन्त न जानन्तीत्यर्थः । ब्रह्मलोकशब्दो निषादस्थपतिन्यायेन समानाधिकरणः । तत्र हेतुमाह—अनृतेन हि प्रत्यूढा इति। अनृतेन कर्मणा प्रतापं नीताः स्वभावान्तरं प्रापिताः । आच्छादिता

इति यावत् । यद्वा—अहरहर्गच्छन्त्य इति न सुषुप्तिकालिकं गमनमुच्यते, अपितु अन्तरात्मत्वेन सदा वर्तमानस्य दहराकाशस्य हिरण्यनिधिवत्परमपुरुषार्थभूतस्य उपर्युपरि अहरहर्गच्छन्त्यः सर्वस्मिन्काले वर्तमानास्तमजानन्त्यस्तं न विन्दन्ति न लभन्त इत्यर्थः। उदाहरणे मूढा इत्यस्यानुतेन प्रत्यूढा इत्यर्थः । अत्र वाक्यद्वये प्राप्त्यभावरूपस्साधारणधर्मश्शब्दभेदेनोपात्तः ॥

ननु 'क्षाळयति वेङ्कटाचल' इत्युदाहृतार्थावृत्तिदीपकादस्याः किं वैलक्षण्यमिति चेन्न, प्रस्तुतानेकधर्मिगतैकधर्मनिर्देशः अप्रस्तुतानेकगततथाविधधर्मनिर्देशो वा अर्थावृत्तिः । इयं तु प्रस्तुताप्रस्तुतोभयनिष्ठतथाविधधर्मनिर्देशरूपेत्यस्यास्ततो वैलक्षण्यसद्भावात् । किंच—अर्थावृत्तिदीपकं वाक्ययोरर्थस्यावृत्तावेव भवति, सा च साधर्म्ये एव न वैधर्म्ये। इयं तु वैधर्म्येणापि भवतीति ततोऽप्यस्या भेदः। तदेतदुक्तं कुवलयानन्दे—"अर्थावृत्तिदीपकं प्रस्तुतानामप्रस्तुतानां वा भवति। प्रतिवस्तूपमा तु प्रस्तुताप्रस्तुतानामिति विशेषः । अयं चापरो विशेषः—आवृत्तिदीपकं वैधर्म्येण न सम्भवति प्रतिवस्तूपमा तु वैधर्म्येणापि दृश्यते" इति ॥

यथा—

फणिगिरिपतिगुणपरिमळमभिजानन्ति हि तदेकनिष्णाताः। मृगमदपरिमळभरमिह विदन्ति न ग्रामसूकरा जातु ॥ ५८९ ॥

यथावा—

मज्जति भवत्क्षमायां नाथामन्दं मदागसां वृ-

न्दम् । नोन्मज्जति खलु पङ्कं गङ्गायां विमलतरतरङ्गायाम् ॥ ५९० ॥

यथावा—

उदधिसुते त्वामन्तर्निदधानं मम विभाति हृदयाब्जम् । निष्कासितमुक्तामणिशुक्तिपुटं नैव जात्वपि समिन्धे ॥ ५९१ ॥

नन्विदं व्याहतं यद्वैधर्म्येणोपमेति । साधर्म्यरूपत्वात्तस्या इति चेत्सत्यं, वैधर्म्येणोपन्यस्तेन मृगमदपरिमळभरमित्यादिवाक्यार्थेनाक्षिप्तस्य अपितु ज्ञातार एव जानन्तीति वाक्यार्थस्योपमानत्वेन विवक्षणात् । आमुखे वैधर्म्यप्रतीतावपि साधर्म्य एव पर्यवसानान्न दोषः । वैधर्म्येणेत्यस्य वैधर्म्यद्वारेत्यर्थः ॥

अत्र साधारणधर्मस्य वस्तुप्रतिवस्तुभावकथनेन तदितरपदार्थानां बिम्बप्रतिबिम्बभावो घटनाया आनुरूप्यं च विवक्षितम् । अन्यथा—

खलास्तुकुशलास्स्वीयाहितप्रत्यूहकर्मणि ।
निपुणाः फणिनः प्राणानपहर्तुं निरागसाम् ॥

इत्यत्रासंष्ठुलवाक्यार्थेऽपि प्रतिवस्तूपमा स्यात् । अत्र हि खलफणिनोः प्राणहितयोश्च सत्यपि बिम्बप्रतिबिम्बभावे हरणप्रत्यूहकरणयोर्नाशप्रागभावपर्यवसितयोरनानुरूप्यान्न बिम्बप्रतिबिम्बभावः । यद्वा - अस्त्वत्र प्रतिवस्तूपमा, परंतु पूर्ववाक्यार्थघटकानां हितप्रत्यूहकर्मणीति नामार्थविभक्त्यर्थादीनामुत्तरवाक्यार्थघटके प्राणानपहर्तुमित्यत्राभावेनासंष्ठुलतालक्षणस्य वाक्यार्थसामान्यदोषस्य जागरूकत्वादचमत्कारिण्येव, दुष्टोपमादिवत् ।

वाक्यार्थौ हि निर्भरतरव्युत्पत्तिनिशातितान्तःकरणैः विविधपदार्थसंदर्भपरिवर्तननिपुणैरेव महाकविभिर्विरचितः किमपि पुष्णाति कामनीयकं, नेतरः। तस्मादेवंजातीयकेष्वलंकारेषु पूर्ववाक्यार्थघटकनामार्थानुरूपैर्नामार्थैः तद्घटकविभक्त्यनुरूपाभिर्विभक्तिभिः तदन्वयानुरूपेण चान्वयेनोत्तरवाक्यार्थं भाव्यमिति सहृदयहृदयमेव प्रष्टव्यमिति वदन्ति॥

अलंकारकौस्तुभकारो विश्वेश्वरस्तु इयमलंकारान्तरविषयेऽपि दृश्यत इत्याह। तत्राप्रस्तुतप्रशंसाविषये यथा—

**नीरसमिव सारसमपि सान्द्रतमा इव स चन्द्रमा जननि। सलयमिव किसलयं ननु विद्रुत इव विद्रुमस्तव पुरस्तात्॥५१२॥**

तव अतिमात्ररमणीयनयनवदनकराधरायाः इति भावः। अत्र सारसादीनामपकर्षरूप एको धर्मः प्रतिवाक्यं भिन्नेन नीरसत्वादिना प्रतिपादितः। उत्प्रेक्षया चेयं संकीर्णेत्यवधेयम्॥

मालारूपेणापीयं दृश्यते। यथा—

**सहकारः फलमतुलं वहते स हरः कलानिधिं धत्ते। सम्राण्बिभर्ति मकुटं सरीसृपगिरिर्दरीधरीति हरिम्॥५१३॥**

यथावा—

**इन्धे कविः प्रतिभया भाति प्रभया सरोजिनीबन्धुः। राज्यश्रियाऽवनीन्द्रो राजति नित्यश्रिया हरिर्लसति॥५१४॥**

अत्राद्ये पद्ये वहनधानभरणधारणानां द्वितीये इन्धनभान-राजनलसनानां च वस्तुत ऐकरूप्यात्प्रतिवस्तूपमेयं मालारूपा ॥

इत्यलङ्कारमणिहारे प्रतिवस्तूपमासर एकोनविंशः

## अथ दृष्टान्तसरः

बिम्बत्वप्रतिबिम्बत्वापन्नधर्मादिकं द्वयोः ।
वाक्यार्थयोश्चेदौपम्यमार्थं दृष्टान्त ईर्यते ॥

बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मादिकं वाक्यार्थयोरार्थ-मौपम्यं दृष्टान्त इत्यर्थः । तदुक्तम्—'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति । सर्वेषां उपमादीनाम् । दृष्टः अन्तः निश्चयो यत्रेति यथार्थाभिधानोऽयं, दार्ष्टान्तिके सन्दिग्धस्यार्थस्यात्र निश्चयदर्शनात् ॥

यथा—

गुणहीनाऽपि च कविता फणिगिरिपतिनामम-सृणिता श्लाघ्या । योषा स्पृहणीया खलु भूषाहीनाऽपि पूर्णलावण्या ॥ ५१५ ॥

अत्र कवितायोषयोरुपमेयोपमानयोः श्लाघ्यत्वस्पृहणीयत्व-योर्धर्मयोरपि बिम्बप्रतिबिम्बभावः । अस्य चालंकारस्य प्रति-वस्तूपमाया भेदकमेतदेव—यत्तस्यां धर्मो न प्रतिबिम्बितः किंतु शुद्धसामान्यात्मनैव स्थितः, इह तु प्रतिबिम्बित इति ॥

यथावा—

श्रेयस्विनी त्रिलोकी भूयः कृपयैव भुजगशि-
खरीन्दोः । ओजस्विनी दिनश्रीस्तेजस्फूर्त्यैव ता-
मरसबन्धोः ॥ ५१६ ॥

यथावा—

शुद्धिमतीयं जगती श्रीशैलेशाङ्घ्रिजन्मना स-
रिता । ऋद्धिमती त्रिदिवश्रीर्मन्दारभुवा महावदा-
न्यतया ॥ ५१७ ॥

यथावा—

गिरिशादिस्त्वदपाङ्गात्त्वं तु स्वत एव हीशिता
भगवन् । काचमणिराचकास्ति द्युमणिकरादेष तु
स्वभासैव ॥ ५१८ ॥

यथावा—

निस्स्वोपि त्वयि भक्तः पूज्यो नान्यो महास-
मृद्धिरपि । अभिरूपोऽनङ्गोपि श्लाघ्यो नानीदृशो
महाङ्गोऽपि ॥ ५१९ ॥

अनङ्गः अल्पाङ्गः नञोऽत्रानुदरा कन्येत्यादाविवाल्पत्वमर्थः । कृशतनुरपीत्यभिप्रायः । काम इत्यप्युपस्कार्यम् । महाङ्गः पीवरावयवोपि । पक्षे उष्ट्र इत्यर्थः । 'उष्ट्रे क्रमेळकमयमहाङ्गाः' इत्यमरः ॥

वैधर्म्येण यथा—

मरुदात्मंभरिगिरिपतिवरदानादेव देहिनो वि-
भवः । शरदागमं विना कः करदायी स्याद्विधुप्र-
सादस्य ॥ ६०० ॥

विधुप्रसादस्य इन्दुप्रसन्नतायाः । करदायी हस्तालम्बवि-
तरीता ॥

यथा वा—

तावद्भवः प्रभविता यावद्भगवन्न नेत्रपात्रमसि ।
सौपर्णमन्त्रवर्णे कर्णोद्गीर्णे न पन्नगत्रासः ॥ ६०१

अत्राद्योदाहरणे प्रस्तुतवाक्यार्थगतयोर्वरदानविभवयोः, द्वि-
तीयोदाहरणे भवप्रभवितृत्वभगवत्कटाक्षपात्रताभावयोश्च वैध-
र्म्येण शरदागमविधुप्रसाददानाभावौ पन्नगत्रासाभावसौपर्णम-
न्त्रकर्णगोचरत्वे च यथाक्रममुत्तरवाक्ये प्रतिबिम्बतया निरदे-
शिषाताम् ॥

यथा वा—

भजतां ददाति जगतां भवती लोकोत्तरं फलं
सकलम् । अहिशैलमणिवधूमणि न हि मल्लीसु-
ममसौरभं सूते ॥ ६०२ ॥

इत्यत्रापि वैधर्म्येण दृष्टान्तो द्रष्टव्यः । 'अत्र दृष्टान्तालं-
कारमहिम्नैव बिम्बप्रतिबिम्बभावेन प्रतीयमानमुपमानोपमेयभाव-
मनादृत्य दृष्टान्तोदाहरणनिदर्शनादिशब्दाः कविना न प्रयोक्त-
व्याः पौनरुक्त्यापत्तेः' इत्येकावळीकारः । अत एव—

तृप्तियोगः परेणापि न महिम्ना महीयसाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥

इति माघपद्यव्याख्यानावसरे 'नायं दृष्टान्तालंकारः बिम्बप्रतिबिम्बभावेनौपम्यस्य गम्यत्वे तस्योत्थानात् । किंतु दृष्टान्तशब्देन तुल्यार्थाभिधानादुपमालंकारः' इत्युक्त्वा उपदर्शितैकावळीग्रन्थमुदाहार्षीन्मल्लिनाथः । वस्तुतस्तु दृष्टान्तोदाहरणादिशब्दघटितेष्वीदृशस्थलेषु पूर्वं व्युत्पादित उदारणालंकार एवेत्युत्पश्यामः । स च सम्यगेव पूर्वं न्यरूप्यतेति नेह प्रतायते ॥

इत्यलंकारमणिहारे दृष्टान्तसरो विंशः.

## अथ निदर्शनालंकारसरः.

**उपात्तयोरर्थयोश्चेदार्थाभेदः प्रकीर्त्यते ।**
**औपम्यपर्यवसितो भवेत्सेयं निदर्शना ॥**

उपात्तयोः अर्थयोः आर्थोऽभेद औपम्यपर्यवसायी निदर्शनेत्यर्थः । अतिशयोक्त्यादीनां ध्वन्यमानरूपकस्य च वारणाय उपात्तयोरिति वाच्यरूपकवारणायार्थ इति । आर्थत्वं च प्राथमिकान्वयबोधाविषयत्वम् । यदि च विषिष्टोपमायां विशेषणयोरभेदः प्रतीयत इत्युच्यते, तदा बिम्बप्रतिबिम्बभावानापन्नप्रधाननिरूपितगुणीभाववतोरिति विशेषणमर्थयोरुपादेयम् । विशिष्टोपमायां प्रधानभूतयोरुपमानोपमेययोर्बिम्बप्रतिबिम्बभावापन्नतया तन्निरूपितगुणभाववतोर्विशेषणयोरार्थाभेदभानेऽपि नाति-

प्रसङ्गः । निदर्शनायां तु वक्ष्यमाणोदाहरणेषु अभिजानन् वेत्ती-त्यादिक्रिययोर्गुणभूतयोर्बिम्बप्रतिबिम्बभावे सत्यपि तादृशक्रिया-निरूपितप्रधानभाववतोः कर्त्रोर्बिम्बप्रतिबिम्बभावानापन्नतया ता दृशकर्तृनिरूपितगुणभाववत्योरभिज्ञानवेदनादि क्रिययोरार्थाभेदप्र-तीतेर्भविष्यति लक्षणानुगमः । इदं च श्रौत्या निदर्शनाया लक्षणम् । आर्थीसाधारणं तु लक्षणं ललितालंकारप्रकरणे प्रदर्शयिष्यते ॥

यथा—

**नित्यं परमात्मानं प्रत्यगभिन्नं भवन्तमभिजा-**
**नन् । सत्यं फणिशैलपते भृत्याभेदेन वेत्ति स-**
**म्राजम् ॥ ६०३ ॥**

अत्र परमात्मनः प्रत्यगात्माभेदेन ज्ञानं सम्राजो भृत्याभे-देन ज्ञानं चाभिन्नमिति तत्सादृश्यमूला धीः ॥ ६०३ ॥

यथावा—

**तव महिमानमनन्तं वेदितुमिच्छन् हृदा परि-**
**च्छिद्य । कक्षेऽन्तरिक्षमखिलं काङ्क्षति परिवेष्ट्य**
**हन्त निक्षेप्तुम् ॥ ६०४ ॥**

अत्र—यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तं निगच्छति ॥

इति श्रुतिच्छाया गृहीता । अत्रानन्तस्य भगवन्महिम्नो मन-सा परिच्छिद्य वेदनेच्छा अन्तरिक्षस्य कटादिवत्परिवेष्ट्य कक्ष-निक्षेपणेच्छा चाभिन्ने ॥ ६०४ ॥

यथावा—

**त्वामविगणय्य योऽन्यत्तामरसविलोचनाश्रयेद्दै-**

वम् । स शिरोमणिं विधून्वन्पिशुनश्शिरसा बिभर्त्ययःपिण्डम् ॥ ६०५ ॥

यथावा—

निरवधिदिव्यविभूतेर्भवतो विभवं समर्पयेद्योऽन्यम् । कनकाचलस्य सीसाकलिताभरणं रमेश स हि दत्ते ॥ ६०६ ॥

यथावा—

अपलिलपिषति मुरारे भूमानं यस्तवातिसीमानम् । चिच्छादयिषति कामं पाणितलेनाखिलं स गगनतलम् ॥ ६०७ ॥

यथावा—

अन्यां विवक्षति कथां मान्यां यस्तावकीं कथां हित्वा । शेषगिरीश जिघत्सत्यूषररेणुं सितां विहायैषः ॥ ६०८ ॥

यथावा—

फणिगिरिपतिसममन्यं भणति सुरं यस्तु पण्डितंमन्यः । मणिसदृशं लोष्टं खरघृणिसदृशं तिमिरमपि भणति सोयम् ॥ ६०९ ॥

अत्र सप्तसूदाहरणेषु आद्ययोरभेद एकवाक्यगतः। अन्तिमेषु तु भिन्नवाक्यगतः। तत्रापि 'त्वामनिगणय्य' इत्यादिषु

चतुर्षु वस्तुमात्रयोरौपम्यमूलोऽभेदः। अन्तिमे 'फणिगिरि' इति पद्ये त्वौप्ययोरौपम्यमूलस्स इति विशेषः ॥

यथावा —

**कलशेन जलधिसलिलं सकलं शक्नोति यो हि परिमातुम्। अखिलं भवतो विभवं मनसा स भवेत्क्षमः परिच्छेत्तुम् ॥ ६१० ॥**

अत्रोपमानोपमेयवाक्यार्थयोः प्रातिलोम्येनाभेदः मिथ्याध्यवसितिसंकीर्णत्वं च पूर्वोदाहरणेभ्यो विशेषः ॥

यथावा—

**वृषगिरिमलंकरिष्णोर्विष्णोर्वीर्याणि स हि वदितुमीष्टे। प्रभविष्णुः परिमातुं रजांसि यः पार्थिवानि निखिलानि ॥ ६११ ॥**

अत्र 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' इति श्रुत्यर्थानुधावनं विशेषः। अन्यत्सर्वं पूर्ववदेव। श्रुतावपीदृशालङ्कारसद्भावं ज्ञापयितुमिदम्। एवं 'तव महिमानं' इति प्रागुदाहृतपद्येऽपि बोध्यम्। एषा वाक्यार्थनिदर्शनेत्युच्यते। विशिष्टार्थयोः प्रकृतैकधर्मिगतयोरार्थाभेदे निदर्शनाया इष्टेः। अस्यां च घटकपदार्थानां बिम्बप्रतिबिम्बभावोऽवश्यंभावी ॥

मालारूपाऽपीयं दृश्यते। यथा—

**विकिरति स सुधां परितः क्षिपति शरच्चन्द्रचन्द्रिकाधाराम्। वितरति चन्दनचर्चां सुचारु यो हरिकथां प्रचारयति ॥ ६१२ ॥**

इदं चापरं बोध्यं—

वातात्मंभरिगिरिधरनेता चेतो ममैष यदया-
सीत्। वेलातीतं दुरितं शूलाकार्षीत्तदेतदिति मन्ये॥

शूलाकार्षीत् शूलेनापाक्षीदित्यर्थः। 'शूलात्पाके' इति शू-
लशब्दाड्डाच्। अत्र 'भावप्रधानमाख्यातम्' इति यास्कोक्त-
रीत्यां क्रियाविशेष्यकबोधवादिनां मते शाब्द एवाभेदारोपः
क्रिययोरिति मुखं चन्द्र इत्यादाविव रूपकमुचितम्। प्रथमा-
न्तविशेष्यकबोधवादिनां त्वार्थस्स इति निदर्शनेति भेदः॥

पदार्थनिदर्शना यथा—

दिनविगमसमयविकसन्नवकुवलयवलयविल-
सदसितरुचिम्। जयतु चिराय दधानो दयितः
कलशाम्बुराशिकन्यायाः॥६१४॥

अत्र कुवलयदळभगवद्रुच्योराश्रयभेदाद्भिन्नयोरपि सादृश्य-
मूलस्ताद्रूप्याभिमानः आरोपो वा भगवति कुवलयरुचेः॥

यथावा—

भवदवपरितप्तोऽयं भवदीयकृपासुधाप्लुतोऽद्य
हरे। तुङ्गातपसङ्गार्दितगङ्गाह्लदमग्नगजसुखं धत्ते॥

अत्र 'एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम्' इति
प्रमाणच्छायाऽनुसंहिता। अत्र तुङ्गातपसङ्गार्दितत्वगङ्गाह्रदनिम-
ग्नत्वाभ्यां भवदवपरितप्तत्वभगवत्कृपासुधाप्लुतत्वयोः प्रतिबिम्ब-
नमिति पूर्वस्मादुदाहरणाद्भेदः रूपकसंकीर्णत्वं च। आश्रयभे-
दभिदुरयोस्सुखयोस्सादृश्यहेतुकस्ताद्रूप्याभिमानस्तु तुल्य एव॥

यथावा—

**चलदलकाननचन्दिरविलोलमखिलाम्ब नयनयुगलं ते । विस्तृतजालजलाशयविचलन्मीनद्वयश्रियं वहते ॥ ६१६ ॥**

अत्रापि चलदलकत्वविस्तृतजालत्वयोः आननचन्दिरजलाशययोश्च बिम्बप्रतिबिम्बभावः विलोलनयनयुगलचलन्मीनद्वययोस्तु वस्तुप्रतिवस्तुभावकरम्बितस्स इति विशेषः । अन्यत्तुल्यम् ॥

अस्यां चोपमानोपमेयगतधर्मयोरार्थाभेदप्रतिपत्तिः । अतः पदार्थनिदर्शनेत्युच्यते । अत्र च पदार्थनिदर्शनायां बिम्बप्रतिबिम्बभावस्तूपमानोपमेययोस्सविशेषणत्वे भवति, यथा अव्यवहितोदाहरणयोः । अन्यथा तु नेति विवेकः । ननु वाक्यार्थनिदर्शनायां विशिष्टवाचकशब्दाभ्यां विशेषणयोरप्युपादानाद्वस्तुनामोपात्तयोरार्थाभेदः । पदार्थनिदर्शनायां तूपमानभूतरुच्यादेरन्यतरस्यैवोपात्तत्व न द्वयोरिति चेत्, रुचिशब्देन रुचित्वेन द्वयोरप्युपात्तत्वात् । न ह्युपमानोपमेयतावच्छेदकरूपेणोपात्तत्वं विवक्षितं, येनाव्याप्तिस्स्यात् । यद्वा प्रागुक्तलक्षणं वाक्यार्थनिदर्शनाया एव, न पदार्थनिदर्शनायाः । अस्यास्त्वेवमस्तु लक्षणं—

**पदार्थपूर्वा साऽन्या स्यादुपमानोपमेययोः ।**
**यत्रान्यतरधर्मस्यान्यत्रारोपणमुच्यते ॥**

उपमानोपमेययोरन्यतरधर्मस्यान्यत्रारोपः पदार्थनिदर्शनेत्यर्थः । नन्वेवमपि वाक्यार्थनिदर्शनायां रूपकध्वनिना पदार्थनिदर्शनायां च निगीर्याध्यवसानरूपयाऽतिशयोक्त्या गतार्थतेति

चेन्न। वाक्यार्थनिदर्शनायां रूपकस्य गुणीभूतत्वेन तद्ध्वनित्वायोगात्। अन्यथा गुणीभूतोपमया रूपकस्यापि चारितार्थ्यापत्तेः। किंच, अस्याश्शरीरं तादृशपदार्थयोः परस्पराभेदमात्रमुभयत्र विश्रान्तम्। रूपकस्य तूपमेयगत उपमानाभेदः, अतिशयोक्तेश्च निगरणानिगरणाभ्यां तयोर्विशेष इत्यन्यदेतत्। एवंच स्फुटमेवास्या रूपकातिशयोक्तिभ्यां वैलक्षण्यम्। अत एव 'कलशेन जलधिसलिलं सकलं, वृषगिरिमलंकरिष्णोः' इति प्रागुदाहृतपद्ययोरर्थयोः पौर्वापर्येऽपि न चारुताहानिः। एवं 'तव महिमानमनन्तं' इत्यादिपद्येष्वपि कांक्षतीत्यादौ कांक्षन्नित्याद्यनूद्य इच्छन्नित्यादौ इच्छेदित्यादिविधानेऽपीति बोध्यम्। अत्र व्यङ्ग्यरूपकादौ तूच्यमाने व्यङ्ग्यकक्ष्योद्देश्यविधेयभावस्यापि वाच्यकक्ष्योद्देश्यविधेयभावानुरोधितया 'कलशेन जलधिसलिलं सकलं शक्नोति यो हि परिमातुम्' इत्यादौ कलशकरणकसकलजलधिसलिलकर्मकपरिमाणशक्तिमदादिरूपे उपमाने मनःकरणकाखिलभगवद्विभवकर्मकपरिच्छेदक्षमरूपोपमेयाभेदस्यैव प्रत्येतव्यतया रूपकासामञ्जस्यापत्तेरित्यालंकारिकसार्वभौमैराकलनीयम्॥

एवं पदार्थनिदर्शनाया लक्षणवैलक्षण्येऽप्युदाहरणानि प्राक्प्रदर्शितान्येव समन्वयप्रकारभेदेन योजनीयानि। सोऽपि वक्ष्यमाणरीत्या बुद्धिमद्भिरूहनीयः॥

यथावा—

**त्वामस्तुत्वा भगवन्यो भवति स्तवनकारकोऽन्येषाम्। सद्भिः कृतो निरस्तस्सत्यं वनकाकतां वहत्येषः॥६१७॥**

सद्भिः ब्रह्मविद्भिः निरस्तः प्रत्यादिष्टः कृतस्सन् वनका-

कतां अरण्यवायसतां, अतिनिकर्षद्योतनाय वनेतिविशेषणम् । वहति। पक्षे—स्तवनकारकशब्दः निरस्तः निर्गतौ रेफस्तकारौ यस्य स तथोक्तस्सन् वनकाक इति निष्पद्यत इत्यर्थः । अन्यत्सुगमम् । अत्र वनकाकत्वस्योपमानधर्मस्य उपमेये स्तवनकारके आरोपः । स चौपम्ये पर्यवस्यति । वनकाकवाशितवद्भगवद्न्यस्तवनमनर्थकममनोज्ञमश्राव्यं चेति भावः । अत्र शब्दपरार्थान्तरवर्णनं चमत्कारातिशयाय ॥

यथावा—

**सत्यपि तवाभिधाने मुदां निधाने मुधैव यो मुखरः । सत्यं स हि मुन्न्यूनस्संप्रथयति सारसाक्ष खरभावम् ॥ ६१८ ॥**

हे सारसाक्ष मुदां आनन्दानां निधाने निधिभूते मुक्त्यैश्वर्यपर्यन्तसर्वविधानन्दप्रदानधुरंधरे इति भावः । तव अभिधाने नामनि सत्यपि त्वदभिधानमनादृत्येत्यर्थः । यः मुधैव निरर्थकमेव मुखरः वाचाटः भवति सः पुमान् मुदा न्यूनस्सन् आनन्दनिधानभूतनामाभिलापवैधुर्यादिति भावः । पक्षे मुवर्णेन न्यूनः विश्लिष्टस्सन् । अस्मिन्पक्षे न्यू इत्यत्र नकारस्य 'अनचि च' इति वैकल्पिकं द्वित्वं पक्षान्तरार्थानुरूप्यायेति बोध्यम् । खरस्य रासभस्य भावं स्वभावं चेष्टां वा 'भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । संप्रथयति । उक्तप्रकारभगवन्नामाभिलापविधुरतयाऽतिमात्रपरुषाश्राव्यव्यर्थालापैस्समयं क्षिपन्रासभतुल्य एवेति भावः । पक्षे—मुखरशब्दो मुवर्णच्यावने खरत्वं प्रकाशयतीत्यर्थः । अत्रापि भगवन्नामाभिला-

पविधुरस्वथालापविधायिन्युपमेये उपमानभूतखरधर्मारोपः। चमत्कारान्तरं च पूर्ववदेव ॥

यथावा —

सुमनोरमोहिमान्यामलमूर्तिरसौ शिवाभ्युदयहेतुः। भुजगाधिराजशैलो भजते हिमवन्महीभृतश्शैलीम् ॥ ६१९ ॥

सुमनोरमः अतिमनोज्ञ। रमयतीति रमः पचाद्यच्। सुमनसां विबुधानां रम इति वा शेषाद्रिपक्षे। हिमवत्पक्षे तु शोभना मनोरमा तदभिधा जाया यस्य स तथोक्तः,

पुरा मनोरमा नाम सुमेरोरभवत्सुता।
गृहमेधी तयैवासीच्चक्रवर्ती धराभृताम् ॥

इत्युक्तेः। अहिभिः मान्या अमला मूर्तिर्यस्य स तथोक्तः तस्य भुजगाधिराजरूपत्वादिति भावः। यद्वा—हीति भिन्नं पदं प्रसिद्ध्यर्थकम। मान्या अमला मूर्तिर्यस्य स तथोक्तः। पक्षे हिमान्या हिमसंहृत्या अमला विशदा मूर्तिर्यस्येति। शिवानां कल्याणानां शिवायाः उमायाश्च अभ्युदयस्य उपचयस्य जन्मनश्च हेतुः। अत्राप्युपमानधर्मस्योपमेये आरोपः पूर्ववदेव श्लेषोत्तम्भितत्वं च ॥

यथावा—

तरुणतमालवियत्तलमरकतजलनिधिवलाहितशिलासु। सुषमासितिमा भवतो वृषगिरिमाणिक्य विहरति स्वैरम् ॥ ६२० ॥

हे वृषगिरिमाणिक्येति संबोधनम्। सुषमायाः असितिमा नैल्यम् ॥

यथावा—

इदमच्युतसुदतीमणिपदमिति वदति श्रुतिर्जलजमुचितम् । मृदुलस्मेरमनोज्ञे पदलक्ष्मीर्यदिह दृश्यते तस्याः ॥ ६२१ ॥

अच्युतसुदतीमणेः श्रियः पदं चरणं स्थानं च । पदलक्ष्मीः चरणशोभा ॥

यथावा—

सिंहळखनिजनितमणीसंहतिषु दशास्यपुरनिशाचर्यः । संहननरुचं तव रघुसिंह समीक्ष्याधुनाऽपि मुह्यन्ति ॥ ६२२ ॥

अत्राद्येषु 'दिनविगमसमय' इत्यादावुदाहरणानां षट्के उपमेये उपमानधर्मारोपः। तत्रापि पूर्वत्रिके शुद्धः, अन्तिमे त्रिके 'त्वामस्तुत्वा' इत्यादौ श्लेषसंकीर्णः। अनन्तरं 'तरुणतमाल' इत्यादौ उदाहरणत्रये उपमाने उपमेयधर्मारोपः। तत्राप्यन्तिमे 'सिंहळखनि' इतिपद्ये निदर्शनया भ्रान्तिमदलंकारो व्यज्यत इति वैलक्षण्यं बोध्यम्। उभयत्राप्यन्यधर्मस्यान्यत्रासंभवेन तत्सदृशधर्माक्षेपादौपम्ये पर्यवसानं तु तुल्यमेव। इमां पदार्थवृत्तिनिदर्शनां ललितोपमेति व्यवाहार्षीज्जयदेवः॥

अलंकारसर्वस्वकारस्तु—

त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः॥

इति पद्यं वाक्यार्थनिदर्शनायामुदाजहार। आह च—यत्र तु प्रकृतवाक्यार्थे वाक्यार्थान्तरमारोप्यते सामानाधिकरण्येन तत्र सम्बन्धानुपपत्तिमूला निदर्शनैव युक्तेति। तन्न, वाक्यार्थरूपकस्य दत्तजलाञ्जलित्वापत्तेः। न चेष्टापत्तिः, वाक्यार्थनिदर्शनैव निर्वास्यतां स्वीक्रियतां च वाक्यार्थरूपकमिति पर्यनुयोगस्यापि तुल्यत्वात्। युक्तं चैतत्, पदार्थरूपके मुखं चन्द्र इत्यादौ क्लृप्तस्य श्रौतस्याभेदारोपस्य रूपकजीवातुत्वकल्पनाया औचित्यात् 'इन्दुशोभां वहत्यास्यम्' इत्यादिपदार्थनिदर्शनायामभेदारोपस्याभावात्तज्जीवातुत्वायोगाच्च। रूपके बिम्बनं नास्तीति तु शपथमात्रं युक्त्यभावात्, अस्मदुक्तोदाहरणे वाक्यार्थनिदर्शनाया-स्सावकाशत्वाच्च। यत्तु तेनैव लक्षणं निर्मितं 'सम्भवताऽसम्भवता वा वस्तुसम्बन्धेन गम्यमानमौपम्यं निदर्शना, इति तदपि न, रूपकातिशयोक्त्यादिष्वतिव्यापनात्। यदि तु—

> त्वत्पादनखरत्नानि यो रञ्जयति यावकैः।
> इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः॥

इति निर्मीयते पद्यं तदा निदर्शना युक्ता। न चास्मदुक्ता वाच्या निदर्शना, इयं तु प्रतीयमानेति वाच्यम्। मुखं चन्द्र इवेति वाच्योपमा। मुखं चन्द्र इति प्रतीयमाना, न त्वलङ्कारान्तरमित्यस्यापि सुवचत्वात्। एवंचारोपाध्यवसानमार्गबहिर्भूत आर्थ एवाभेदो निदर्शनाजीवितम्। स च कर्त्राद्यभेदप्रतिपादनद्वारा प्रतिपाद्यते वाक्यार्थनिदर्शनायाम्। परे तु 'त्वत्पादनखरत्नानाम्' इत्यत्र दृष्टान्तालङ्कारमाहुः। तदप्यसत्, बिम्बप्रतिबिम्बभावापन्नपदार्थघटितस्य निरपेक्षवाक्यार्थद्वयस्यैव दृष्टान्तत्वात्। तस्मात् 'त्वत्पादनख' इत्यत्र वाक्यार्थरूपकमेव न

निदर्शनेति स्थितमिति विमर्शिन्यनुरोधिनि रसगङ्गाधरे प्रत्यपादि । एवमसम्भवद्वस्तुसंबन्धनिबन्धना वाक्यार्थपदार्थवृत्तिनिदर्शना दर्शिता ॥

सदर्थनिदर्शना—

**सदसद्बोधनं स्याच्चेत्क्रियया ऽन्या निदर्शना ॥**

कस्यचित्किंचित्क्रियाविशिष्टस्य स्वक्रियया परान्प्रति सतोऽसतो वाऽर्थस्य बोधनं यन्निबध्यते साऽन्या सम्भवद्वस्तुसम्बन्धनिबन्धना निदर्शनेत्यर्थः ॥

यथा—

**सरसिजनयनो मान्यश्शिरसा सततं महत्त्वमभिलषता । इति सुमहानहिशैलो विबोधयंस्तं शिखामणीकुरुते ॥६२३॥**

महत्त्वं पूज्यत्वम् । सुमहान् अतिपूज्यः अतिपृथुलश्च । अत्र कारीषोऽग्निरध्यापयति भिक्षा वासयतीतिवदानुकूल्ये णिचः प्रयोगादहिशैलस्य च भगवच्छिखामणीकरणरूपस्य महत्त्वाभिलाषिजनगतभगवत्कर्मकशिरोमाननविषयकबोधानुकूलाचरणस्य संभवान्मयेवान्येनापि भगवान् शिरसा मान्य इत्यौपम्यसद्भावाच्च संभवद्वस्तुसंबन्धमूलाऽपि निदर्शना संभवति । न च विबोधयन्निति गम्योत्प्रेक्षैव स्यादिति वाच्यं, वस्तुतो विबोधनसंभवादेव तस्याः प्रसक्त्यभावात् । एवमेव हि—

चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्याऽऽतिथेयीति बोधयन्गृहमेधिनः ॥

इत्यत्राहुः । इदं च 'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते' इत्युक्तेन यथा धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमिति मते

संगच्छते । यदि तु यत्नार्थकात्कृञस्तुचि सविषयार्थकधातूत्तरक-र्तृप्रत्ययस्याश्रयत्वे निरूढलक्षणया यत्नाश्रयः कर्तृपदार्थः । स एव च कर्तृप्रत्ययानां मुख्यार्थः अचेतनस्तु भाक्त इति न्यायेन पर्यालोच्यते तदा बोधयन्नित्यत्र गम्योत्प्रेक्षा संभवत्येवेत्यप्याहुः । तद्वदत्राप्युत्प्रेक्षा संभवतीति ध्येयम् ॥

यथावा—

**संसिद्ध्यैव श्रीमान्भवति महीभृच्छिरोभिपूज्य पदः । इति दर्शयितुं फणभृत्पतिगिरिशिखरे पदं न्यधाच्छौरिः ॥ ६२४॥**

संसिद्ध्या प्रकृत्यैव 'सांसिद्धिप्रकृती इमे' इत्यमरः । पदं चरणं स्थानं वा । अत्र भगवान् स्वकीयया फणिगिरिशिखरा-धिकरणकचरणाधानक्रियया परान्प्रति निसर्गत एव श्रीमान्म हीभृच्छिरोऽभिपूज्यपदो भवतीति सदर्थं बोधयन्निबद्ध इति भ-वतीयं सदर्थनिदर्शना । एवमुत्तरत्रापि ॥

यथावा—

**वनमालामाश्रितमपि लक्ष्मीर्न जहाति पुरुष-मतिपुण्यम् । इति वृषशिखरिणि लक्ष्मीर्वनमा-लिन उरसि सततमपि वसति ॥ ६२५॥**

अतिशयितं पुण्यं यस्य तं अतिमात्रसुकृतशालिनमित्यर्थः । भगवत्पक्षे अतिक्रान्तः पुण्यं अतिपुण्यः तं तथोक्तं 'न सुकृतं न दु-ष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते, तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्यादिश्रुतिभ्यः । पाप्मशब्दोऽत्र पुण्यपापरू-पोभयविधकर्मपर इति स्थापितमाकरेषु । शिष्टं स्पष्टम् ॥

आद्ये उदाहरणे विबोधयन्निति शत्रा द्वितीये दर्शयितुमिति तुमुन्नन्तेन शब्देन बोधनम् । इह तु गम्यमानं तत् । आद्यं शुद्धं अन्ये तु श्लेषसंकीर्णे इति च विशेषः ॥

असदर्थनिदर्शना यथा—

**सद्गोत्रप्रवरोऽपि प्रभुणा बहुवञ्चको ह्यधःक्रियते । इति दर्शयते हरिणा फणिगिरिरधरीकृतो बहुक्रोष्टा ॥ ६२६ ॥**

गोत्रं प्रवरश्च गोत्रप्रवरौ, सन्तौ गोत्रप्रवरौ यस्य स तथोक्तोपि सत्कुलप्रसूतोपीत्यर्थः । पक्षे उत्तमशैलश्रेष्ठोऽपि । बहूनां वञ्चकः अतिसंधाता । पक्षे बहवो वञ्चकाः सृगालाः यस्मिंस्तथोक्तः अधःक्रियते न्यक्क्रियते अधरीक्रियते च । अत्र फणिगिरिर्भगवत्कर्तृकस्वकर्मकाधःकरणक्रियया स्वकीयया दृष्टान्तभूतया अन्योऽप्येवं सद्गोत्रप्रवरोऽपि बहुवञ्चकश्चेत्प्रभुणाऽधःक्रियत इत्यसदर्थं बोधयन्निबद्ध इति भवतीयमसदर्थनिदर्शना ॥

यथावा—

**भगवन्मुखप्रसादासहनानां गतिरियं भवित्रीति । संदर्शयन् जनानामिन्दुरुपैद्रौरवानुबन्धमलम् ॥**

इन्दोर्भगवन्मुखप्रसादासहनत्वं च तदौपम्ये पर्यवस्यतीति रहस्यम् । रौरवस्य तन्नाम्नो नरकस्य अनुबन्धं संबन्धं अलं उपैत् । वस्तुस्थितिस्तु रुरोः मृगस्यायं रौरवः । अण् । स चासावनुबन्धश्च तेन मलं कलङ्कमिति । अत्र रौरवानुबन्धं भजन्निन्दुरात्मवद्भगवन्मुखप्रसादासहिष्णूनां रौरवप्राप्तिर्भविष्यतीत्यसदर्थं बोधयन्निबद्धः ॥

यथावा—

वैश्वानरो मुरारे त्वत्तेजस्स्पर्धिनां गतिं प्रथयन्।
वैमुख्यभाक् स्ववर्णे श्वामध्य उपैदथान्त्यजनर-
त्वम् ॥ ६२८ ॥

वैश्वानरः त्वत्तेजसा सह स्पर्धमानानां गतिः एवं भवि-
त्रीति प्रथयन् सन् स्ववर्णे स्वकीयवर्णे स्ववाचकाक्षरसमुदाये
च । जात्यभिप्रायकमेकवचनम् । वैमुख्यं विमुखतां भजतीति
तथोक्तः स्ववर्णाद्भ्रष्ट इति यावत् । पक्षे वै इत्याकारकं मुख्यं
मुखे भवं वर्णं अक्षरं भजतीति तथोक्त इत्यर्थः । अत एव
मध्ये एतस्मिन्नन्तरे श्वा शुनकस्सन् । पक्षे श्वा इति वर्णो
मध्ये यस्य सः श्वामध्य इत्यर्थः । अथ अनन्तरं अन्त्यजन-
रत्वं चण्डालतां उपैत् लब्धवान् 'श्वानयोनिशतं प्राप्य च-
ण्डालेष्वभिजायते' इत्युक्तरीत्येति भावः । पक्षे अन्त्ये अन्ति-
मभागे जातौ नरौ नकाररेफौ यस्य स तथोक्तः तस्य भावं
उपैत् । अत्र वैमुख्यादिभाग्वैश्वानरः भगवत्तेजस्स्पर्धिनां गति-
रीदृशीत्यसदर्थं बोधयन्निबद्धः ॥

यथावा—

त्वद्भुचिहीनोहन्ताममतास्पदतां मसार एत्या-
दौ । भूत्वाऽसारः प्रथयत्यनर्थकारणमहंममग्रा-
हम् ॥ ६२९ ॥

मसारः इन्द्रनीलः 'मसार इन्द्रनीले स्यात्' इत्युक्तेः 'म-
सारगल्वर्कमुखः' इति श्रीरामायणे प्रयोगश्च । त्वद्भुचिहीनः

त्वयि रुच्या प्रीत्या हीनः। पक्षे त्वद्रुच्यपेक्षया हीनः न्यूनरुचिरिति यावत् । आदौ प्रथमं अहन्ताममतयोः अहंकारममकारयोः। अहंममेत्युभयमपि विभक्तिप्रतिरूपकमव्ययं, ताभ्यां तल्। आस्पदतां आश्रयतां एत्य अत एव असारः निस्सारः भूत्वा अहंममग्राहं अहंममाभिमानं अनर्थकारणं प्रथयति।

> अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः।
> अविद्यातरुसंभूतिबीजमेतद्द्विधा स्थितम्॥

इत्याद्युक्तरीत्या संसारचक्रभ्रमणपूर्वकनिस्सारतालक्षणानर्थहेतुतां बोधयतीत्यभिप्रायः । पक्षे—मसारशब्दः त्वद्रुचिहीनः मसारशब्दे भगवद्रुचिहीनतोक्तिश्शब्दार्थतादात्म्याभिमानकृता । हन्त अमं अतास्पदतामिति च्छेदः । आदौ प्रथमभागे अमं मकाररहितं यथास्यात्तथा अतास्पदतां अतायाः अवर्णत्वस्य आस्पदं आश्रयः अवर्ण इत्यर्थः । तस्य भावं अत्वं एत्य मकारलोपेन तत्रैवाकारतां प्राप्येत्यर्थः। 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गायेत' इत्यत्र गिरापदं प्रतिषिध्य विधीयमानमिरापदं यथा गिरापदस्थान एव भवति, एवमिहापि मवर्णं प्रतिषिध्य विधीयमानः अवर्णोऽपि तदीय एव स्थाने भवतीति ध्येयम् । एवं सर्वत्रेदृशस्थलेषु द्रष्टव्यम् । अत एव असारः भूत्वा उक्तरीत्या मकारोत्सारणेन अकारन्यसनेन च असार इति निष्पन्न इत्यभिप्रायः। स्फुटमन्यत्। अत्र अहंताममतास्पदीभूततया भगवत्यरुचिं भजमानोऽसारोभवन्मसारः अहंममग्राहं उक्तविधानर्थकारणमित्यसदर्थं प्रथयन्निबद्धः। शब्दार्थतादात्म्यावलम्बिश्लेषभित्तिकाभेदाध्यवसायमूलातिशयानिर्व्यूढेयम्। एवं पूर्वोदाहरणेऽपि द्रष्टव्यम्॥

यथावा—

**अप्युच्चैर्जन्मजुषो जडजन्त्वनुगाः पतन्त्यधोऽ-ध इति। मरुदात्मम्भरिपरिबृढगिरिशिखरान्निर्झराः प्रणिपतन्ति ॥ ६३० ॥**

अत्राधोऽधः पतन्तीति बोधयन्त इति वक्तव्ये बोधयन्त इत्यस्य गम्यमानत्वादप्रयोगः। ततश्च उच्चैः उन्नतप्रदेशे जन्मजुषोपि जडजन्त्वनुगामितया स्वयंपतनक्रियाविशिष्टा निर्झराः स्वकीयया पतनक्रियया दृष्टान्तभूतया अन्येऽप्येवंविधा अधोऽधः पतन्तीत्यनिष्टपर्यवसायिनमर्थं बोधयन्त एव पतन्तीत्येवंविधार्थनिबन्धनादसदर्थनिदर्शना श्लेषोत्तम्भितेति ध्येयम् ॥

इत्यलंकारमणिहारे निदर्शनासर एकविंशः.

## अथ व्यतिरेकालंकारसरः.

**उक्तः कश्चिद्विशेषश्चेदुपमानोपमेययोः ।**
**तमाहुर्व्यतिरेकाख्यमलंकारं विचक्षणाः ॥**

अधुना भेदप्रधानालंकारवर्णनम् । तत्र उपमानोपमेययोर्यथाकथंचिद्भेदवर्णनं व्यतिरेकः। तेन उपमेयोत्कर्षे उपमानोत्कर्षे उभयोत्कर्षापकर्षाप्रतीतावपि यत्किंचिद्वैधर्म्यमात्रेऽप्ययं भवतीति ध्येयम् ॥

तत्रोपमेयोत्कर्षे यथा—

उरगाचलपतिमानसमुदधेर्मध्यमिव भाति ग-
म्भीरम् । मन्दरसंक्षुभितमभूच्चरमं प्रथमं तु नो
कदाचिदपि ॥ ६ ३ १ ॥

मन्दरेण संक्षुभितं, पक्षे—मन्दो रसः यस्य तत् क्षुभितं व्याकुलितं च । स्पष्टमन्यत् ॥

यथावा—

अञ्जनगिरिनायकतनुरासितिमरुचिरा चकास्ति
यमुनेव । तपनं दूरीकुरुते प्रथमा चरमा तु तप-
नतनुजाता ॥ ६ ३ २ ॥

तपनं नरकविशेषम् । तपनस्य भानोः तनुजाता तनया 'तपनो दुष्करेऽपि स्याद्भास्करे निरयान्तरे' इति मेदिनी ॥

यथावा—

किरणस्फुटारविन्दः प्रभावितानेमितस्फुरन्मू-
र्तिः । रविरिव हरिहेतीशस्स हि दुर्दर्शस्सुदर्शनोऽ
यं तु ॥ ६ ३ ३ ॥

हरेर्भगवतः हेतीशः चक्रराजः रविरिव किरणैः स्फुटानि विकचानि अरविन्दानि यस्य स तथोक्तः । अन्यत्र—किरणैः स्फुटाः प्रव्यक्ताः ये अराः परितो नाभ्यर्पितशलाकाः 'अरं शीघ्रे च चक्राङ्गे' इति मेदिनी । तान्विन्दतीति तथोक्तः । क- र्मण्यण् । प्रभाविताने तेजोमण्डले । यद्वा प्रकृष्टा भाः येषां ते

प्रभासः अग्न्यादयस्तेजस्विनः तेषां विताने समुदये अमितं अपरिच्छिन्नं यथायथा स्फुरन्ती मूर्तिर्यस्य स तथोक्तः। अन्यत्र प्रभायाः अविता रक्षकः प्राप्ता वा। अवतेः रक्षणार्थकाद्वाप्त्यर्थकाद्वा ताच्छील्ये तृन्। नेमितः नेम्या परितस्थितेन वलयेन स्फुरन्मूर्तिः 'चक्रं रथाङ्गं तस्यान्ते नेमिस्स्त्री' इत्यमरः! सः रविः दुर्दर्शः अयं हेतीशः सुदर्शनः शोभनं दर्शनं यस्य स तथोक्तः। सुदर्शनशब्दः पुंस्त्वेऽप्यनुशिष्टः। तथाच मेदिनी 'सुदर्शनो हरेश्चक्रे मेरुजम्बूद्रुमे पुमान्' इति 'सुदर्शनोस्त्रियां चक्रे' इति नामनिधानं च। माघश्च 'बन्धुरेष जगतां सुदर्शनः' इति प्रायुङ्क्त॥

यथावा—

**निश्वसनविचलदलकं लसदलिकं नलिनमिव भवद्वदनम्। जननि परं त्वत्रान्त्यं कनति तरामब्जकरशुभालोकैः॥ ६३४॥**

निश्वसनेन विचलन्तः अलकाः चूर्णकुन्तलाः यस्य तत्तथोक्तम्। पक्षे—नितरां श्वसनेन मरुता विचलन्तीति विचलानि, पचाद्यच्। दलानि पत्राणि यस्य तत्तथोक्तं 'शेषाद्विभाषा' इति कप्। लसत् अलिकं ललाटं यस्य तथोक्तं 'ललाटमलिकं' इत्यमरः। पक्षे–लसन्तः अलयो भ्रमराः यस्मिंस्तत्तथोक्तं, पूर्ववत्कप्। परंतु अन्त्यं भवद्वदनं अब्जस्य चन्द्रमसः कराणां किरणानां शुभैः आलोकैः प्रकाशैः, पक्षे—अब्जः शङ्खः करे यस्य स तथोक्तः भगवानित्यर्थः। तस्य शुभैः कल्याणैः आलोकैः कटाक्षैः कनतितराम्॥

यथावा—

**परकीयः पक्कणराड्डणराड्भवति तावकीनस्तु हरे। सिध्यति नृणामनयोरुत्कटसंयोगमात्रतो रूपभिदा ॥६३५॥**

हे हरे परकीयः त्वदितरोपासकः पक्कणराट् शबरनिवासभूतकुग्राममात्रप्रकाशवान् भवति। पक्कणे राजत इति विग्रहे क्विप् 'पक्कणश्शबरालयः' इत्यमरः। तावकीनः त्वामुपासीनस्तु पट्टणराट् राजधान्याः राजा भवति 'राज्ञि राट्' इत्यमरः। 'पट्टणं पुटभेदनम्' इति पठन्तो वाचस्पतिप्रभृतयः तवर्गमध्यान्त्यपत्तनशब्दवट्टवर्गमध्यान्त्यपट्टणशब्दोऽप्यस्तीति मन्यन्ते। अत एव 'अट्टशूलाः कतिपये पट्टणेऽस्मिन्प्रतिष्ठिताः' इति प्रयोगश्च प्रासवद्धस्संगच्छते। रूढश्चायं शब्दो नात्र विप्रतिपत्तव्यम्। अनयोः पक्कणपट्टणराजोः उत्कटोऽतिमात्रः यस्संयोगस्संसर्गः तन्मात्रेण तावतैव नृणां संसर्गिणां नराणां रूपभिदा सिध्यति 'संसर्गजा दोषगुणा भवन्ति' इति न्यायात् पक्कणराट्संसर्गेण महतामपि निहीनत्वं पट्टणराट्संसर्गेण निहीनानामपि महत्त्वं चेत्येवंरूपभेदस्सिध्यतीति भावः। उत्कृष्टः कटयोर्वर्णयोः यस्संयोगः 'हलोऽनन्तरास्संयोगः' इत्युक्तलक्षणः औचित्यात् ककारस्य ककारेण टकारस्य टकारेणैव संयोगोऽत्र विवक्षितः। उत्कटसंयोग एव उत्कटसंयोगमात्रं तस्मात् ततः रूपभिदा सिध्यति। संयुक्तककारटकाराभ्यामेव पक्कणराट्पट्टणराट्छब्दयोर्वैलक्षण्यं नान्यवर्णेष्विति भावः। अत्राद्ये उदाहरणचतुष्टये व्यतिरेकमूलभूता उपमा शाब्दी। अत्र तु उपासनादिप्रयुक्ता गम्येति भिदा॥

यथावा—

**करिभयकारी गिरिशः करिभयवारी फणाधर-गिरीशः । वर्णे धवळासितयोरनयोः कावा भिदा-ऽस्ति हरहर्योः ॥ ६ ३ ६ ॥**

गिरिशः धूर्जटिः करिणः गजासुरस्य भयकारी, फणाधरगिरीशस्तु करिभयवारी गजेन्द्रभयनिवारयिता । वर्णे वर्णविषये धवळासितयोः यथासंख्यं सितनलियोः अनयोः हरहर्योः का वा अभिदा अस्ति न काऽप्यभिदा, किंतु भेद एव स्पष्ट इत्यर्थः । पक्षे—वर्णे अक्षरे विषये कावाभिदा कावाभ्यामेव-भेदः करिभयकारिकारिभयवारिशब्दयोः कावावर्णाभ्यामेव भेदो न वर्णान्तरेष्वित्यर्थः । किंच—हरहर्योः कावा काऽपि अभिदा अकारेणैव भिदा हरशब्दे द्वावकारौ हरिशब्देत्वेक एव स इति भेद इत्यर्थः । अत्र भयकार्यपेक्षया भयवारिण उत्कर्षस्सर्वलोकसाक्षिकः, भयाभयप्रदयोरभयप्रदस्यैव श्रेयस्त्वात् । अत्र हरिशब्दस्य 'द्वंद्वे घि, अभ्यर्हितं पूर्वम्' इति पूर्वप्रयोगावश्यंभावेऽपि 'लक्षणहेत्वोः' इति सूत्रनिर्देशात्तस्य प्रकरणस्यानित्यत्वमनुसृतं विवक्षितचमत्कारानुरोधादिति ध्येयम् । इहापि पूर्वोदाहरणवदीश्वरशब्दवाच्यत्वादिप्रयुक्तमौपम्यं गम्यम् ॥

यथावा—

**सारसनाभिख्याढ्या दशनाळिस्तव मदम्ब रशनाळिश्च । मुख्याऽऽद्या मध्यस्था पराऽनयोर्भवति देवि दरमात्रभिदा ॥६ ३ ७॥**

हे देवि मदम्ब सा प्रसिद्धा तव दशनाळिः रसनायाः रसज्ञायाः अभिख्यया शोभया आढ्या परिपक्वदाडिमबीजराजिवत्पाटलवर्णतया भासमानेत्यर्थः । रशनाळिः मेखलापङ्क्तिश्च । यद्वा रशना आळिस्सेतुरिव रशनाळिः 'सेतुराळौ स्त्रियां पुमान्' इत्यमरः । स्त्रियां विद्यमानायामाळौ सेतुः पुमानिति कोशार्थः । सारसनामित्यभिख्यया नाम्ना आढ्या 'सप्तकी रशना तथा । क्लीबे सारसनं च, अभिख्यानामशोभयोः' इति चामरः । अनयोर्मध्ये आद्या दशनाळिः मुख्या श्रेष्ठा मुखे भवा च, अपरा रशनाळिः मध्यस्था मध्यमा अवलग्नस्था च । अनयोः दरमात्री अल्पपरिमाणा भिदा भेदः । दरमात्री च सा भिदा चेति विग्रहः । मुख्यत्वमध्यस्थत्वे एव भेदो नान्य इत्यर्थः । पक्षे दराभ्यां दकाररेफाभ्यामेव भेदः दशनाळिरशनाळिशब्दयोस्तावतैव भेदः तुल्यत्वादन्यवर्णानुपूर्व्या इति भावः ॥

यथावा—

**तव कृपया मुक्तेन्द्रावाविर्भूतस्वरूपसंपन्नौ । एकस्स्वराट्परस्तु स्वाराडास्फूर्तिमांस्तयोर्भेदः ॥**

हे भगवन्निति प्रकरणाल्लभ्यते । तव कृपया मुक्तः प्रकृतिबन्धविनिर्मुक्तः पुमान् इन्द्रश्शक्रश्च मुक्तेन्द्रौ आविर्भूतस्वरूपसंपन्नौ । मुक्तपक्षे आविर्भूतं यत्स्वरूपं अपहतपाप्मत्वादिब्राह्मगुणविशिष्टं स्वरूपं तेन संपन्नः, पूर्वं कर्मारब्धशरीरसंबन्धवत्तया तिरोहितापहतपाप्मत्वादिः पश्चात् 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तरीत्याऽऽविर्भूतस्वस्वरूप इत्यर्थः । अत्र संपद्याविर्भावाधिकरणार्थोऽनुसंधेयः । इन्द्रपक्षे आविर्भूतः प्रादुर्भूतः प्रकाशमान इति यावत् । यः स्वरुः शतकोटिः 'शतको-

टिस्स्वरुड्शम्बः' इत्यमरः। तेन उपसंपन्नः इन्द्रस्य वज्रायुधला-भोऽपि भगवत्कृपायत्त एवेति भावः। एकः अनयोर्मध्ये प्रथम-निर्दिष्टो मुक्तः स्वराट् स्वेन राजत इति स्वराट् अकर्मवश्य इत्यर्थः। 'स स्वराट् भवति' इति श्रुतेः। सूत्रितं च 'अत एव चानन्याधिपतिः' इति। 'अपहतपाप्मा सत्यसङ्कल्पः' इति श्रव-णादेवाकर्मवश्य इति सूत्रार्थः। परः अनन्तरनिर्दिष्ट इन्द्रस्तु स्वाराट् स्वेन न राजत इति स्वाराट् कर्मपरतन्त्र इत्यर्थः। पक्षे—स्वः स्वर्गस्य राट् राजा। स्वरिति रेफान्तमव्ययम्। 'रोरि' इति रेफलोपे 'ढ्रलोपे पूर्वस्य' इति दीर्घः 'स्वाराण्णमुचिसू-दनः' इत्यमरः। तयोः मुक्तमहेन्द्रयोः भेदः आस्फूर्तिमान् ईषत्स्फु-रणवान्। आङीषदर्थे। अत्यल्प एव भेद इत्यर्थः। यद्वा - आ सम-न्तात्, आङभिविधौ। स्फूर्तिमान् अकर्मवश्यकर्मपरतन्त्रयोर्महान् भेद इति भावः। 'आङीषदर्थेऽभिव्याप्तौ' इत्यमरः। यद्वा - उक्त-रीत्या अनयोस्तौल्येऽपि भेदोपि कश्चित्संभवेद्वा न वेति मीमांस-मानस्स्मरन्नाह—आः स्फूर्तिमानिति। तयोः मुक्तमहेन्द्रयोः भेदः एकस्स्वराट् अन्यस्स्वाराडिति वैलक्षण्यं स्फूर्तिमान् इदानीं स्मृ-त इत्यर्थः। आ इति स्मरणार्थकं प्रगृह्यसंज्ञकमव्ययम्। 'आ प्रगृ-ह्यस्स्मृतौ' इत्यमरः। पक्षे—आस्फूर्तिमान् ह्रस्वाकारदीर्घाकाराभ्यां स्फुरणवान्। स्वराट्स्वाराट्छब्दयोस्तावतैव भेददर्शनादिति भावः॥

यथावा—

**कमलाननो हरे त्वं कमलासन एव तव सुतो जज्ञे। नसभेदो गणनीयो लोकेशाविति युवां यतो विदितौ ॥ ६ ३ १॥**

हे हरे! त्वं कमलाननः कमलायाः श्रियः अननः प्राणयिता। अन्यते अनेनेत्यननः, कमलवदनश्च। तव सुतः ब्रह्मा कमलासनः श्रीनिरासकः अस्यते अनेनेत्यसनः, कमलायाः असन इति विग्रहः। पद्मोपविष्ट इति च। सः उक्तप्रकारः भेदः वैलक्षण्यं न गणनीयः उपेक्षणीयः अत्यल्पभेदस्याकिंचित्करत्वादिति भावः। यतो हेतोः युवां स च त्वं च युवां 'त्यदादीनां मिथस्सहोक्तौ यत्परं तच्छिष्यते' इत्यनुशासनात्परभूतयुष्मच्छब्दैकशेषः। लोकेशाविति विदितौ। लोकेशत्वेन विदितयोर्युवयोः कियानयं भेद इति भावः। प्रसिद्ध्यति हि चतुराननस्यापि लोकेशत्वं 'हिरण्यगर्भो लोकेशः' इत्युक्तेः। पक्षे नसाभ्यां नसवर्णाभ्यां भेदः गणनीयः। कमलाननकमलासनयोस्तावतैव भेददर्शनादिति भावः। अत्र 'सारसनाभिख्याख्या' इत्याद्युदाहरणत्रये सारसनेत्यादिश्लेषप्रतिभोन्मीलिततुल्ययोगितानुप्राणितो व्यतिरेक इति विशेषः॥

यथावा –

**पत्रिण्यासीच्छ्येनी फणिगिरिनाथ त्वदीयकीर्तिश्च। प्रथमा शशादनीति प्रथिताऽन्त्याऽऽत्मौजसा शशिनमत्ति॥ ६४०॥**

हे फणिगिरिनाथ! पत्रिणी तदाख्या काचिद्विहगी श्येनी श्येनाख्या आसीत् 'अथ शशादनः। पत्री श्येनः' इत्यमरः। 'श्येने पत्रिशशादनौ' इत्यमरमाला। 'श्येनाख्यो विहगः पत्री पत्रिणौ शरपक्षिणौ' इति शाश्वतश्च। पत्रिशब्दात् नान्तलक्षणो ङीप्। जातिलक्षणो ङीष् वा। त्वदीयकीर्तिश्च श्येनी आसीत् उक्तोऽर्थः। पक्षे—श्वेतवर्णा अभूत् 'विशदश्येतपाण्डुराः' इत्यमरः। श्येतशब्दात् स्त्रीत्वविवक्षायां 'वर्णादनुदात्तात्तोपधात्तो

नः' इति ङीप्संनियोगशिष्टस्तकारस्य नकारः। 'श्येनः पक्षिणि पाण्डुरे' इति मेदिनीकोशात्तु पुंस्यपि नोपधश्शेचनशब्दोऽस्तीति ज्ञायते। तस्मात् पिप्पल्यादेराकृतिगणत्वात् ङीष् बोध्यः प्रथमा तयोराद्या पत्रिणी शशमत्तीति शशादनी प्रथिता तन्नाम्ना प्रसिद्धा। अन्त्या त्वदीयकीर्तिस्तु आत्मौजसा निजतेजसा शशिनं शशवन्तं, इन्दुमिति वास्तवार्थः। अत्ति कवळयति आच्छादयतीति यावत्॥

यथावा—

**काको रराद हृदयं पिकस्तु तव वचनदास्यतो हृद्यः। द्विजयोरपि जननि तयोः काऽपि भिदा व्यञ्जने स्वरेऽप्यस्ति॥ ६४१॥**

हे जननि! काकः वायसः ऐन्द्रिरिति भावः। तव हृदयं वक्षः रराद विलिलेख 'रद विलेखने' लिट्। यद्वा—काकः साधारणो वायसः हृदयं शृण्वतां चित्तं रराद स्वरकार्कश्येन उद्वेजयामासेति यावत्। पिकः कोकिलस्तु तव वचने दास्यतः दासभावात् 'त्वदास्यदास्येऽपि गतोऽधिकारितां न शारदः' इत्यादाविवास्य औपम्ये पर्यवसानम्। हृद्यः तव हृदयप्रियोऽभूत्। पक्षे—शृण्वतां स्वरमाधुर्येण मनोहरोऽभूदित्यर्थः। तयोः काकपिकयोः द्विजयोः विप्रयोस्सतोरपि पक्षिणोस्सतोरपीति वस्तुस्थितिः। काऽपि अनिर्वचनीया भिदा भेदः व्यञ्जने चञ्चुपक्षादिचिह्ने स्वरे ध्वनौ च अस्ति 'व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि' इत्यमरः। पक्षे—काकपिकशब्दयोः का पि इति वर्णयोर्विद्यमाना भिदा व्यञ्जने ककारपकाररूपे हल्वर्णे स्वरे आकारेकाररूपे अज्वर्णेऽपि अस्ति हल्ज्वर्णयोरुभयोरप्य-

स्ति न त्वन्तिमककारयोः, तत्रोभयोरप्यैकरूप्यदर्शनादिति भावः । उदाहरणद्वयेऽस्मिन् श्लेषप्रतिभोत्तम्भितदीपकानुप्राणितो व्यतिरेक इति विशेषः । स च ' उरगाचलपतिमानसम् ' इत्याद्येतदन्तेष्वेकादशसु पद्येषूपमेयोत्कर्षपर्यवसायीति ध्येयम् ॥

उपमानोत्कर्षे यथा—

**आकाशगङ्गयाढ्यौ मेरुः फणिभूधरश्च तत्राद्यः । विश्वंभरामधरयत्यन्यो विश्वंभराधरीभूतः ॥**

विश्वंभरां भुवं अधरयति अधस्तात्करोति । विश्वंभरायाः भुवः । पक्षे—विश्वंभरस्य भगवतः अधरीभूतः ॥

यथावा—

**त्वमिवानन्ताश्रयभागहमप्यम्भोद नौ भिदा त्वियती । ऊष्मागमभवतापं त्वं तिरयस्यहमिमं वहे मूर्ध्नः ॥ ६४३ ॥**

अनन्तस्य अन्तरिक्षस्य भगवतश्च । ऊष्मागमभवः ग्रीष्मजन्यः तापः संज्वरः तम् । पक्षे—ऊष्मा तीक्ष्णः आगमः प्राप्तिरस्य स तथाभूतः भवस्संसारः तस्मात्तापं आध्यात्मिकादिकम् । अन्यत्सुगमम् ॥

यथावा –

**त्वदपाङ्गाच्छ्रीलाभो दिशांपतीनां विशांपतीनां च । तुल्यो दिवि स्थितौ पुनरस्ति भिदा फणिगिरीन्द्रमणिदयिते ॥ ६४४ ॥**

दिवि स्वर्गे स्थितौ पुनः अवस्थाने तु भिदा भेदः अस्ति। दिशांपतीनां स्वर्गस्थितिरस्ति, विशांपतीनां तु सा नास्तीति भिदा। पक्षे—दिशांपतीनां विशांपतीनामित्यत्र दि वि इति वर्णयोः स्थिताबेव भिदा अन्यवर्णानां तौल्यात्। अन्यद्व्यक्तमेव। अस्मिन्नुदाहरणत्रयेऽपि उपमानोत्कर्षः। अन्यत्सर्वं पूर्ववदेव॥

उभयोत्कर्षापकर्षाप्रतीतौ यथा—

**घनसारशितिश्श्रुतिशतविदिता मूर्तिस्तवेश कीर्तिश्च। एते स्तोतुमशक्ये मूकीभावो विशिष्यतेऽत्र परम्॥६४५॥**

हे ईश! श्रीनिवास! तव मूर्तिः कीर्तिश्च घनसारः जलदवरः 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः। स इव शितिः नीला। पक्षे—घनसारः कर्पूरः 'अथ कर्पूरमस्त्रियां। घनसारः' इत्यमरः। स इव शितिः धवला 'शिती धवलमेचकौ' इत्यमरः। श्रुतिशते विदिता 'नीलतोयदमध्यस्था, श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामम्' इत्यादिश्रुतिषु नीलतोयदश्यामलतया प्रथिता। कीर्तिपक्षे श्रुतिशतैः श्रोतृजनश्रोत्रसहस्रैः विदिता ज्ञाता। यद्वा—धवलतया प्रथितेत्यर्थः। यद्वा—मूर्तिरप्राकृतत्वादिभिः प्रथिता। कीर्तिस्तु—'तस्य नाम महद्यशः' इत्युक्तरीत्या महत्त्वेन प्रथितेत्यर्थः। एते मूर्तिकीर्ती स्तोतुमशक्ये श्रुतिशतप्रथिते ते वर्णयितुं कस्य मितंपचवचसश्शक्तिरिति भावः। अत्र अनयोर्मूर्तिकीर्त्योः मूकीभावः मू की इत्याकारवर्णसत्त्वैव विशिष्यते तुल्यत्वाद्वर्णान्त-

रस्यायमेव विशेषो नान्य इति भावः । वाच्यवाचकयोस्ता-दात्म्यमिह शरणम् । अन्यथा विवक्षितव्यतिरेकस्यार्थगतत्वा-संभवात् । किंच अत्र एतत्स्तुतिविषये मूकीभावो विशिष्यते। अस्मादृशां मौनेनावस्थानमेव श्रेय इत्यर्थः । अत्र श्लेषानुप्रा-णित उत्कर्षापकर्षयोरविभावनादनुभयव्यतिरेकः । एवमुत्तरोदा-हरणेष्वपि द्रष्टव्यम् ॥

यथावा—

त्वं खलु जगतीमाता जगतीत्राताऽब्धिपुत्रि तव दयितः । सर्वैर्गुणैस्सदृशयोर्मात्राभेदः परं भ-वति युवयोः ॥ ६४६ ॥

मात्रया लेशतः भेदः अनिर्वचनीयं यत्किंचिदेव वैलक्षण्यं न तु सर्वात्मनेति भावः 'स्त्रियां मात्रा त्रुटिः पुंसि लवले-शकणाणवः' इत्यमरः । पक्षे—मावर्णत्रावर्णाभ्यामेव भेद इत्यर्थः ॥

यथावा—

कामोऽत्र बाधते मां यमः परत्रानयोस्स्वत-स्समयोः । भेदस्तु कायमात्रादाधत्स्व कृपां ततो मयि मुकुन्द ॥ ६४७ ॥

स्वतः स्वभावत एव समयोः बाधितृत्वेन तुल्ययोः । प-क्षे—मवर्णसहितयोः अनयोः कामयमयोः भेदस्तु कायमात्रात् शरीरत एव भेदो न तु गुणत इति भावः । यद्वा—कामस्य कायो नास्ति यमस्य तु सोऽस्तीति तन्मात्राद्भेद इत्यर्थः । काकारयकाराभ्यामेव भेद इत्यप्यथाऽनुसंधेयः ॥

यथावा—

पूर्वं नरकानुगुणावाशुगचक्रेण लूनमूर्धानौ।
भवता सदूषणौ यौ मुखमात्रभिदा तयोर्हि मुर-
खरयोः ॥६४८॥

नरकस्य नरकासुरस्य निरयस्य च अनुगुणौ अनुरूपौ एकत्र तन्मित्रत्वात् अपरत्र पापकारित्वादिति भावः। दूषणेन दोषेण दूषणनाम्ना रक्षसा च सह वर्तेते इति सदूषणौ। यौ पूर्वं भवता आशुगेन चक्रेण सुदर्शनेन आशुगानां विशिखानां चक्रेण जालेन विलूनमूर्धानो अभूतामिति शेषः। तयोः मुर-खरयोः तन्नाम्नोर्दैत्यरक्षसोः मुखमात्रेण भिदा मुरस्य त्रिशीर्ष-त्वेन त्रिमुखता खरस्य एकशीर्षतया एकमुखतैवेतीयानेव भेदः उक्तगुणानां तौल्यात्। मुवर्णखवर्णाभ्यामेव भेद इत्यर्थान्तरं च॥

यथा वा—

ये निन्दन्त्यखिलगुरुं गोविन्द त्वाममन्ददुरित-
वशाः। भाषणमेषां भषणं केवलमाकारतोऽन-
योर्भेदः ॥६४९॥

भाषणं उक्तिः, भाषतेर्ल्युट्। भषणं श्वरवः 'भष भर्त्सने' 'इह भर्त्सनं श्वरवः' इत्युक्तेः। अस्माल्ल्युट्। अनयोः भा-षणभषणयोः आकारमात्रतः मनुजशुनकमुखोद्गीर्णत्वरूपस्वरूप-मात्रे भेदः अन्यत्र अकारदीर्घाकाराभ्यामेव भेदः। अन्य-वर्णानुपूर्वी तु तुल्यैव॥

यथा वा—

**परबलहरहरिकलितौ श्वेतो द्वीपो द्विपश्च खलु तुल्यौ। कियती भिदाऽनयोस्स्यात्सवर्णयोरेव स-र्वथाऽपि सतोः ॥ ६५० ॥**

श्वेतो द्वीपः श्वेतो द्विपः ऐरावतश्च। परेषां द्विषां बलं सामर्थ्यं सैन्यं वा तस्य हरः हर्ता हरिर्भगवान् तेन कलित इति श्वेतद्वीपपक्षे। ऐरावतपक्षे तु—परः वैरी बलः बलासुरः तस्य हरः हरिरिन्द्रः तेन कलितः। तयोरेकशेषः। अत एव तु-ल्यौ। सर्वथाऽपि सर्वप्रकारेणापि सवर्णयोः तुल्यवर्णयोरेव स-तोः द्वयोरपि श्वेतत्वादिति भावः। पक्षे समानानुपूर्वीकाक्ष-रयोरेव सतोः अनयोः श्वेतद्वीपश्वेतद्विपयोः भिदा कियती स्यात् सर्वथा तुल्ययोरनयोरनिर्वचनीययत्किंचिद्वैलक्षण्यसद्भा-वोऽप्यकिंचित्कर इत्यर्थः। पक्षे कियती ईभिदा इति च्छेदः। ईभिदा दीर्घेकारह्रस्वेकाराभ्यां भेदः कियती अत्यल्पेत्यर्थः। यत्किंचिद्वर्णभेदस्सन्नपि न गणनीय इति भावः॥

यथा वा -

**त्वद्वचनशिक्षितध्वनिमाधुर्यौ द्वाविमौ समौ म-न्ये। अत्र सदापिशुभेदश्चित्ते क्रियतां मदम्ब पिकशुकयोः ॥ ६५१ ॥**

हे मदम्ब! त्वद्वचनेन शिक्षितं ध्वनिमाधुर्यं ययोस्तौ त-थोक्तौ द्वौ इमौ पिकशुकौ समौ मन्ये। अत्र अनयोः पिकशु-कयोः पिशुभेदः पि शु इति वर्णाभ्यामेव वैलक्षण्यं नान्यव-र्णयोरिति भावः। चित्ते क्रियतां अवधार्यताम्। शब्दगतोऽ-

ष्ययं पिशुवर्णभेदः अर्थे शब्दतादात्म्याभिमानकृत इत्यवधेयम्। अर्थान्तरं च—हे शुभे! इति संबुद्धिः। अद इति छेदः। अत्र अनयोः पिकशुकयोः अदः परस्परसादृश्यं सदा चित्ते क्रियतां अनयोस्त्वद्वचनशिक्षितध्वनिमाधुर्यत्वेन तौल्यमस्तीति त्वया परिचिन्त्यतामिति॥

यथा वा—

**अमृतेप्सुविबुधसेव्यौ स वासुदेवश्च वासुकिश्चापि। तुल्यौ वैलक्षण्यं त्वनयोर्ननु देवकीति मात्रैव॥ ६५२॥**

सः प्रसिद्धः वासुदेवश्च वासुकिश्चापि अमृतं ईप्सवो ये विबुधाः ब्रह्मविदः देवाश्च तैः सेव्यौ अत एव तुल्यौ। अनयोः वैलक्षण्यं तु देवकीति मात्रैव देवकीति प्रसिद्धया जनन्यैव ननु। वासुदेवस्य देवकीति मात्रा प्रसिद्धा वासुकेस्तु तादृशी माता नेत्येतावदेव वैलक्षण्यम्। अमृतेप्सुविबुधसेव्यत्वं तु तुल्यमेवेति भावः। पक्षे—वासुदेववासुकिशब्दयोः देवकी इति मात्रैव अल्पमेव वैलक्षण्यम्। आद्ये देवेति वर्णौ अन्त्ये कीति वर्ण इत्येतावानेव भेदः आदिमवर्णद्वयस्योभयत्राप्यैकरूप्यादिति भावः 'स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः' इत्यल्पपर्यायेष्वमरः।

मात्रा कर्णविभूषायां वित्तमाने परिच्छदे।
अक्षरावयवे स्वल्पे क्लीबं कात्स्न्र्येऽवधारणे॥

इति मेदिनी च॥

यथा वा—

यस्यास सहजदेयं राज्यं यस्यापि सहजहेयं तत्। देहे भिदैव नान्या भिदाऽनयोर्भवति रामलक्ष्मणयोः ॥ ६५३ ॥

यस्य रामस्य राज्यं सहजदेयं सहजे भ्रातरि भरते देयं आस बभूव। आसेति तिङन्तप्रतिरूपकमव्ययम्। 'इदमास चिह्नम्' इतिवत्। न त्वस्तेर्लिट् तिङन्तत्वे 'अस्तेर्भूः' इति लिटि भ्वादेशापत्तेः। यद्वा–'अस दीप्तौ' इत्यस्माल्लिडेव। दीप्यत इति देयं कर्मणि 'अचो यत्' इति यत्। राज्यं सहजदेयं दिदीपे इत्यर्थः।

अहं हि सीतां राज्यं च प्राणानिष्टान्धनानि च।
हृष्टो भ्रात्रे प्रदास्यामि भरतायाप्रचोदितः॥

इति तदुक्तेः। यद्वा—सहजेन भरतेन देयं दातुं योग्यमासीदित्यर्थः। 'तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम' इति भरतोक्तेः। यस्य लक्ष्मणस्यापि तत् राज्यं सहजे भ्रातरि सहजेन भ्रात्रा वा हेयं देयं आस। 'ओ हाक् त्यागे' 'अचो यत्' इति यत् 'त्यागो विहापितं दानम्' इत्यमरः। वस्तुतस्तु सहजेन निसर्गेणैव हेयं त्याज्यमित्यर्थः। 'सहजस्तु निसर्गे ना सहोत्थे पुनरन्यवत्' इति मेदिनी। 'सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम्' इत्यादिकमिहानुसन्धेयम्। कैङ्कर्यैकरतित्वात्तस्य राज्यं परिहार्यमासीदिति भाव। अनयोः सहजदेयसहजहेयराज्ययोः रामलक्ष्मणयोः देहे विग्रहे एव

भिदा भेदः नान्या, स्वरूपे उक्तगुणे वा भेदो नास्तीत्यर्थः।

ततः पद्मपलाशाक्षः कृत्वाऽऽत्मानं चतुर्विधम्।
पितरं रोचयामास तदा दशरथं नृपम्॥

इत्युक्तेः। अत्रात्मशब्दो देहवाची। पक्षे सहजदेयराज्यसहजहेयराज्यशब्दयोः दे हे इति वर्णाभ्यामेव भिदा न तु वर्णान्तरैरित्यर्थः। एषु 'घनसाराशितिः' इत्यादिषु नवसूदाहरणेषूत्कर्षापकर्षयोरविभावनादनुभयव्यतिरेको द्रष्टव्यः॥

एवं कुवलयानन्दानुरोधेन व्यतिरेको दर्शितः। अथ काव्यप्रकाशरसगङ्गाधराद्यनुरोधेन प्रदर्शयिष्यते.

प्राचीनरीत्या व्यतिरेकः—

## उपमेयस्योपमानाद्यदा गुणविशेषतः।
## उत्कर्षो वर्ण्यते प्राहुर्व्यतिरेकं तदा बुधाः॥

उपमानादुपमेयस्य गुणविशेषवत्त्वेनोत्कर्षो व्यतिरेकः प्रतीपादिवारणाय तृतीयान्तं वैधर्म्यपरम्। तत्र चोपमेयस्योपमानतामात्रकृत एवोत्कर्षः न वैधर्म्यकृतः, साधर्म्यस्यैव प्रत्ययात्। अधिकगुणत्वमात्रं उपमानगतापकर्षमात्रं वा न व्यतिरेकस्वरूपं, तयोरुपमेयोत्कर्षाक्षेपमन्तरेणासुन्दरत्वात्। अत एव न सादृश्याभावमात्रं तत्, उपमानादुपमेयस्यापकर्षेऽपि तत्संभवात् तस्य च हीनगुणस्योपमेयताया वास्तवत्वेनासुन्दरत्वात्। उपमेयोत्कर्षविशिष्टत्वेन सादृश्याभावस्य विशेषितत्वे च तस्योपमेयोत्कर्षस्यैवालंकारतौचित्येनाधिकस्य निष्प्रयोजनत्वात्॥

यथा—

अम्लानश्रीकमिदं सदाऽपि वदनं सरोजसद-
नायाः । म्लानश्रियोपमां क्वचिदैन्दवबिम्बेन कि-
मवलम्बेत ॥६५४॥

म्लाना न भवतीत्यम्लाना निर्मलेति वस्तुस्थितिः 'अम्लानस्त्वमले झण्टीभेदे' इति हेमचन्द्रः । तादृशी श्रीर्यस्य तत्तथोक्तं 'शेषाद्विभाषा' इति कप् । क्वचित् म्लानश्रियेत्यन्वयः अयं चोपमेयोत्कर्षकोपमानापकर्षकयोर्वैधर्म्ययोर्द्वयोरप्युपादानानुपादानाभ्यामेकतरानुपादाने च तावच्चतुर्धा । सोऽप्युपमायाः श्रौतीत्वार्थीत्वाक्षिप्तात्वैर्द्वादशविधो भवन् सश्लेषनिश्श्लेषत्वाभ्यां चतुर्विंशतिप्रकार इति प्राञ्चः ॥

यथा—

जल्पन्तु यथाकामं जल्पाका देव तावकः पा-
णिः । कल्पद्रुरिव किमेषोऽनल्पां दत्ते श्रियं स तु
स्वल्पाम् ॥६५५॥

तावकः पाणिः कल्पद्रुरिव किं? स इव न स्यादिति भावः । कुत इत्यत आह—एष इति । एषः तावकः पाणिः। अन्यत्सुगमम् । अत्रोभयोरुपादानं, उपमा च श्रौती । अत्रैव—'कल्पद्रुम इव कथमयमल्पां दत्ते श्रियं न जात्वपि यः' इत्युत्तरार्धे रचिते 'कल्पद्रुरिव किमेष स्वल्पां श्रियमेव यस्सदा दत्ते' इति वा रचिते एकतरानुपादानम् । श्रौती चोपमा । 'कल्पद्रुरिवेति वचः कल्पेत बुधस्य कस्य तोषाय' इति कृते हेतुसामान्यानुपादानं सा श्रौती च । हेतुद्वये हि यस्यैवानु-

पादानं तस्याक्षेपेणावगतिः । उभयोरप्यनुपादाने तथैव, न त्वनवगतिः व्यतिरेकस्योत्कर्षापकर्षरूपत्वात् । तयोश्च प्रयोजकज्ञानमन्तरेणानवबोधात् ॥

एवम्—

**सततमनाविलभावां काले क्वचिदाविलत्वमुपयान्ती । बहिर्मुखस्रवन्ती साऽर्हति किं तव कृपां समां कर्तुम् ॥६५६॥**

अत्रोभयोपादानं, उपमा त्वार्थी । 'बाले सुधापयोधेः काले क्वचिदाविलत्वमुपयान्ती' इति पठिते पूर्वार्धे, अस्यैव 'काले क्वचिदप्यनाविलत्वजुषम् । बहिर्मुखस्रवन्ती' इति द्वितीयतृतीयचरणयोश्च कल्पितयोरेकतरानुपादानं, आर्थी चोपमा । 'व्यालेशगिरीशहृदयकृतशाले' इति, 'बाले सुधापयोधेः' इत्यस्य द्वितीयचरणे निर्मिते उभयानुपादानं सा च ॥

**निरवधिकानन्ददुघा द्विरसनगिरिनाथसंनिधौ वसतिः । अधरयति मितानन्दां विधिमुखलोकेषु निवसतिं नृणाम् ॥६५७॥**

अत्र इवादेस्साद्दश्यमात्रशक्तस्य सदृशादेश्च तद्विशिष्टशक्तस्य शब्दस्याभावाच्छ्रुत्यर्थपथात्यासादिनी अधरीकरणेनाक्षिप्तैवोपमा । अत्रैव 'निरवधिकसुकृतसुलभे' इत्याद्यचरणनिर्मितौ, 'अधरयति विधिनिधीश्वरविधुशेखरलोकनिवसतिं नृणाम्' इत्युत्तरार्धनिर्माणे वा एकतरानुपादानम् । आक्षिप्ता चोपमा । अस्यैव 'फणधरधराधराधिपमधुमथनपदाब्जसंनिधौ वसतिः' इति पूर्वार्धे निर्मिते उभयानुपादानं, सा च ॥

एवं निश्श्लेषव्यतिरेकादिक् प्रदर्शिता । अथ सश्लेषव्यतिरेकादिक्प्रदर्श्यते । यथा —

**ननु निश्श्रीकमलिन्याः करावमर्शेन विदधदामोदम् । भास्वानिव किं भगवानपहतपाप्मा यतो ह्येषः ॥ ६५८॥**

निश्श्रीकायाः अनाप्लुततया म्लानप्रभायाः 'शेषाद्विभाषा' इति कप् । मलिन्याः पुष्पवत्याः 'मलिनी पुष्पवत्यपि' इत्यमरः । पक्षे – निश्श्रियः अविकसिततया लक्ष्मीनिवासविधुरायाः कमलिन्याः पद्मिन्याः करावमर्शेन हस्तसंस्पर्शेन किरणसंपर्केण च आमोदं प्रमोदं सौरभं च विदधत् भास्वान् भानुरिव किं भगवान् स्यात् । कुतो न स्यादित्यत आह–यत इति । यतः यस्मात् एषः अपहतपाप्मा 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोकः' इति श्रुतेः । अत्रोभयोपादानं, श्रौती चोपमा । श्लेषस्तु स्पष्ट एव ॥

यथावा —

**कनकाचलमिव कथयतु कथमिव काकोदराचलं लोकः । स सुरालय इति विदितः कलुषहरं तीर्थमेष वासयति ॥ ६५९ ॥**

कलुषहरं तीर्थं पापविनाशनामिति प्रसिद्धं तीर्थम् । तच्च शेषाद्रौ स्थितम् । अत्राप्युभयोपादानं, श्रौत्येवोपमा श्लेषश्च ॥

**त्वं खलु न तटित्वानिव यत्र विहितसाधुघनरसत्यागः । संकलिततपस्स्फूर्तिर्वेंकटनाथासि विमलहंसगतिः ॥ ६६० ॥**

हे वेंकटनाथ! त्वं तटित्वानिव न खलु। कुत इत्यत आह— यदिति। यस्मात् साधुषु सत्सु घनस्सान्द्रः यो रसः अनुरागः तस्य त्यागः स न विहितो येन स तथोक्तः। यद्वा—साधुः श्लाघ्यः घनस्संपूर्णः यो रसः आनन्दः तस्य त्यागो न विहितो येन निरतिशयानन्द इत्यर्थः। पक्षे अविहितनिर्मलसलिलत्याग इत्यर्थः। संकलिता तपसः तपस्य ग्रीष्मस्य च स्फूर्तिर्येन स तथोक्तः। विमलानां अकलुषाणां विशदानां च। हंसानां ज्ञानिनां मराळानां च। गतिः गम्यत इति गतिः, कर्मणि क्तिन्। प्राप्य इत्यर्थः। अत्रोपमानापकर्षकानुपादानं, श्रौती चोपमा श्लेषश्च॥

**आदावेव कुवर्णं प्राप्तं मध्येऽवमानितमथान्ते। लयमुपयातं कुवलयमवयन्ति कथं तवाम्ब नयनमिव ॥६६१॥**

कुवलयं आदावेव प्रथममेव कुवर्णं कुत्सितं वर्णं कु इत्याकारकमक्षरं च प्राप्तं, कर्तरि क्तः। मध्ये मध्यकाले अवमानितं अवज्ञातं त्वन्नयननेनेति भावः। पक्षे—मध्ये स्ववाचकशब्दमध्ये वमानितं वकारेण युक्तमिति यावत्। अत एव अन्ते पर्यवसाने लयं क्वापि लीनतां उपयातं, कर्तरि क्तः। पक्षे—लयेति वर्णद्वयमुपगतमित्यर्थः। अत्रोपमेयोत्कर्षकानुपादानं, उपमा श्रौती श्लेषश्च॥

आर्थे साम्ये यथा—

**वहदपि सुवर्णमन्तर्मुखे कुवर्णं सदा दधत्कुसुमम्। श्रीस्सुमुखि हरिण्यास्तव पश्चात्सममस्तु न तु पुरो वपुषः॥ ६६२॥**

हे सुमुखि! हे श्रीः! अन्तः मध्ये प्रच्छन्नं यथा स्यात्तथेति वा। सुवर्णं कनकम्। पक्षे—अन्तः स्ववाचकशब्दमध्ये सुवर्णं सु इत्याकारकमक्षरं वहदपि दधानमपि मुखे वक्रे आदौ च कु-वर्णं कुत्सितवर्णं कु इत्याकारकमक्षरं च, सदा दधत् कुसुमं प्रसूनं कुसुमपदं च। हरिण्याः सुवर्णप्रतिमायाः, अनेनास्याः अप्रच्छन्नसर्वाङ्गसुवर्णत्वं दर्शितम्। हरितवर्णायाश्च 'हिरण्यवर्णां हरिणीम्' इति श्रुतेः। 'हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या' इत्यमरः। तव वपुषः पश्चात् परोक्षमिति यावत्। समं सममन्यमिति यावत् अस्तु। पुरः समक्षं तु न, नसमं स्यादित्यर्थः। परोक्षं सममिति विकत्थतां नाम प्रत्यक्षं तु कथं सममिति ब्रूयादिति भावः। यद्वा - वपुषः पश्चात् चरमाङ्गे सममस्तु पुरः अग्रभागे तु न सममेवेत्यर्थः। अथवा—पश्चात् भाविनि काले यदाकदा वा समं अस्तु सदृशं भवेच्चेद्भवत्वित्यनादरे। पुरः प्रथममेव तु न समं स्यात्। कालत्रयेऽपि समं न भवत्येवेति हृदयम्। पक्षे—कु सु इति वर्णद्वयादनन्तरं समं मकारसहितमित्यर्थः, कुसुमशब्दस्य तथैव दर्शनात्। पुरतः आदौ तु न, मकारसहितं न भवतीत्यर्थः। उक्तशब्दस्यातथात्वादिति भावः। अत्रोभयोपादानं, उपमा चार्थी, सदृशशब्देन तत्कथनात्। श्लेषश्च॥

यथावा—

**श्रीमन्कनकगिरीन्द्रो व्योम सरूपं वदन्तु तव मुग्धाः। व्योकारमाश्रितं तत्सुजातरूपस्य तव कथं सदृशम्॥ ६६३॥**

श्रीमन्! हे कनकगिरीन्द्रो! मुग्धाः अतत्त्वविदः व्योम गगनं तव समानं रूपं यस्य तत् सरूपं वदन्तु कथयन्तु, तत्त्वविदस्तु न वदन्तीति भावः। कुत इत्यत आह—व्योकारमिति। तत् व्योम कर्तृ व्योकारं अयस्कारं आश्रितम्। कर्तरि क्तः। 'व्योकारो लोहकारकः' इत्यमरः। 'व्योकारोऽयस्करोऽयस्कारो लोहकारस्स्यात्' इति रत्नकोशः। 'व्योकारः कर्मारो लोहकारः' इति हेमचन्द्रश्च। व्यो करोतीति विग्रहः। कर्मण्यण् 'अङ्गारीयदारुसंग्रहैर्व्योकारैः' इति हर्षचरिते प्रयोगश्च। वास्तवार्थस्तु व्यो इति वर्णमाश्रितमिति। 'वर्णात्कारे' इति कारप्रत्ययः। सुजातरूपस्य शोभनसुवर्णस्य। पक्षे—रमणीयरूपस्येत्यर्थः। तव कथं सदृशः, तुल्यो न भवत्येव। अयस्काराश्रितसुजातरूपयोस्साम्यायोगादिति भावः। अत्रापि पूर्ववदेव सर्वम्। उपमेयोत्कर्षकोपमानापकर्षकहेतुस्त्वत्रैकः, पूर्वत्र द्वाविति विशेषः॥

यथावा—

**मुखवर्णमिताऽतिरुचाऽग्रेसरका देवदेव पावनया। तन्वा तव किं तुल्या मिळिन्दजाभा कळिन्दजाभा वा॥ ६६४॥**

हे देवदेव! अतिरुचा सर्वतोमुखदीप्तिमत्या तव तन्वा मुखवर्णमिता मुखस्य वर्णो रूपं दीप्तिर्वा मितोऽल्पो यस्यास्सा तथोक्ता।

वर्णो द्विजादिशुक्लादियशोगुणकथासु च।
स्तुतौ नाना स्त्रियां भेदरूपाक्षरविलेपने॥

इति मेदिनी। मिळिन्दाज्जाता मिळिन्दजा भ्रमरगतेत्यर्थः। आभा प्रभा। कर्मधारयः। सदृशो किं न सदृशीत्यर्थः, अतिदी-

स्तिमितदीप्तिमतोस्साम्यायोगात्। पक्षे–मुखवर्णे आदिमाक्षरे मिता-मिवर्णत्वं यस्यास्सा तथोक्ता। मिळिन्दजाभाशब्दस्य तथात्वात्। तथा पावनया तव तन्व्यैव अग्रे पुरः सरकः मद्यपानं तत्पात्रं इक्षुमद्यं वा यस्यास्सा तथोक्ता अतिमात्रमपवित्रेति भावः। 'चषकोऽस्त्री पानपात्रं सरकोऽपि' इत्यमरः। 'सरकाऽस्त्री शीधुपाने शीधुपात्रेक्षुमद्ययोः' इति मेदिनी च। अग्रे इत्येदन्तमव्ययम्। पक्षे– अग्रेसरः कः कवर्णो यस्यास्सेति तु तत्त्वम्। कळिन्दजा-भाशब्दस्य तथात्वात्। शब्दार्थतादात्म्यं न विस्मर्तव्यम्। कळि-न्दजायाः यमुनायाः आभा वा सदृशी किं। न सदृशीत्यर्थः। पावनापावनयोस्तौल्यायोगात्। अत्राप्युपमानापकर्षकोपमेयोत्क-र्षकयोरुभयोरुपादानं आर्थी चोपमा श्लेषश्चेति सर्वं तुल्यम्। द्वे उपमाने यथासंख्यसंकीर्णे इति तु विशेषः॥

यथावा—

**घननिर्घोषत्रस्तः किं सदृशो मानसैकजन्य-स्स्यात्। हंसश्शङ्खेन हरेः पटुनिर्घोषेण पाञ्चज-न्येन ॥६६५॥**

घननिर्घोषः गंभीरध्वनिः यस्यकस्यचिदिति भावः। तस्मात् त्रस्तः एकमेव जन्यं युद्धं 'युद्धमायोधनं जन्यं' इत्यमरः। त-दपि मानसं मनस्संकल्पितमेव न तु क्रियया निर्वर्तितं यस्य स तथोक्तः। मानससरोजन्मेति वास्तवार्थः। पटुनिर्घोषेण पाञ्चजन्येन पञ्च जन्यानि युद्धानि सोढान्यस्य पाञ्चजन्यः। 'त-दस्य सोढम्' इत्यर्थे प्राग्दीव्यतीयोऽण्। पञ्चसंख्याकयुद्धजेतेति यावत्। पक्षे—पाञ्चजन्यनाम्ना शङ्खेनेत्यर्थः। अत्राप्युभयोपादानं आर्थी चोपमा श्लेषश्च। अत्रोपमेयस्यापि श्लिष्टत्वं प्राथमिको-दाहरणाद्विशेषः॥

यथावा—

सन्तान उदारस्स्तान्नन्ता सस्स्यात्परं प्रतीपो-
पगमे । किं तादृशेन कैटभहन्ता तुल्योस्तु कस्य-
चिदनन्ताऽसौ ॥६६६॥

सन्तानः देवतरुविशेषः उदारः अनुपाधिकनिर्देशेन सर्व-महान् स्तात् । सर्वमहान् भवतु चेद्भवतादित्यनादरे । दातेति तु वस्तुस्थितिः । 'उदारो दातृमहतोः' इत्यमरः । परं परंतु प्रतीपानां प्रत्यर्थिनां उपगमे समीपगमने सः सन्तानः अत्रानुस्वारस्य 'वा पदान्तस्य' इति वैकल्पिकः परसवर्णो बोध्यः अर्थान्तरे शब्दानुरूप्याय । नन्ता नमनकर्ता स्यात् । साध्वसेन प्रणमेदित्यर्थः । तस्मादनुदार एवेति भावः । पक्षे—प्रतीपोपगमे वैपरीत्येन गतौ नन्तासः सन्तानशब्दो नन्तास इति स्यादित्यर्थः । प्राथमिकार्थे सस्स्यादित्यत्र द्वितीयसकारस्य 'अनचि च' इति वा द्वित्वम् । अन्यथा तच्छब्दप्रथमैकवचनान्तस्य स इत्यस्य 'एतत्तदोस्सुलोपः' इत्यादिना सुलोपेन सकारस्य तस्य द्वित्वायोगात् । तादृशेन प्रतीपनमनकर्त्रा कस्यचिदपि अनन्ता अनमनकर्ता, नमेस्तृच् । 'नन्तव्यः परमश्शेषी' इत्युक्तरीत्या सर्वलोकनन्तव्यस्य तस्य नन्तव्यान्तरासंभवादिति भावः । अत्र 'वृक्ष इव स्तब्धः' इति श्रुत्यर्थोऽनुसन्धेयः । असौ कैटभहन्ता तुल्योऽस्तु किं तुल्यो न भवेदेवेत्यर्थः । अत्र नन्तृत्वमुपमानापकर्षहेतुः । अनन्तृत्वमुपमेयोत्कर्षहेतुश्चेति द्वयमप्युपात्तम् । उपमा च तुल्यशब्दोपादानादार्थी । श्लेषस्तूपमानापकर्षमात्रे इति विशेषः ॥

तीव्रक्षार नदीन त्वं न समो माधवस्य सवि-
शेषम् । अधरितशीर्षोऽपि भवन्न दीनरक्षाव्रती भ-
वेर्यस्मात् ॥ ६५७॥

तीव्रक्षार! अतिमात्रकटो! निर्दयेति यावत्। अतिमात्रलवणेति वस्तुस्थितिः । 'तीव्रं कटूष्णात्यर्थेषु' इति, 'क्षारः काचे रसे गुडे । भस्मनि लवणे धूर्ते' इति च हेमचन्द्रः । हे अतिधूर्तेति वा अर्थः । वस्तुस्थितिस्तु पूर्ववदेव । हे नदीन! सरित्पते! त्वं माधवस्य श्रीनिवासस्य भगवतः न समः । यद्यपि नदीनस्त्वं तथाऽपि तीव्रक्षारत्वान्न तुल्य इति भावः । तत्र हेत्वन्तरं चाह—यस्मात् त्वं सविशेषं सातिशयं यथा तथा अधरितशीर्षः अधःकृतशिराः भवन्नपि दीनानां रक्षैव व्रतं तदस्यास्तीति दीनरक्षाव्रती न भवेः । निर्घृणस्यातिधूर्तस्य वा दीनरक्षणैकता न संभवेदिति भावः । पक्षे—नदीनशब्दः विशेष्यते भेद्यते अनेनेति विशेष, करणे घञ् । विशेषणमित्यर्थः । सविशेषं तीव्रक्षारेति विशेषणसहितं यथा स्यात्तथा अधरितशीर्षः प्रातिलोम्येन पठ्यमान इति यावत्। नदीनरक्षाव्रतीत्यानुपूर्वीवान्भवतीत्यर्थः । अत्रोपमानापकर्षहेतुस्तीव्रक्षारत्वं नदीनरक्षाव्रतित्वं चोपात्तं, उपमेयोत्कर्षकत्वं तु निरवधिदयानिधित्वं सकृत्प्रपन्नजनतासंरक्षणैकव्रतित्वं च नोपात्तम् । उपमा चार्थी श्लेषश्च ॥

यथावा—

आदौ महितो विजितस्त्वदधरसुधया ततः

**करौ धून्वन् । मन्दो बभूव भार्गवि मकरन्दस्स तु समः कथं तस्याः ॥ ६५८ ॥**

हे भार्गवि! मकरन्दः आदौ त्वदधरसुधासमभिव्याहाराभावदशायां महितः स्वादुतया पूजितः। अनन्तरं त्वदधरसुधया विजितः अत एव करौ हस्तौ धून्वन् कम्पयन्नित्यवमानानुभावकथनम्। मन्दः स्वादिमभाग्यविधुरः 'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः। पक्षे—आदौ महितः मः मकारः हितः निहितः यस्य स तथोक्तः। मकारविशिष्ट इत्यर्थः। ततः करौ ककाररेफौ धून्वन् विसृजन्निति यावत्। मकरन्दः मकरन्दशब्दः मन्दः बभूव उक्तशब्दो मध्यस्थकरवर्णविसर्जने मन्द इति निष्पद्यत इत्यर्थः। सुगममन्यत्। अत्रापि पूर्ववदुपमानापकर्षैकधर्ममात्रोपादानं, आर्थी चोपमा श्लेषश्च ॥

**कल्याणकोटिनयनो वज्रसहस्रातिदीप्तिकरमूर्तिः। कथमिन्द्रेण समस्स्यात्प्रथमः पुरुषः पृदाकुगिरिनाथः ॥ ६६१ ॥**

कल्याणानि शुभानि कोटिसंख्याकानि नयनानि लोचनानि यस्य स तथोक्तः। पक्षे–कल्याणकोटीनां मङ्गळकोटीनां नयनः प्रापकः नीयते अनेनेति नयनः लोकानामिति शेषः। वज्राणां दम्भोळीनां सहस्रैः अतिशयिता दीप्तिर्यस्य तथाभूतः करो हस्तो यस्यां सा तथोक्ता मूर्तिः यस्य सः। अन्यत्र वज्रसहस्राणां हीरसहस्राणां दीप्तिं करोतीति दीप्तिकरी मूर्तिर्यस्य स तथोक्तः। मूर्तेः श्यामलतया वज्रसहस्राणामाभरणन्युप्तानां परभागलाभाद्दीप्तिकरत्वमिति भावः। अत्रोपमेयोत्कर्षैकधर्ममात्रोपादानं, आर्थी चोपमा श्लेषश्च ॥

आक्षिप्ते औपम्ये यथा—

**विषहरणेन पिनाकिनमुज्जीवयता त्वयाऽच्युतानन्त । पीत्वा विषं विमुञ्चन् जीवनमम्भोधरः पराभूतः ॥ ६७९ ॥**

अच्युतानन्तेति संबुद्धिद्वयं विषहरणेन शिवोज्जीवयितृत्वसामर्थ्याभिप्रायगर्भम् ॥

अच्युतानन्तगोविन्दमन्त्रमानुष्टुभं परम् ।
ओं नमस्संपुटीकृत्य जपन्विषधरो हरः ॥

इति नामत्रयविधानोक्तेः । विषं पीत्वा जीवनं विमुञ्चन्निति योजना । अत्र इवादेस्सदृशादेश्च पदस्याभावात्पराभूतपदेनाक्षिप्तैवोपमा । विषहरणेनोज्जीवनमुपमेयोत्कर्षकं विषपानेन जीवनविमोचनमुपमानापकर्षकं चेत्युभयमुपात्तं श्लेषश्च स्फुटः ॥

यथावा—

**अभियातिविपद्भुग्नः फणिराट्क्वचिदात्तभोगसंकोचः । धुतविपदा नित्योच्छ्रितभोगेन भुजेन स तव निर्धूतः ॥ ६७१ ॥**

हे भगवन्निति प्रकरणाल्लभ्यते । फणिराट् वासुकिः 'वासुकिस्तु सर्पराजः' इत्यमरः । अभियातिनः विपक्षात् या विपत् विपत्तिः तया भुग्नः रुग्णः 'रुग्णभुग्ने' इत्यमरः । अत एव क्वचित् आत्तः स्वीकृतः भोगस्य सुखस्य संकोचो येन स तथोक्तः । पक्षे—अभियातीति भिन्नं पदं तिङन्तम् । क्वचित् आत्तः भोगस्य फणस्य संकोचो येन स तथोक्तः । फणस्य सर्वदाऽप्यविस्तृतत्वादिति भावः । 'भोगस्सुखे स्त्र्यादिभृतावहेश्च फण-

काययोः' इत्यमरः । विपत् पङ्क्तिर्विहीनः गूढपात्त्वात्तथोक्तिः 'पदाङ्किः' इत्यमरः। भुग्नः कुटिलः। 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । अभियाति अभितो गच्छति प्रसिद्धं हि तस्य जिह्मगत्वम् । स्पष्टमन्यत् । अत्र विवक्षुभ्रत्वकचिदात्तभोगत्वे उपमानापकर्षके । धुतविपत्त्वनित्योच्छ्रितभोगत्वे उपमेयोत्कर्षके च द्वेद्वे अभिहिते। श्लेषस्सभङ्गोऽभङ्गश्चेति विशेषः पूर्वस्मात्। आक्षिप्ता उपमा तु तुल्यैव ॥

यथावा—

**निरवधिर्वैभवभूम्ना धनाधिपोऽधःकृतस्त्वया तदपि । नाधिगतं पान्तममुं नाधिपमेवाखिलेश्वर प्राहुः ॥६७२॥**

हे अखिलेश्वर! निरवधिर्वैभवभूमा प्राभवातिशयो यस्य तेन तथोक्तेन त्वया । धनाधिपः वैश्रवणः केवलधनिक इति भावः। अधःकृतः तिरस्कृतः। धकारविधुरश्च कृतः । शब्दार्थयोस्तादात्म्यम्! तदपि तथाऽपि आधिं मनोव्यथां गतः प्राप्ता न भवतीति नाधिगतः तं तथोक्तं नशब्देन समासः । अत एव पान्तं धनं रक्षन्तामित्यर्थः। नाधिपमेव अनधिपमेव अधनाधिपमेव अनीश्वरमेव वा आहुः । अवधीरितत्वेऽपि भगवता निरपत्रपतया अविगणय्य मनोव्यथामपि यथापुरमेव स्वधनाधिपताप्रख्यापनाय रक्षन्तमपि धनं जनास्तन्मर्माभिज्ञा अनधिपमेवाहुरिति भावः। पक्षे—नाधिगतं नाधी नाकारं धिकारं च गतं 'द्वितीया श्रित' इत्यादिना समासः । पान्तं पकारः अन्ते यस्य तं तथोक्तं अमुं धनाधिपं नाधिपमेवाहुः। धनाधिपशब्दस्य धकारलोपे नाधीति वर्णद्वयसाहित्ये पकारान्तत्वे च नाधिप इत्येव निष्पत्तेः । अत्र

अखिलेश्वरत्वानिरवधिवैभवभूमत्वे उपमेयोत्कर्षहेतू धनाधिपत्व-नाधिपत्वे उपमानापकर्षहेतू पूर्ववदेवोपात्ते । अधःकृत इत्यनेनो-पमाक्षेपः श्लेषोपि पूर्ववदेव । उपमाक्षेपके अधःकृत इति शब्देऽपि श्लेष इति तु विशेषः ॥

यथावा —

त्वद्भुक्तशेषभोक्तुर्विशुद्धजननस्य तावकीनस्य हरे । सकलाद इति प्रथितस्सख्यायार्हः किमग्नि-रिन्दुर्वाऽपि ॥ ६७३ ॥

हे हरे! त्वद्भुक्तशेषभोक्तुः त्वन्निवेदितशेषमेव भोक्तुः वि-शुद्धजननस्य पवित्रगोत्रस्य पवित्रजन्मन इति वा । तावकस्य त्वद्भक्तस्य सकलमत्तीति सकलादः । कर्मण्यण् । सर्वान्नीन इत्य-र्थः । वस्तुतस्तु 'यैः कृतस्सर्वभक्षोऽग्निः' 'वह्नेस्सर्वभुजो यथा' इत्याद्युक्तेस्सर्वभक्षक इत्यर्थः । अग्निः वह्निः, सः कलादः रुक्म-कारक इत्यर्थः । 'कलादो रुक्मकारकः' इत्यमरः । वास्तवार्थ-स्तु—कलाः आदत्ते भानोस्सकाशादिति कलादः । यद्वा—'प्र-थमां पिबते वह्निः' इत्याद्युक्तेः कृष्णपक्षे वह्न्यादिभ्यः कलाः दत्त इति कलादः । इन्दुश्चन्द्रो वाऽपि सख्यायार्हः किम्, नार्ह इत्य-र्थः । अत्र भगवन्निवेदितैकभोजित्वस्य विशुद्धजननत्वस्य चोप-मेयोत्कर्षकस्य उपमाभूतयोरग्नीन्द्वोर्यथासङ्ख्यं सर्वान्नीनत्वस्वर्ण-कारत्वयोरपकर्षकयोश्च श्लेषेणोपादानमिति विशेषः । उपमाक्षे-पस्तु तुल्य एव ॥

यथावा—

योऽधश्शिराः पतन्नपि रसालपाकः कपाल-

सारस्स्यात् । स तु सकलाधिकमधुरिम परिचरि-
तुं वाऽम्ब तव वचो नेष्टे ॥ ६७४ ॥

हे अम्ब! रसालपाकः रसाल इक्षुविशेषः तत्पाकः गुड-
श्शर्करा वा । अधश्शिराः पतन्नपि त्वद्वचनसाम्यलाभायेति
भावः। कपालस्य शिरोऽस्थ्नः घटशकलस्य वा सार इव सा-
रो यस्य स तथोक्तः। तद्रसतुल्यरस एव स्यात्। अत्र सार-
शब्दो विपरीतलक्षणया असारपरः।

अनर्थकमनायुष्यं गोविषाणस्य भक्षणम् ।
दन्ता अपि प्रमृज्यन्ते रसश्चापि न लभ्यते ॥

इति श्रीभारतोक्तन्यायेन नीरस एव भवेदिति भावः। 'कपालः कुष्ठरुग्भेदे घटादिशकले गणे । शिरोऽस्थनि' इति, 'सारो मज्ज्ञास्थिरांशयोः । बले श्रेष्ठे च सारं तु द्रविणन्याय्यवारिषु' इति च हेमः। पक्षे—रसालपाकशब्दो विलोमपाठे कपालसार इति निष्पद्यत इत्यर्थः। स्पष्टमन्यत् । अत्र कपालसारत्वमुपमानापकर्षहेतुः सकलाधिकमधुरिमत्वमुपमेयोत्कर्षहेतुश्चोपात्तः। उपमाक्षेपश्च तुल्य एव । श्लेषस्तु विलोमपठितशब्दार्थतादात्म्यसंपादित इति विशेषः॥

उत्पलभुजो निकामं सत्पथभाजोऽपि किल-
मृगाङ्कस्य। मित्रं कथं नु भविता वक्त्रं भवतः
पतत्रिवरकेतो ॥ ६७५ ॥

उत्पलभुजः उद्धृतामिषभोक्तुः। पक्षे उत्पलानि कुवलयानि भुनक्ति पालयतीति तथोक्तस्य। स्पष्टमन्यत् । अत्रोत्पलभोक्तृ-

त्वमुपमानापकर्षकारणमात्रमुपात्तं, न तु सकललोकपावनत्वमुपमेयोत्कर्षकारणम् । मित्रशब्दोपादानादाक्षिप्तैवोपमा । श्लेषस्तु व्यक्त एव ॥

यथावा —

**अप्युल्लसन्तमन्तः पाद्यं कथितं जनेन वान्ततया । स्वजयार्थिनमब्धिसुते पल्लवमिह तव करस्तिरस्कुरुते ॥ ६७६ ॥**

हे अब्धिसुते! अन्तः उल्लसन्तं प्रकाशमानमपि न तु बहिरिति भावः। पक्षे—अन्तः मध्ये उत्कृष्टं यथा स्यात्तथा ल्लेन लकारसंयुक्तलकारेण सन्तं प्रशस्तम्। उच्छब्दतकारस्य 'तोर्लि' इति लकारादेशे लकारत्रयश्रवणेन यद्यपि भाव्यम्, तथाऽपि 'हलो यमां यमि लोपः' इति द्वितीयलकारस्य वैकल्पिकलोपाश्रयणेन लकारद्वयस्यैव श्रवणं, अर्थान्तरे द्विलकारकशब्दैकरूप्यायेत्यवधेयम्। पाद्यं पादार्थं पादसादृश्यार्हमेवेति यावत्। न तु करसादृश्यार्हमिति भावः। 'पादार्घाभ्यां च' इति तादर्थ्ये यत्। पक्षे—पकारः आद्यो यस्य तं तथोक्तम्। जनेन पामरेणापि 'जनो लोके महर्लोकात्परलोकेऽपि पामरे' इति मेदिनी। वान्ततया उद्गीर्णतया कथितं सकललोकबहिष्कृतमिति यावत्। पक्षे—वकारान्ततया कथितमित्यर्थः। पल्लवं किसलयं, पक्षे पल्लवशब्दम्। अन्यत्सुगमम्। अत्राप्युपमानापकर्षकमात्रोपादानम्। सा च श्लेषश्च। तस्य शब्दार्थतादात्म्यमूलकत्वं विशेषः॥

**पङ्कविलोपनपटुनो वेङ्कटगिरिराजनाथनयनस्य ।**

किङ्करतामपि कमलं संकलयितुमर्हतीति को ब्रूयात् ॥ ६७७ ॥

अत्रोपमेयोत्कर्षकं पङ्कविलोपनपटुत्वमेवोपात्तं, उपमानापकर्षकं पङ्कदिग्धत्वं तु नोपात्तम् । किंकरतामित्यादिना उपमा आक्षिप्तैव । श्लेषश्च ॥

यथावा—

अत्युज्ज्वलतां विन्दसि या त्वं श्रीर्हरिकरावमर्शेन । तस्यास्तेऽम्ब हरिद्रा छात्रत्वं छाययाऽपि किं भजताम् ॥ ६७८ ॥

हे अम्ब! श्रीः! या त्वं हरेः भानोः भगवतश्च कराणां किरणानां पाणीनां च अवमर्शेन अत्युज्ज्वलतां अतिदीप्तत्वं अतिमात्रशृङ्गाररसवत्त्वं च । विन्दसि 'उज्ज्वलस्तु विकासिनि । शृङ्गारे विशदे दीप्ते' इति हेमः । तस्याः ते हरिद्रा छाययाऽपि वर्णेनापि न तु गुणान्तरेणेति भावः । लेशतोऽपीत्यपि गम्यते । छात्रत्वं अन्तेवासित्वं भजतां किं, न भजेदेवेत्यर्थः । यद्वा—छायया छात्रत्वमपि भजतां किमिति योजना । तदपि भक्तुमनर्हं किमुत साम्यमिति भावः । अत्र हरिकरावमर्शहेतुकात्युज्ज्वलताभाक्त्वमुपमेयोत्कर्षकमात्रमुपात्तं, न तु हरिकरावमर्शहेतुकविच्छायत्वमुपमानापकर्षकम् । सा च श्लेषश्च ॥

यथावा—

लोकालोकातीतं नाविख्यातं न चामृतविशोषि । ब्रह्म ज्योतिस्तदिदं ब्रध्नो निध्यातुमपि किमीशीत ॥ ६७९ ॥

ज्योतिः 'अथ यदतःपरो दिवो ज्योतिः' इति श्रुतनिरतिशय-दीप्तियुक्तं ब्रह्म परं ब्रह्म लोकालोकं चक्रवाळाचलं अतीतं 'द्वितीया श्रित' इत्यादिना समासः। सर्वव्यापीति भावः। यद्वा—लोकानां जनानां आलोकं दर्शनं अतीतं अचक्षुर्ग्राह्यमित्यर्थः। 'न चक्षुषा गृह्यते। न तत्र चक्षुर्गच्छति। यत्तदद्रेश्यं। अदृश्येऽनात्म्ये' इत्यादिश्रुतेः। विख्यातं न भवतीत्यविख्यातं न, सकलजगत्कारणत्वादिना सर्ववेदान्तप्रथितमित्यर्थः। संभाव्यविख्यात्यभावप्रतिषेधाय नञ्द्वयम्। अमृतं निश्श्रेयसं विशोषयतीत्यमृतविशोषि च न न भवति 'अमृतस्यैष सेतुः' इति निश्श्रेयसप्रापकत्वश्रवणात् 'एतदमृतम्' इत्यादिभिरमृतत्वश्रवणाच्च। पक्षे--अविरिति ख्यातं जलविशोषि च नेत्यर्थः 'अवय श्शैलमेषार्काः, अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते' इत्यमरमेदिन्यौ। तदिदं ज्योतीरूपं ब्रह्म ब्रध्नो भानुः निध्यातुं द्रष्टुमपि ईशीत किं नेशीतैवेति भावः। अत्र लोकालोकातीतत्वादिका उपमेयोत्कर्षहेतव एवोपात्ताः, न तु लोकालोकानतीतत्वाविख्यातत्वामृतविशोषित्वान्युपमानापकर्षहेतवः। श्लेषोपमाक्षेपौ च स्पष्टौ॥

इदमत्रावधेयं—इह श्लेषावलम्बिव्यतिरेकप्रभेदे उभयानुपादानेन उपमायाश्श्रौतीत्वार्थीत्वाक्षिप्तत्वप्रयुक्तभेदत्रितयं दुरुपपादम्। वैधर्म्यानुक्तौ किमवलम्बश्श्लेष उन्मिषेत्। न च यत्र द्विजराजरत्नाकरप्रभञ्जनमातरिश्वादिशब्दसमधिगम्येषूपमानोपमेयेषु स्वशब्दोपात्त एव श्लेषो व्यतिरेकोन्मेषकस्तत्रैव तदुदाहरणं सूपपादमिति वाच्यं, तत्र स्वशब्दवेद्यस्यैव वैधर्म्यस्य संभवात्। एवंच चतुर्विंशतिर्भेदा इति प्राचामुक्तिर्भूयिष्ठोदाहरण-

दर्शिभिर्यथाकथंचिदुपपादनीया । किंचात्रोपमाभेदास्सर्व एव सम्भवन्तीत्यलं चतुर्विंशतिभेदपरिगणनया ॥

नन्वस्यालंकारस्य वैधर्म्यमूलकस्योपमाप्रतिकूलत्वमेवोचितं न तूपमागर्भत्वम्, तस्यास्साधर्म्यमूलकत्वात्। अस्य च तन्निषेधरूपेणैव प्रवृत्तेः, न चेष्टापत्तिः, सिद्धान्तभङ्गप्रसङ्गादिति चेत्—सत्यम्, यद्गुणपुरस्कारेण यस्य यत्सादृश्यनिषेध उत्कर्षपर्यवसायी तस्य तद्गुणपुरस्कारेण तत्सादृश्याप्रतिष्ठानेऽपि गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वात् । यदि च तत्सादृश्यसामान्यनिषेधो विवक्षितस्स्यात्तर्हि गुणविशेषपुरस्कारो निरर्थकस्स्यात् । कुलेनायमस्मादधिक इत्युक्ते रूपेण वयसा विद्यया धनेन च सम इति सार्वलौकिकप्रत्ययात् । एवंच प्रतीयमानमपि सादृश्यं गुणान्तरकृतनिषेधोन्मिषितेनोत्कर्षेण निरस्तप्रभमिव निगळितमिव च प्रभवति न चमत्कृतिमाधातुमिति प्राचामाशयः ॥

अत्रालंकारे क्वचिच्छाब्दसादृश्यनिषेधाक्षिप्तावुपमेयोत्कर्षोपमानापकर्षौ । क्वचिच्च शाब्देनोपमेयोत्कर्षेणाक्षिप्तावुपमानापकर्षसादृश्याभावौ । क्वचित्तादृशेनोपमापकर्षेणाक्षिप्तावुपमेयोत्कर्षतदभावौ चमत्कृतिजनकौ तथा । तत्राद्यः प्रकारः प्राचीनरीत्या सभेद उदाहृतः । द्वितीयतृतीयावपि प्रायशस्तावद्भेदावेव । तत्र दिङ्मात्रमुदाह्रियते—

**नित्यं प्रसन्नहृदयस्स त्वं श्रेयान्विधोर्मलिनहृदयात् । योगिध्येयात्त्वत्तो न्यूनस्स विधो वियोगितापकरः ॥६८०॥**

हे विभो! हे विष्णो! इति संबुद्धिः। अत्र पूर्वार्धे उपमेयोत्कर्षश्शाब्दः। उपमानापकर्षसादृश्याभावावाक्षिप्तौ। द्वितीयार्धे उपमानापकर्षश्शाब्दः। उपमेयोत्कर्षसादृश्याभावावाक्षिप्तौ। एवं क्वचित् द्वयोस्त्रयाणां वा शाब्दत्वं संभवदपि नातीव रमणीयमिति नोदाह्रियत ॥

क्वचित्त्रयमप्याक्षिप्तमेव—

विपुलेऽस्मिन् भुवनतले व्यदधाद्रत्नाकरान्विधिस्सप्त। अवधिर्दृशोरसंख्यांस्तवाम्ब रत्नाकरान् सृजति लोकान् ॥६८१॥

दृशोरवधिः कटाक्ष इत्यर्थः। विधिः भुवनतले सप्तैव रत्नाकरान् सिन्धून् व्यदधात् असृजत्। हे अम्ब! तव कटाक्षस्तु असंख्याकान् लोकानेव रत्नाकरान् सिन्धून् सृजति उत्तमवस्तूनामाधारान् सृजतीति तु तत्त्वम्। सर्वविधसमृद्धिमतः कल्पयतीति भावः ॥

यथावा—

गम्भीरोऽनुन्नतिभागम्बुधिरगभीर उन्नतो मेरुः। गम्भीरोन्नत एकः कुम्भीनसकुम्भिनीभृदवतंसः ॥

भास्वान्भानुरशिशिरः प्रसन्न इन्दुस्सदाऽप्यनुष्ण इह। श्रीमान्सदा प्रसन्नस्स्वामी शिशिरोष्ण एक एव त्वम् ॥६८३॥

शिशिरः शीतलः दयार्द्रश्च। उष्णः तीक्ष्णः दक्षश्च 'उष्णो ग्रीष्मे पुमान्दक्षाशीतयोरन्यलिङ्गकः' इति मेदिनी। यद्वा-

'तीक्ष्णश्चैव मृदुश्चैव राजा भवति सम्मतः' इत्युक्तरीत्या नातिमृदुर्नातितीक्ष्णः। किंतु निग्रहानुग्रहशील इत्यर्थः। अन्यथा 'तीक्ष्णादुद्विजते लोको मृदुर्हि परिभूयते' इति केवलतैक्ष्ण्यमार्दवयोर्दोषस्मरणादिति भावः। स्पष्टमन्यत्॥

यथावा —

अन्तर्बहिरप्यमलस्त्वं चन्द्रोऽन्तर्मलीमसश्शौरे।
त्वं ननु परमोदारस्स तु लुब्धशिरोमणिस्सरोजाक्ष ॥ ६८४ ॥

निर्गर्जनममलीमसवदनः प्रददासि सदमृतं स्वामिन्। गर्जन्मलीमसमुखः पर्जन्यो वितरतीह विषमेव ॥ ६८५ ॥

परिपक्वबन्धसुमनःपरंपरां स्पर्शनेन पातयति।
माधव एकोऽन्यस्तां प्रापयति स्वपदमेव तेनोच्चैः ॥ ६८६ ॥

परिपक्वाः परिणताः विनाशोन्मुखाश्च बन्धाः वृन्तानि भवबन्धाश्च यस्यास्तां तथोक्तां सुमनसां कुसुमानां विदुषां च परंपरां स्पर्शनेन मरुता अभयादिवितरणेन च 'स्पर्शनो मारुते पुंसि दाने स्पर्शं नपुंसकम्' इति मेदिनी। एको माधवः वसन्तः पातयाति अधो नयाति। अन्यः माधवः भगवान् तां परिपक्वबन्धसुमनःपरंपरामित्यर्थः। तेन स्पर्शनेन उच्चैः उन्नतं पूज्यं च 'महत्युच्चैः' इत्यमरः। स्वपदमेव स्वावस्थानतरुशाखास्थानमेव। पक्षे—परमं पदमेव प्रापयति॥

**जननि जनस्तावकजनसङ्गात्कुकुराधिनाथपद-मयते । अन्योऽश्नुतेऽन्तरेणकसंयोगात्कुकुराधिना-थपदम् ॥ ६८७ ॥**

हे जननि! तावकजनसङ्गात् भागवतसंसर्गादित्यर्थः। जनः पामरोऽपीति भावः। कुकुराधिनाथस्य यदुकुलसार्वभौमस्य भगवतः पदं चरणं अयते प्रपन्नो भवतीत्यर्थः। यद्वा—भगवतस्स्थानं प्राप्नोतीत्यर्थ। अन्यः तावकजनातिरिक्तः जनः पामरः जनो लोके महर्लोकात्परलोकेऽपि पामरे' इति मेदिनी। अन्तरे अन्तरङ्गे अणकानां गर्ह्याणां संयोगात्। 'खेटगर्ह्याणकास्समाः' इत्यमरः। कुक्कुराणां शुनां 'कुक्कुरो मृगदंशकः' इत्यमरः। अधिनाथः श्वक्रीडी कश्चिज्जनः यो हि—'श्वक्रीडी श्येनजीवी च' इत्यादिस्मृतिभिर्हव्यकव्यानर्हतया निन्द्यते। तस्य पदं स्थानं चरणं वा अश्नुते प्राप्नोति गर्हितस्थानसेवी भवतीति भावः। पक्षे—अन्तरेणेति छेदः मध्ये इत्यर्थः। 'अथान्तरेऽन्तरा। अन्तरेण च मध्ये स्युः' इत्यमरः। कसंयोगात् कवर्णयोस्संयोगात् अज्भिरव्यवहिततयाऽवस्थानात्। कुक्कुराधिनाथपदं अश्नुते। कुकुराधिनाथपदस्यैव उक्तरीत्या मध्यगतककारस्य ककारान्तरेण संयुक्तत्वे कुक्कुराधिनाथपदतानिष्पत्तेरिति भावः। अत्र अन्तरेणेत्येतत्कुक्कुरशब्दमात्रकटाक्षेण, तथा सत्येव ककारसंयोगस्य मध्यस्थतासंभवात्। यद्वा—कुक्कुराधिनाथपदशब्दाभिप्रायेणैवास्तु, तस्मिंश्च शब्दे आद्यन्तवर्णयोर्मध्यवर्तितायाः रेफादीनामिव ककारस्यापि दुरपलपत्वादिति ध्येयम्॥

इह कश्चिद्द्विजराजः पुरुषोत्तममन्तरे दधद्विमलः। मलिनोऽन्यो द्विजराजस्संततमप्यन्तरेणकं बिभ्रत् ॥ ६८८ ॥

कश्चित् द्विजराजः अग्रजन्मनामग्रगण्यः। अन्तरे मनसि पुरुषोत्तमं दधत् ध्यायतीति यावत्। विमलः निर्मलः। अन्यः द्विजराजः चन्द्रमाः अन्तरे अणकं गर्ह्यं यं कंचित् बिभ्रत् ध्यायन् मलिनः। अन्यत्र अन्तः स्वबिम्बमध्ये एणकं कुरङ्गं बिभ्रदित्यर्थः। एषूदाहरणेषूपमानतद्विशेषणोपादानसामर्थ्यादाक्षिप्त एव व्यतिरेकः, न तु व्यङ्ग्य इति जात्वपि भ्रमितव्यम्। सत्यनुपपत्तिलेशे व्यञ्जनाया अनुन्मेषात्। इह च भगवद्विशेषणानां यथाकथंचित्प्रशंसार्थत्वेऽप्युपमानतद्विशेषणोपादानस्य भगवदुत्कर्षमन्तरेणानुपपत्तेर्जागरूकत्वात्। यत्र तूपमानतद्विशेषणोपादानमन्तरेणैवोपमेयविशेषणैस्सुन्दरो देवदत्त इत्यादाविव वस्तुस्थितिप्रकाशनेन चरितार्थैरप्यभिप्रायविशेषेण स्वविलक्षणविशेषणविशिष्टधर्म्यन्तरापेक्षया वर्ण्यस्योत्कर्षः प्रतीयते स व्यञ्जनाविषयः॥

यथा -

जगतां जीवनदाने शरदां शतकेऽपि नैषि नीरसताम्। न च पाण्डिमानमयसे कामपि धत्से श्रियं सदोपचिताम् ॥६८९॥

शरदां शरदृतूनां वत्सराणां च। अयं वारिदाद्भगवतो व्यतिरेकध्वनिरर्थशक्तिमूलः॥

अत्र रसगङ्गाधरकृत्—"यत्तूपमानादुपमेयस्य न्यूनत्वेऽपि व्यतिरेकः, वैलक्षण्यमात्रस्यैव व्यतिरेकत्वादित्यलंकारसर्वस्वकारोक्तमनुसरता कुवलयानन्दकृता न्यूनतायामुदाहृतं—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैः
स्वामायान्ति शिलीमुखास्स्मरधनुर्मुक्तास्तथा मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥

अत्र सशोकत्वेनाशोकापेक्षयाऽपकर्षः पर्यवस्यतीति, तदपि चिन्त्यम्—रत्याद्यनुकूलतया कुतश्चिदङ्गाद्भूषणापसारणं यथा शोभाविशेषाय भवति, एवं प्रकृते उपमालंकाराद्दूरीकरणमात्रमेव रसानुगुणतया रमणीयम्, न व्यतिरेकः । अत एवासमालंकारं प्राज्ञो न बहुमन्यते । अन्यथा तवालंकारान्तरतथा तत्स्वीकारापत्तेः । यथा—

भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुलापदम् ॥

इति । अत एव ध्वनिकृता सहृदयधुरन्धरेण 'सुकविस्तु रसानुसारेण क्वचिदलंकारसंयोगं क्वचिदलंकारवियोगं च कुर्यात् इत्युक्त्वा 'रक्तस्त्वं' इति पद्यं सादृश्यदूरीकरणे उदाजह्रे'। अत एव च मम्मटभट्टैः 'आधिक्यमात्रं व्यतिरेकः' इत्युक्तम्, निरस्तं च न्यूनत्वं व्यतिरेके । तस्मादुपमानादुपमेयस्योत्कर्ष एव व्यतिरेकालंकारः नापकर्ष इति स्थितम् । यदि तु न्यूनत्वमपि व्यतिरेक इत्याग्रहः तदेदमुदाहार्यम्—

जगत्त्रयत्राणधृतव्रतस्य क्षमातलं केवलमेव रक्षन् ।
कथं समारोहसि हन्त राजन्सहस्रनेत्रस्य तुलां द्विनेत्रः॥

अत्र धर्मद्वयेनैव न्यूनोऽसि धर्मान्तरेण तु सम इति प्रतीति-कृतविच्छित्तिविशेषादलंकारता । एवंच लक्षणे अपकर्षोऽप्येवं-जातीयो देयः ॥

यदपि कुवलयानन्दकृताऽनुभवपर्यवसायिनो व्यतिरेकस्यो-दाहरणमुक्तम्—

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥

इति, तन्निपुणं न नीरीक्षितमायुष्मता । तथाहि—किमत्रोपमा-नादुत्कर्षरूपो व्यतिरेकोऽनुभवपर्यवसायी? आहोस्वित्सर्वस्व-काराद्युक्तदिशा अपकर्षरूपः? नाद्यः—उत्कर्षप्रयोजकधर्मस्यात्रा-नुपस्थितेः न च श्लेषेण दीर्घाक्षरस्योपस्थितिरस्त्येवेति वा-च्यम्, तस्योपमानवृत्तित्वेनोपमेयानुत्कर्षकत्वात् । अर्थान्तरेणा-कृतिरूपेण सह श्लेषमूलकाभेदाध्यवसायेन साधारणीकरणाच्च । अन्यथा श्लेषमूलकोपमोच्छेदापत्तेः । सुधांशुबिम्बमिव नगरं सकलकलमित्यादावपि कलकलसहितत्वकलासाकल्ययोर्वस्तुतो वै-धर्म्यरूपत्वात् । न च सकलकलमित्यत्रोपमायामेव कवेर्निर्भरः प्रकृते तु भेदशब्दोक्त्या वैलक्षण्ये स इति भ्रमितव्यम् । यद्य-त्रोपमाविघटनरूपो व्यतिरेको निर्भरसहस्स्यात् आकारशब्दश्ले-षोऽनर्थकस्स्यात् । कृपणस्य कृपाणस्य च भेदो दीर्घाक्षरादे-वेत्येव ब्रूयात् । न ह्यत्र व्यतिरेके श्लेषोऽनुकूलः । प्रत्युत प्र-तिकूल एव । उपमायां पुनरनुकूलः । प्रतिकूलस्य दीर्घाक्षर-रूपवैधर्म्यस्य साधारणीकरणात् आकृतिभेदस्य चोपमानोपमे-ययोरपि सत्त्वात् । एवं हि कवेराशयः—'कृपणकृपाणयो-स्तुल्यतैव, दृढतरेत्यादिविशेषणसाम्यात् । अक्षरभेदस्त्वाकार-भेदत्वादविरुद्ध एव' इति सहृदयैराकलनीयम् । न द्वितीयः—तस्योक्तिमात्रेणाप्यसंगतेः, अहृद्यत्वाच्च । तस्मादत्र गम्योपमैव

सुप्रतिष्ठितेत्यास्तां तावत्कूटकार्षापणोद्धाटनम् । प्रकृतमनुसरामः" इत्यभाणीत् । एवंचैतन्मते प्रागस्मत्प्रदर्शितान्यनुभयव्यतिरेकोदाहरणानि यथायोगमनेनैव पथा नेयानि ॥

न्यूनव्यतिरेकोदाहरणं त्वेवम्—

**अखिलजगच्छेषित्वं तस्य तवैकोनसर्वशेषित्वम् । आरोहसि तेन तुलां जगत्सवित्रा जगत्सवित्रि कथम् ॥ ६१० ॥**

इदं तु चिन्तनीयम्—उपमेयाधिक्यपर्यवसायी तन्न्यूनत्वपर्यवसायी अनुभयपर्यवसायी चेति व्यतिरेकस्त्रेधा विभक्तः कुवलयानन्दे । तत्र अनुभवपर्यवसायीति पाठस्तु लेखकस्खलनकृतः । अनुभयताद्रूप्यरूपकादिवदनुभयपर्यवसायित्वेनैव व्यतिरेकतृतीयप्रभेदस्य कर्तुमुचितत्वात् । उदाहरणेऽपि 'दृढतरनिबद्धमुष्टेः' इत्यत्र उपमेयाधिक्यतन्न्यूनत्वोभयपर्यवसानराहित्यस्यैव स्पष्टं दर्शनात् । रसगङ्गाधरकारस्तु अनुभवपर्यवसायीत्येव कुवलयानन्दपाठं मन्वानः व्यतिरेकस्योत्कर्षापकर्षान्यतररूपतामध्यवस्यन् कुवलयानन्दप्रदर्शितं तृतीयप्रभेदोदाहरणमदूदुषत् । उपदर्शिते अनुभयपर्यवसायीति पाठे तु सर्वमिदं तदुक्तदूषणमलग्नकमेव । किंच—व्यतिरेकस्योत्कर्षापकर्षान्यतररूपतया कुवलयानन्दकृद्विवक्षितत्वे तस्य उपमेयोत्कर्षपर्यवसायित्वेन तन्न्यूनत्वपर्यवसायित्वेन च विभजनमेव नोपपद्येत । उत्कर्षरूपस्य व्यतिरेकस्य उत्कर्षपर्यवसायित्ववाचोयुक्तेरयुक्तत्वात् । तस्माद्वैधर्म्यमात्रमेव व्यतिरेकः । स च उपमेयोत्कर्षपर्यवसायी तन्न्यूनत्वपर्यवसायी उपमेयोत्कर्षतन्न्यूनत्वोभयपर्यवसानरहितश्चेति त्रिविध इत्येव हि कुवलयानन्दकृदाशयः । एतत्सर्वमभिप्रेत्यैव

चन्द्रिकायां वैद्यनाथः—'किंचिद्धर्मप्रयुक्तसाम्यवत्तया प्रतीयमानयोः किंचिद्धर्मप्रयुक्तवैलक्षण्यं व्यतिरेकशरीरम् । वैलक्षण्यं तु क्वचिदुपमेयस्योत्कर्षे क्वचिच्च तदपकर्षे पर्यवसन्नम् । क्वचित्तु तदन्यतरपर्यवसानविरहेऽपि स्ववैचित्र्यमात्रविश्रान्तमिति बोध्यम् । एतेन चरमभेदद्वयतदुदाहरणदूषणं कस्यचिदापातरमणीयमिव भासमानं प्रत्युक्तमिति वेदितव्यम् । अत्यन्तासारतया तु नानुवादमर्हतीत्युपरम्यते' इत्यवादीत् ॥

अलंकारान्तरोत्तम्भितोऽप्ययं संभवति । यथा—

वृक्षं परिष्वजेते सयुजौ सुहृदौ समं सुपर्णौ द्वौ । एकस्स्वाद्वत्त्यनयोः पिप्पलमन्योऽभिचाकशीत्यनदन् ॥६११॥

इदं पद्यं—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति ॥

इति श्रुत्यर्थानुवादि । 'युज्यत इति युक् । युक्छब्दो गुणपरः समानगुणकस्सयुगिति व्यासार्यैर्विवृतत्वात् । सयुजौ समानगुणकौ अपहतपाप्मत्वादिगुणैः परस्परसमानौ । सखायौ सहचरौ द्वौ सुपर्णौ पक्षिसदृशौ । समानं एकं वृक्षं वृक्षवच्छेदनार्हं शरीरं समाश्रितावित्यर्थः । तयोर्मध्ये अन्यतरो जीवः स्वादु परिपक्वं पिप्पलं कर्मफलं भुङ्क्ते । अन्यस्तु परमात्मा अभुञ्जान एव प्रकाशते' इति रङ्गरामानुजमुनयः । अयं रूपकातिशयोक्त्युत्तम्भितः । एवं यथायोगमलंकारान्तरसंकीर्णता द्रष्टव्या ॥

अस्य चालंकारस्य सादृश्यगर्भत्वात्सादृश्यस्य च त्रिविधधर्मोन्मीलितत्वादत्रापि तत्प्रकारानुगमोऽनुसन्धेयः ॥

तत्रानुगामिनि धर्मे यथा—

आशंसनीयमखिलैरास्वाद्यं चामृतं जडध्युदितम् । अजडध्युदितं ललितं चरितं भवतो हरे पराकुरुते ॥६१२॥

जडधीभिः मन्दमतिभिः उदितं उक्तम् । जलधावुत्पन्नमिति वस्तुस्थितिः । अजडधीभिः सूक्ष्ममतिभिः उदितं उक्तं जलधावनुद्भूतं च । अत्राशंसनीयत्वास्वाद्यत्वललितत्वान्यनुगामिनो धर्माः । श्लेषोपात्ते जडध्यजडध्युदितत्वे अपकर्षोत्कर्षहेतू ॥

बिम्बप्रतिबिम्बभावापन्ने यथा—

परिचितमुक्ताहारः कण्ठः कण्ठीरवाद्रिपतिदयिते । परिगतपयःपयोनिधितरङ्गमपहसति कम्बुमम्ब तव ॥६१३॥

अत्र मुक्ताहारदुग्धोदतरङ्गयोर्बिम्बप्रतिबिम्बभावः परिचितपरिगतयोश्शुद्धसामान्यता ॥

एवं सादृश्यालीढो व्यतिरेको निरूपितः । अभेदालीढोऽप्येष संभवति । यथा—

निर्धूतपलाशकुलो नाथ विशालेक्षणो विधुतकलिकः । भजसि सदानन्दनतां मन्दारस्त्वमिति कथमिव वदेम ॥६१४॥

निर्धूतं पलाशानां पत्राणां क्रव्यादानां च कुलं येन स तथोक्तः। शालानां शाखानां ईक्षणं दर्शनं तद्विगतं यस्य स विशालेक्षणः। शाखावलोकनमप्यस्य नास्ति किमुत तत्परिष्कृतत्वमिति भावः। 'शाखाशाले' इत्यमरः। अन्यत्र विपुलनयनः। विधुताः कलिकाः कोरकाः येन। पक्षे विधुतः कलिर्येन स तथोक्तः, परास्तकलिदोष इति यावत्। 'कलिमलसंहातिकालनोऽखिलेशः' इत्याद्युक्तेः। 'शेषाद्विभाषा' इति कप्! सदा अनन्दनतां नन्दनवनसंबन्धवैधुर्यं, पक्षे आनन्दयतीत्यानन्दनः सतामानन्दनः सदानन्दनः तस्य भावं भजसि। एवं सति कथं त्वां मन्दार इति वदेम॥

इत्यलंकारमणिहारे व्यतिरेकसरो द्वाविंशः.

---

अथ सहोक्त्यलंकारसरः—

**गुणप्रधानताभाजोरर्थयोरुभयोर्यदा।**
**वर्ण्यस्सहार्थसंबन्धस्सहोक्तिं तां तदा विदुः॥**

गुणप्रधानभावावच्छिन्नयोरर्थयोः सहार्थसंबन्धस्सहोक्तिः। इयमपि भेदप्राधान्य एव। गुणप्रधानभावनिबन्धनमत्र भेदप्राधान्यम्। सहार्थप्रयुक्तश्च गुणप्रधानभावः 'सहयुक्तेऽप्रधाने' इत्यनुशासनात्। उपमानोपमेयत्वं चात्र वैवक्षिकम्। द्वयोरपि प्राकरणिकत्वादप्राकरणिकत्वाद्वा। सहार्थबलाद्धि तयोस्तुल्यकक्ष्यत्वं, अतुल्यकक्ष्ययोरुपमानोपमेयभावायोगात्। तत्र च तृतीयान्तस्य नियमेन गुणत्वादुपमानत्वम्। अर्थात्परिशिष्टस्योपमेयत्वम्। गुणप्रधानभावोऽप्यत्र शाब्द एव, न त्वार्थः वस्तुतो विपर्ययस्यापि संभवात्। साहित्यं चात्र कर्त्रादिनाना-

भेदमिति ध्येयम्। हृद्यत्वं चालंकारसामान्यलक्षणागतं सर्वालंकारसाधारणमेव। तच्चात्र कार्यकारणपौर्वापर्यविपर्ययात्मिकया श्लेषभित्तिकाभेदाध्यवसानात्मिकया केवलाभेदाध्यवसानात्मिकया चातिशयोक्त्याऽनुप्राणने भवतीति वदन्ति॥

यांस्त्वं पश्यसि तेषां विकसन्ति समं मुखानि च सुखानि। अरयो निरयाश्च समं सरयं दूरीभवन्ति मुरवैरिन्॥६१५॥

इति तुल्ययोगितादावतिप्रसङ्गवारणायावच्छिन्नयोरित्यन्तम्। तत्र हि द्वयोरपि प्रधानयोरेव सहार्थसंबन्धः। इह तु सहशब्दयोगिनोऽप्रधानत्वनियमाद्गुणप्रधानभावावच्छिन्नयोरेवार्थयोस्सहार्थसंबन्ध इति नातिप्रसङ्गः॥

यथा—

दशवदनादिमकदनैर्विशकलितं सकललोकमविविषता। भूमेर्भारेण समं भवता भगवन् जवादवातारि॥६१६॥

अविविषता अवितुमिच्छता। अत्र भगवदवतारकार्यस्य भूभारावतरणस्य पौर्वापर्यविपर्ययानुप्राणितस्सहभावः॥

यथावा—

पावनतावकपदयुगसेवनसंस्फीतकौतुका लोकाः। सिंहाचलेन साकं सिंहासनमच्युताधिरोहन्ति॥६१७॥

पूर्वं कर्तुस्सहोक्तिः । इह तु कर्मणः । सिंहाचलश्शेषाद्रिः । अत्रापि सिंहाचलारोहणकार्यस्य सिंहासनारोहणस्य पौर्वापर्यविपर्ययेणानुप्राणितस्सहभावः । कारणं हि नियतपूर्वकालवृत्ति कार्यं त्वपरकालवृत्ति तयोस्तुल्यकालत्वेनोक्तिरपि तद्विपर्यय एवेत्यवधेयम् ॥

**त्वत्पार्श्वजन्यनिनदे ननु देव विसृत्वरे यथाऽभीष्टम् । अमरीवदनाब्जैस्सममसुरीवदनाम्बुजानि विदळन्ति ॥६९८॥**

अमरीवदनाब्जानि विदळन्ति विकसन्ति । असुरीवदनाम्बुजानि तु विदळन्ति विगतानि दळानि येषां तानीवाचरन्ति निर्दळकमलानीव शोभाविकलानीति भावः । अत्र विदळन्तीति श्लेषेणाभेदाध्यवसितिः ॥

यथावा —

**कृतिनां तव चरितानि श्रुतिसृतिजङ्घालतां प्रपन्नानि । दुरितैस्सह हृदयान्यपि परितश्श्रीनाथ धावयन्ति तराम् ॥६९९॥**

अत्र द्रावणशोधनयोर्धावयन्तीति शब्दगतश्लेषेणाभेदाध्यवसितिः । पूर्वा कर्तृसहोक्तिः । इयं तु कर्मसहोक्तिः ॥

यथावा —

**आर्तभरवश्रवणे नक्रेण समं त्वयोद्धृतं चक्रम् । तेनैव सह स मुक्तस्त्वत्तः प्रकृतौ हि न च भिदाऽस्त्यनयोः ॥७००॥**

उद्धृतं उत्क्षिप्तं उन्मूलितश्चेति लिङ्गविपरिणामेन योज्यम्। तेनैव चक्रेणैव सह नक्रः त्वत्तः त्वत्सकाशात् मुक्तः त्यक्तः 'अपेतापोढमुक्त' इति समासविधानात् ज्ञापकात्पञ्चमी । पक्षे-देवलशापान्मुक्त इत्यर्थः । 'मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः' इति श्रीभागवतोक्तेः । नक्रचक्रयोस्तुल्यतयोद्धरणमोचने कथमित्यत आह—प्रकृताविल्यादि । हि यस्मात् अनयोः नक्रचक्रयोः प्रकृतौ स्वभावे न च भिदा नैव भेदोऽस्ति तस्मादुद्धरणमोचनतौल्यमनयोर्युक्तमिति भावः । पक्षे—अनयोः नक्रचक्रशब्दयोः प्रकृतौ नक्रचक्रेत्याकारके प्रत्ययविधावुद्देश्यभूते शब्दरूपे नचभिदा नकारचकाराभ्यामेव भेदः क्रेत्याकारकवर्णस्योभयत्र तुल्यत्वात् । स्वादौ प्रत्यये पुंनपुंसकलिङ्गयोरनयोश्शब्दयोः विसर्गानुस्वारादिकृतवैलक्षण्यसद्भावेऽपि प्रकृतिमात्रे नकारचकारमात्रकृतं वैलक्षण्यमिति भावः । इयमपि कर्मसहोक्तिः श्लेषभित्तिकाभेदाध्यवसायमूला । अत्र कार्यकारणपौर्वापर्यविपर्ययलक्षणातिशयोक्तिसद्भावेऽपि श्लेषमूलकाभेदाध्यवसितेरेव चमत्कारातिशयाधायकत्वम् । अत्र पूर्वार्धे नक्रचक्रयोर्गुणप्रधानभावः । उत्तरार्धे चक्रनक्रयोस्स इति वैपरील्यं च विशेषः ॥

शुद्धश्लेषभित्तिकाभेदाध्यवसायमूला यथा—

**निरवधिकरुणानिधिना भवता भवतापतो नतानवता । इष्टेन सहानिष्टं निरस्तमारचि समस्तमपि भगवन् ॥ ७०१ ॥**

इष्टेन अभीप्सितार्थेन सह अनिष्टमशुभं निरस्तमारचि । इष्टपक्षे निर्गतं अस्तं अदर्शनं यस्य तत् निरस्तम् । अस्तमिति मान्तमव्ययं, तेन सह बहुव्रीहिः । 'अस्तमदर्शने' इत्य

व्ययेष्वमरः । अनस्तंगतं प्रकाशमानमेवाकारीत्यर्थः । अनिष्टपक्षे निरस्तं प्रक्षिप्तं नाशितमित्यर्थः । अत्र निरस्तमिति श्लेषेणैव भेदाध्यवसायः, न त्वन्यप्रकारेण । अत्रापि कर्मसाहित्यमेव ॥

**न्यपतन् शिरांस्यरीणां मुरारिबाणैस्सहारिनारीणाम् । अश्रुझरैस्सातङ्कैस्ताटङ्कैस्सुरसुमैश्च विजयाङ्कैः ॥ ७०२ ॥**

विजयाङ्कैः विजयचिह्नभूतैरित्यर्थः । अत्र निपतनस्य बाणाद्याश्रयभेदेन भिन्नस्यापि च्युतत्वरूपैकोपाध्यवच्छिन्नतया अभिन्नीकृतस्योपादानमित्यस्यैकक्रियासंबन्धः । अत एव न श्लेषः तस्य प्रतिपाद्यतावच्छेदकभेद एवाभ्युपगमात् । एषूदाहरणेषु सहयोगतृतीयाप्रयुक्तो गुणप्रधानभावः । प्राधान्येन क्रियान्वये तु यथायथं तुल्ययोगिता दीपकं वा भवति । सहादिशब्दप्रयोगेण विनाऽपीयं संभवति 'वृद्धो यूना' इति निर्देशेन तृतीयाया निष्प्रत्यूहप्रसरत्वात् । परंत्विवादिशब्दप्रयोगाविधुरोत्प्रेक्षावद्गम्या । अप्रधानभावस्तु शाब्द एव । यद्यपि प्रकृतत्वाप्रकृतत्वे प्रायेणोपमेयोपमानतयोर्निर्णायके । तथाऽपीह न ताभ्यां तयोर्निर्णयः, प्रकृतयोरपि साहित्यसंभवात् । किंतु प्राधान्याप्राधान्याभ्यामेव । हृद्यत्वं चास्या अतिशयोक्तिकृतमित्यवोचाम । यत्र तु सा नास्ति तत्र 'पुत्रेण सहागतः पिता'—

**नाकं परेण भान्तं लोकं परमं विहाय दिव्यं तम् । लोकंपृणस्स भगवान् साकं लक्ष्म्यैव विहरति वृषाद्रौ ॥ ७०३ ॥**

इत्यादौ न सहोक्तिरलंकारः । लोकं पृणाति प्रीणयतीति लोकंपृणः । पृणतिः प्रीणनार्थकः । अस्मान्मूलविभुजादित्वात्कः। 'लोकस्य पृणे' इति मुमागमः ॥

अत्र विचार्यते—'दशवदनादिमकदनैः' इत्यादौ पौर्वापर्यविपर्ययानुप्राणिता सहोक्तिरलंकार इति न युक्तम् । अतिशयोक्तेरेवात्र चमत्कारावहत्वेन सहोक्तेस्संज्ञामात्रत्वात् । 'तव कोपोऽरिनाशश्च जायते युगपन्नृप' इत्यस्मादतिशयोक्त्यलंकारात् 'तव कोपोऽरिनाशेन सहैव नृप जायते' इत्यत्र गुणभावमात्रप्रयुक्ते सत्यपि वैजात्ये विच्छित्तिविशेषस्यादर्शनात्तस्यैव चालंकारविभाजकत्वात् । न च सादृश्यानुप्राणितस्य रूपकादेरप्यपार्थक्यापत्तिः, 'नवनीरदसदृशोऽसौ, एष नवीनाम्बुदस्साक्षात्' इत्यादौ विच्छित्तिवैलक्षण्यस्य जागरूकत्वात् । अन्यथा सादृश्यप्रयुक्तस्य व्यतिरेकस्यानुत्थानापत्तेः । अपिच सादृश्यप्रयुक्तरूपकादिषु सादृश्यस्य गुणभावाच्चमत्कारविश्रान्तिभूमिभ्यो रूपकादिभ्यो यथा न पृथग्व्यपदेश्यत्वं तथा सहभावोक्त्युन्मीलितायाः कार्यकारणपौर्वापर्यविपर्ययात्मिकाया अतिशयोक्तेस्सकाशादस्यास्सहोक्तेरपार्थक्यमेवोचितम् । नन्वेवं सति निर्विषयतैव स्यात्सहोक्तेः, सहोक्त्यन्तरस्याप्यभेदाध्यवसानरूपातिशयेन कबळीकारादिति चेन्न—अभेदाध्यवसानमूलायां हि सहोक्तौ अभेदाध्यवसानेनोपस्क्रियते सहोक्तिरिति 'न गुणेन तिरस्कारः प्रधानस्य अपितु प्रधानेन गुणस्य' इत्युक्तदिशा लब्धावकाशैव सहोक्तिः । गुणप्रधानभावश्चानाग्रहैस्सूक्ष्मया दृशाऽवधातव्यः । किंच परस्पराभेदाध्यवसानमात्रमातिशय एव । नातिशयोक्तिः, तस्य श्लेषादावपि सत्त्वात् । सा तूपमानेन विषयस्य निगरणम् । एवंच 'विदळन्ति, न्यपतन्'

इत्यादावेकेनापरस्य निगरणाभावान्नातिशयोक्तिगन्धोऽपि। अतिशयमात्रं तु प्रायेण साधारणधर्मांशे भूयसामुपस्करोत्यलंकाराणाम्। न हि 'शोभते पद्मवन्मुखम्' इत्यादौ पद्ममुखशोभयोर्वस्तुतो भिन्नयोरभेदाध्यवसानमन्तरेणोपमा प्रकाशते। तस्मात्कार्यकारणपौर्वापर्यविपर्ययमूलस्सहोक्तेरेकः प्रकार इति सर्वस्वकारादीनामुक्तिराग्रहमूलैव। अभेदाध्यवसानमूलस्तु प्रकारो भवतु नाम सहोक्तेर्विषयः। यदि तु दीपके तुल्ययोगितायां चोपमानोपमेययोः प्राधान्येन क्रियादिरूपधर्मान्वयः, इह तु गुणप्रधानभावेनैवेति विशेषस्सन्नपि विच्छित्तिविशेषानाधायकतया नालंकारान्तरत्वप्रयोजकः अपितु तदवान्तरभेदताया इति विभाव्यते, अपास्यते च जरदालंकारिकवदनावलोकनदाक्षिण्यं, तदा निविशतामियमपि क्लृप्तालंकारेष्वेव। किंचिद्वैलक्षण्यमात्रेणैवालंकारभेदे वचनभङ्गीनामानन्त्यादलंकारानन्त्यप्रसङ्गादिति। सत्यं,–गुणप्रधानभावालिङ्गितस्य सहभावस्यालंकारान्तराद्विच्छित्तिविशेषमनुभवन्तः प्राचीना एव सहोक्तेः पृथगलंकारतायां प्रमाणं, अन्यथा एवंजातीयोपप्लवेन भूयसी स्याद्वैयाकुली। नैव प्रमाणीकुर्महे वयं मृषानिमीलितलोचनान्प्राचीनान्, निवेश्यतां चेयमलंकारान्तरान्तःपुरकारागृहं वराकीति तु प्रभुतैव, न तु सहृदयतेत्यलं दूरधावनेन॥

एवं क्रियायास्साधारणधर्मतायामुदाहरणानि दर्शितानि। गुणस्य तथात्वे यथा—

**भुवनाधिप तव नाभ्या सह मानसमप्युपैति गाम्भीर्यम्। अंसैस्सह महिमाऽपि च कंसरिपो मांसलैर्महौन्नत्यम्॥ ७०४॥**

अत्र यद्यपि क्रियाऽपि गुणेन सह समानधर्मतामश्नुते। तथाऽपि तस्याः नान्तरीयकत्वेनासुन्दरत्वात्पर्यवसाने गुणस्यैव समग्रभारसहिष्णुत्वम् । अत्र गाम्भीर्यौन्नत्ययोराश्रयभेदभिन्नयोरभेदाध्यवसानेन सहभावः। एवं श्लेषेऽपि बोध्यम् । यत्र चैकमेवोपमेयं परस्परविलक्षणसहोक्त्यालम्बनं सा मालातुल्यतया मालासहोक्तिः 'न्यपतन् शिरांस्यरीणाम्' इत्यत्र मुरारिबाणैस्सह अरिनारीणामश्रुझरैस्सह ताटङ्कैस्सह सुरसुमैस्सहेत्युपमानभेदेन साहित्यस्यानेकत्वेऽपि निपतनैक्यात्सहोक्तेरभेदः । सति वा यथाकथंचिद्भेदे नास्ति वैलक्षण्यम्, धर्मैक्यात् । धर्मोपमानोभयकृतवैलक्षण्यस्य चात्र विवक्षितत्वात् ॥

**मथनोच्चलकलशाम्बुधिकणैस्सहामरसुमैश्च विसरन्तः । पद्माक्षे निपतन्तः पान्तु कटाक्षाः पयोधिकन्यायाः ॥ ७०५ ॥**

इत्यत्र धर्मवैलक्षण्यसद्भावेऽपि विसरणधर्मोन्मीलितसहोक्तिघटकोपमानभूतानां कलशाम्बुधिकणामरसुमानामेव निपतनधर्मोत्तम्भितायामपि सहोक्तौ घटकत्वाच्च मालारूपता । अत्र पयोधिकन्याया इति विशेष्यं कटाक्षाणां क्षीरोदन्वदवतारकालिकत्वं ध्वनयितुम् ॥

इदं तूदाहरणम् —

**भाग्यैस्सममुन्मिषितं जगतां सार्धं विजृम्भितं विभवैः । सह विस्मयैरमान्तं धन्याः फणिगिरिपतेर्महं यान्ति ॥ ७०६ ॥**

अत्रोन्मिषितत्वादिधर्माणां भाग्याद्युपमानानां च वैलक्षण्याद्युपमेयस्य श्रीनिवासोत्सवस्यैकत्वाच्च सहोक्तेर्मालारूपतेति ध्येयम् ॥

**शोणोरुषा व्यरचि दृक्कोणेन समं दशास्यका-यश्च । बाणेन सहामुष्य प्राणोऽप्युदधारि रघुपते भवता ॥ ७०७ ॥**

हे रघुपते! भवता दृक्कोणेन समं दशास्यकायश्च रुषा शोणो व्यरचि । पक्षे—अरुषेति छेदः । दृक्कोणः रुषा शोणः दशास्यकायः अरुषा व्रणेन शोणः लोहितः व्यरचीत्यर्थः । 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः । बाणेन सह अमुष्य दशास्यस्य प्राणः पञ्चवृत्तिर्मुख्यप्राणोपि उदधारि बाण उत्क्षिप्तः प्राग उन्मूलित इत्यर्थः । उत्पूर्वकस्य धरतेरुपपादितोभयार्थशक्तत्वात् । 'स्यादुद्धरणमुन्नये । भुक्तोज्झितोन्मूलनयोः' इति हेमचन्द्रः । अत्र द्वयोरेव परस्परविलक्षणसहोक्त्योस्सद्भावेऽपि मालात्वमस्त्येव । एवमपि रसगङ्गाधरादौ मालासहोक्तेरुदाहरणात् । पूर्वार्धे गुणसाहित्यं उत्तरार्धे क्रियासाहित्यं श्लेषमूलातिशयोक्त्या पौर्वापर्यविपर्ययात्मकातिशयोक्त्या चानुप्राणितम् । पूर्वोदाहरणे तु अनुगामिधर्मोत्तम्भितं साहित्यमित्यादि वैलक्षण्यं द्रष्टव्यम् ॥

यथावा—

**आर्तिं सार्धं मौर्व्या निशिचरततिरध्यरोपि रघुपतिना । खेदेन समं सातिर्मोदस्याततानि तेन सवनभुजाम् ॥ ७०८ ॥**

रघुपतिना मौर्व्या शिञ्जिन्या सार्धं निशिचराणां ततिः आर्तिं अध्यरोपि । मौर्वी धनुष्कोटिं निशिचरततिः पीडां च अध्यरोपीत्यर्थः । 'आर्तिः पीडाधनुष्कोट्योः' इत्यमरः । तेन आर्त्यध्यारोपणेन । रघुपतिना वा सवनभुजां देवानां खेदेन समं

मोदस्य सातिः अतानि । खेदस्यावसानं मोदस्य दानं च कृतमित्यर्थः । 'सातिर्दानावसानयोः' इत्यमरः । अत्रापि पूर्वोदाहरणवन्मालारूपतादिकं यथायोगमनुसन्धेयम् ॥

यथावा—

**गुरुभिस्सह शुश्रूषा चरिते तव लसति तावकीनानाम् । कीर्तिर्दानोन्मिषिता गृहाङ्गणेऽच्युत दिशांगणेन समम् ॥७०९॥**

हे अच्युत! तावकीनानां त्वद्भक्तानां गुरुभिः आचार्यैस्सह तव चरिते शुश्रूषा लसति गुरुषु विषये शुश्रूषा परिचर्या त्वच्चरिते विषये श्रवणेच्छा प्रकाशत इत्यर्थः । 'अथ शुश्रूषोपासनाश्रवणेच्छयोः' इति हेमचन्द्रः । दिशां ककुभां गणेन समम् । यद्वा—दिशाशब्दष्टाबन्तः दिशानामङ्गणेन सममित्यर्थः । गृहाङ्गणे तेषामेव भवनाजिरे दानोन्मिषिता कीर्तिः लसतीत्यनुषज्यते । दिशाङ्गणे दानेन वितरणेन उन्मिषिता उदञ्चिता कीर्तिः यशः लसति गृहाङ्गणे दानेन द्विरदमदसलिलेन उन्मिषिता जनिता कीर्तिः कर्दमः विस्तृतिर्वा लसतीत्यर्थः । 'दानं गजमदे त्यागे, कीर्तिः प्रसादे यशसि, कर्दमे विस्तृतावपि' इति च रत्नमाला । अत्रापि यथासंभवं मालारूपतादिकं द्रष्टव्यम् । अधिकरणसाहित्यं तु विशेषः । पूर्वार्धे चरिते इति वैषयिकमधिकरणं, उत्तरार्धे गृहाङ्गणे इति तु औपश्लेषिकमभिव्यापकं वा तदिति भिदा । अभिव्याप्तिश्चात्रापेक्षिकी बोध्या ॥

बिम्बप्रतिबिम्बभावाद्यापन्नधर्मताऽप्यत्र संभवति । यथा—

**फणमणिघृणिपरिवीतं ज्वालामालावृतेन चक्रेण । सह मुञ्चन्नहिमश्वं सहसा स हरिः पुनातु करिवरदः ॥७१०॥**

अत्र फणमणिघृणिज्वालामालयोर्बिम्बप्रतिबिम्बभावः। परिवीतत्वावृतत्वयोस्तु वस्तुप्रतिवस्तुभावः। चक्रमञ्जमोचनयोः पौर्वापर्यविपर्ययः तन्मूलातिशयोक्त्याऽनुप्राणिता सहोक्तिः॥

अलंकारान्तरसंकीर्णाऽपीयं संभवति। यथा—

**मनसा समं विलीनं घनसारस्येव शकलमनलज्वालात्। द्विरसनगिरिशेखरतः दुरितं मम विततमेकपद एव बत॥ ७११॥**

अनलज्वालात् घनसारस्य कर्पूरस्य शकलमिव जात्यभिप्रायकमेकवचनम्। द्विरसनगिरिशेखरतः शेषाचलोत्तंसाच्छ्रीनिवासात् विततं विस्तृतं मम दुरितं, पूर्ववदेकवचनम्। एकपद एव एकचरणन्यासमात्र एव अतिक्षिप्रमेवेत्यर्थः। अथवा—एकपदे इत्येदन्तमव्ययमेकस्मादित्यर्थे चादिषु पठ्यते। अतर्कितमेवेत्यर्थः। अतिसत्वरमेवेति यावत्। मनसा समं विलीनम्। कर्पूरपक्षे—विलीनं विद्रुतमित्यर्थः। 'विलीने विद्रुतद्रुतौ' इत्यमरः। दुरितपक्षे—दर्शनाविषयमासीदित्यर्थः। मनःपक्षे तु—द्विरसनगिरिशेखरतः श्रीनिवासात् पञ्चम्यास्सार्वविभक्तिकस्तसिः। मम मनः एकपद एव एकस्मिन्व्यवसाय एव तत्प्राप्त्येकव्यवसाय एव लीनं लग्नमित्यर्थः। 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इत्युक्तरीत्या तत्प्राप्त्येकव्यवसायस्य तदधीनत्वादिति भावः। यद्वा—सप्तम्यास्तासिः। श्रीनिवासे एकस्मिन्पदे वस्तुन्येव लीनमित्यर्थः। अथवा षष्ठ्यास्तसिः। श्रीनिवासस्य एकस्मिन्पदे चरणे लग्नमित्यर्थः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। अत्रोपमाश्लेषमूलातिशयोक्तिभ्यामुज्जीविता सहोक्तिः॥

यथावा—

विबुधाभयदः कथमस्यसुरकदम्बेन सह सुरक-
दम्बम्। भवता वृषशैलमणे सुसाध्वसं यद्व्यता-
न्यतिप्रसभम् ॥ ७१२ ॥

हे वृषशैलमणे? त्वं कथं विबुधाभयदः असि। कुतो नास्मीत्यत आह—असुरेत्यादि। भवता असुरकदम्बेन सह सुरकदम्बं अतिप्रसभं सुसाध्वसं व्यतानि असुरकदम्बं अतिप्रसह्य अतित्रस्तमतानीत्यर्थः। सुष्ठु साध्वसं यस्य तत्सुसाध्वसमिति समासः। सुरकदम्बपक्षे—सुसाधु असं इतिच्छेदः। सुसाधु असं अतिप्रसभमतानीति वैपरीत्येन योजना। सुसाधु अतिसम्यक् असं अविद्यमानसकारं अतिप्रसभं अतिप्रभमित्यर्थः। शब्दार्थयोस्तादात्म्यं न विस्मर्तव्यम्। अतानि अतितेजस्वि विरचितमित्याभिप्रायः। इयं हिताहितवृत्तितौल्यलक्षणतुल्ययोगितया श्लेषेण निन्दया स्तुत्यभिव्यक्तिलक्षणव्याजस्तुत्या चानुप्राणिता सहोक्तिरिति ध्येयम् ॥

यथावा—

औदार्यमद्भुतं तव साकं विद्वेषिभिः प्रियेभ्योऽ-
पि। प्रददासि सत्वरं त्वं नारकमतिदुःखमहिगिरि-
सुरद्रो ॥ ७१३ ॥

हे अहिगिरिसुरद्रो? एतच्च महोदारताभिप्रायगर्भम्। तव औदार्यं अद्भुतं लोकविलक्षणम्। तदेवोपपादयति—साकमिति। विद्वेषिभिस्साकं प्रियेभ्योपि 'स च मम प्रियः' इत्युक्तदिशा प्रीतिपात्रेभ्यो ज्ञानिभ्योपि सत्वरं हिताहितविवेचनव्यवधानविधुरमेव अतिदुःखं नारकं प्रददासीत्युपालम्भः। विद्वेषिभ्यः अतिमात्रव्यथा-

करं नारकं नरकं 'स्यान्नारकस्तु नरकः' इत्यमरः। प्रददासि 'ये मां द्विषन्ति संमूढा नारके पातयामि तान्' इत्युक्तरीत्या दुर्गतिं वितरसीत्यर्थः। प्रियेभ्यस्तु सत्वरमित्यत्र सः तु अरं इति छेदः। सः त्वमिति योजना। अतिक्रान्तो दुःखमतिदुःखः तं तथोक्तम्। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। 'यन्न दुःखेन संभिन्नं' इत्युक्तदिशा दुःखासंभिन्नमित्यर्थः। अरं रेफविधुरं नारकं नाकमित्यर्थः 'ते ह नाकं महिमानः' इत्यादाविव नाकशब्दोऽत्र परमव्योमपरः। प्रददासि 'नयामि परमां गतिम्' इत्यादिना स्वेनैवोक्तत्वादिति भावः। अत्रापि पूर्वोदाहरणवदेव तुल्ययोगिताश्लेषव्याजस्तुत्यनुप्राणितत्वम्। वैलक्षण्यं तु आहेगिरिसुरद्रो इति रूपकातिशयोक्तिसंकीर्णसाभिप्रायविशेष्यलक्षणपरिकराङ्कुरानुप्राणितत्वं संप्रदानसाहित्यं चेत्यवधेयम्॥

एवं 'गुरुभिस्सह शुश्रूषा' इति पूर्वदर्शितमालासहोक्त्युदाहरणेऽपि शुश्रूषादेर्लसनरूपैकधर्मान्वयलक्षणतुल्ययोगितानुप्राणितत्वमनुसन्धेयम्।

सर्वाण्येतान्युदाहरणानि सहार्थकशब्दघटितान्येव सहोक्तेः प्रदर्शितानि॥ तदघटितत्वेन गम्या यथा—

**पुरविमथनोत्तमाङ्गं धरणितलेन त्रिविक्रम श्रीमन्। अस्ति स्तिमितं त्वत्पदकमलेन कृतं पुरा बलेस्सवने॥७१४॥**

हे त्रिविक्रम! इदं विवक्षितार्थस्य तदवतारासाधारणतां द्योतयितुम्। बलेः वैरोचनेः सवने यागे। धरणितलेन भूतलेन सहेत्यर्थः। विनाऽपि सहशब्दयोगं तृतीया भवतीत्यवोचाम। पुरविमथनस्य शिवस्य उत्तमाङ्गं मस्तकं त्वत्पदस्य त्वच्चरणस्य कम-

लेन सलिलेन गङ्गारूपेणेत्यर्थः। स्तिमितं क्लिन्नं कृतं रचितं पुरा-अस्ति आसीदित्यर्थः। 'पुरि लुङ्चास्से' इति भूतानद्यतने लट्। धरणितलपक्षे तु—त्वत्पदकमलेन त्वच्चरणारविन्देन 'कमलं सलिले ताम्रे जलजे' इति मेदिनी। अविद्यमानः स्तिः स्तीति वर्णसमुदायो यस्मिंस्तत्तथाभूतं स्तिमितं मितं मानकर्मीकृतमित्यर्थः॥

एवं प्रागुपदर्शितोदाहरणेषु सर्वेष्वपि सहार्थकशब्दापनयने तान्यपि गम्यसहोक्त्युदाहरणानि भवन्तीति ध्येयम्॥

॥ इत्यलंकारमणिहारे सहोक्तिसरस्त्रयोविंशः॥

---

## अथ विनोक्तिसरः

किंचिद्विना प्रस्तुतस्य रम्यताऽरम्यताऽपि वा।
निबध्यते यदि तदा सा विनोक्तिरलंकृतिः॥

वर्ण्यस्य किंचिदभावप्रयुक्तं रमणीयत्वारमणीयत्वान्यतरवर्णनं विनोक्तिरलंकारः॥ यथा—

फणिरमणतु शब्दनये कणचरणतु वाऽपि-
कोऽपि तर्कनये। गणनां नार्हति मनुजः फणि-
नाथगिरीश्वरे विना भक्तिम्॥७१५॥

अत्र भगवद्भक्तिविनाकृतस्यारम्यत्वम्॥

यथावा—

सकलामचलामटतु त्रुटतु च शतधा तपोवि-

धानाद्यैः । तव दर्शनाद्विनाऽच्युत भविता जनता कृतार्थतां न गता ॥ ७१६ ॥

अत्र भगवद्दर्शनेन विनाकृतस्यारम्यता ॥

यथावा—

तालेन विना गानं शीलेन विना न शोभते ज्ञानम् । बालेन विना गृहिणी पालेन विना हरे त्वया धरणी ॥ ७१७ ॥

अत्रापि तालादिविनाकृतस्यारम्यता—

रम्यतायां यथा—

मोहेन विनाऽच्युतभाग्दाहेन विना दवस्य भाति वनम् । ग्राहेण विना जलधिः स्नेहेन विना खलेषु सुजनश्च ॥ ७१८ ॥

अच्युतं भजतीत्यच्युतभाक् भगवद्भक्त इत्यर्थः । 'भजो ण्विः' इति ण्विः । जलधिः सरः जलानि धीयन्तेऽस्मिन्निति विग्रहः 'अब्धी सरस्सरस्वन्तौ' इति रत्नमाला । अत्र मोहादिना विनाकृतस्य रम्यता । आद्ये केवले, इतरे तु दीपकानुकूले ॥

मिश्रिता यथा—

कार्श्येन विना विभवस्तव देवि विभाति जातु न तु मध्यम् । चाञ्चल्येन विना हृद्विभासते न तु विलोचनद्वन्द्वम् ॥ ७१९ ॥

अत्र कार्श्यचाञ्चल्याविनाकृतयोर्वस्तुनोः रम्यताऽरम्यते इति भवतीयं मिश्रिता। प्रतिवस्तूपमानुकूला परिसंख्यानुकूला च॥

फणिराजगिरिशिरोमणिगुणराजी भजति रम्यतां सम्यक्। दोषं विना मनागपि विना कलङ्कं शशाङ्करेखेव॥ ७२०॥

नित्यं फणिगिरिनाथे प्रत्यङ्ङात्माऽऽत्मभरसमर्पणतः। हृल्लेखो मणिरिव भात्युल्लेखनतो विना मलीमसताम्॥ ७२१॥

प्रत्यङ् आत्मा जीवः इत्यर्थः। 'ङमो ह्रस्वादचि ङमुण्णित्यम्' इति ङकारात्परस्याचो नित्यं ङमुडागमस्संहितायाम्। मणिः उल्लेखनात् शाणोद्घर्षणादिव प्रत्यगात्मा भगवति भरसमर्पणात् मलीमसतां मृदादिसंसर्गकृतां मलिनतां विना हृल्लेखः हृद्यः भाति। हृदयं लिखतीति हृल्लेखः हृदयशब्दोपपदकात् लिखेः कर्मण्यण्। 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयशब्दस्य हृदादेशः। पक्षे—अविद्याकृतमज्ञानमालिन्यं विना 'मणिवर इव शौरे नित्यहृद्यः' इत्याद्युक्तरीत्या भगवतो हृदयंगमस्सन् भाति नित्यासंकुचितज्ञानो दीप्यत इत्यर्थः। अनयोराद्या शुद्धोपमानुकूला इतरा तु श्लेषमूलोपमानुकूला॥

मूलं विनाऽपि वीरुद्विलसेत्कूलं विनाऽपि शैवलिनी। नालं व्यालेन्द्राचलपालं देवं विना क्वचित्कमला॥ ७२२॥

इयं दीपकपरिसंख्यानुकूला ॥

**रागं विना यथा स्त्री वेगं पयसो विना यथा तटिनी । त्यागं विना यथा श्रीर्योगं शौरेर्विना तथैव मतिः ॥ ७२३ ॥**

पूर्वं क्रियागुणादिसंबन्ध आवश्यकः । इह तूपमामहिम्नैवावगम्यते स इति न तथा ॥

इयं च न केवलं विनाशब्दसद्भाव एव भवति अपितु विनाशब्दार्थवाचकसद्भावेऽपि । तेन नञ्, निर्, वि ,अन्तरेण, ऋते, विकल, वियुक्त, रहित, दूरित, विधुर इत्यादिप्रयोगसद्भावेऽपि । यथ—

**फलमन्तरेण शाखी जलधिर्जलमन्तरेण यदि भायात् । बलमन्तरेण राजाऽप्यलमहिगिरेमन्तरेण भूर्भायात् ॥ ७२४ ॥**

बलमन्तरेण राजाऽपि यदि भायादित्यन्वयः । अत्रान्तरेणशब्दः विनार्थकः प्रयुक्तः । मिथ्याध्यवसितिदीपकानुकूलेयम् ॥

**अम्बरमभानुबिम्बं बिम्बं भानोरनम्बुरुहनयनम् । अम्बुजनयनोऽनम्बुधिसुतस्सुतेजस्तया विभायात्किम् ॥ ७२५ ॥**

अत्र विनार्थको नञ् प्रयुक्तः । अनम्बुरुहनयनं 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतिप्रथितपुण्डरीकाक्षरहितमित्यर्थः । अनम्बुधिसुतः श्रीविश्लिष्ट इत्यर्थः । सुतेजस्तया सुवर्णवर्णतयेति भावः । विभायात्किम् । श्रीविश्लिष्टत्वे ताद्रूप्यस्य

दुर्लभत्वादिति भावः । अत एव ह्यधिकरणसारावळ्यां 'नित्यश्रीर्ब्रध्नबिम्बे' इति विशेषितमाचार्यैः 'आप्रणखात्सर्व एव सुवर्णः' इति श्रुतिरत्रानुसन्धेया । इयं वक्ष्यमाणमालादपिकानुकूला ॥

शेषाचलाभिमुखता येषां प्रोदञ्चिता न किंचिदपि । शेष्यचलाभिमुखत्वं नैष्यन्त्येयते जनुस्सहस्रेऽपि ॥७२६॥

शेषिणः सर्वेश्वरस्य भगवतः अचलं निश्चलं यत् अभिमुखत्वं तत्कटाक्षगोचरत्वमिति यावत् । नैष्यन्ति न प्राप्नुवान्ति शेषाचलाभिमुख्यरूपोपायाभावे भगवदाभिमुख्यरूपफलं दुर्लभमिति भावः । अत्रापि विनाशब्दार्थवाचको नञ् प्रयुक्तः । इयमेकगुणेनान्यदोषोदयरूपोल्लासालंकारानुकूला ॥

त्रासस्पर्शविमुक्ता मुक्ता इव दोषगन्धसंत्यक्ताः । औज्ज्वल्यमुखास्सुगुणा जाज्वल्यन्ते फणाभृदचलमणेः ॥७२७॥

अत्र संत्यक्तशब्दः । उपमानुकूला चेयम् ॥

ज्ञानानन्दत्वाद्याः श्रीनाथगुणास्सुदूरितावद्याः । सूरकरा इव हृद्या वारिततमसश्शुभास्सदास्वाद्याः ॥७२८॥

अत्र सुदूरितशब्दः । इयमप्युपमानुकूलैव ॥

अलंकारभाष्यकारस्तु 'नित्यसंबन्धानामसंबन्धवचनं विनोक्तिः' इत्याह । तस्य मते तु नैतान्युदाहरणानि ॥

इदं तूदाहरणम्—

निर्वहेन सुररिपूणां भवत्प्रतापोष्णिमानमनुभवताम् । मधुमथन चित्रभानुद्वितयं दृष्टं विनोष्णतया ॥७२९॥

चित्रभान्वोस्सूर्यवह्न्योः द्वितयं 'सूर्यवह्नी चित्रभानू' इत्यमरः। अत्र सूर्यवह्न्योरौष्ण्यस्याविनाभावेऽपि विनाभावो दर्शितः॥

यथावा—

निरतिशयविशदिमाढ्ये परितस्स्फुरतीह जगति तव यशसि । माधव विना धवलतां विधुविधिवनितादयो विलोक्यन्ते ॥ ७३० ॥

विधिवनिता सरस्वती । अत्र धावल्याविनाभावेऽपि तद्विनाभावो दर्शितः । अलंकारान्तरपरिरम्भसंभूतमेवास्या रमणीयत्वम्, न तु स्वतः । तेनालंकारान्तरत्वमपि शिथिलमेवेति वदन्ति । परे तु—किंचिद्व्यतिरेकप्रयुक्तरम्यत्वारम्यत्वज्ञानादेव चमत्कारोदयस्य निष्प्रत्यूहत्वेनालंकारान्तरानालिङ्गितस्यास्य रमणीयतायास्सहृदयहृदयैकसाक्षिकत्वात्स्वतोऽस्यालंकारान्तरत्वमक्षतमेवेत्याहुः ॥

अथास्या ध्वनिः —

किं तेन जन्मना स्यात्स्वान्ते यस्मिन्न चिन्तितोऽनन्तः । किं तेन कर्मणा वाऽनन्ते यन्नार्पितं भवत्यन्ते ॥७३१॥

अत्र भगवच्चिन्तनं विना स्वान्तस्य भगवदर्पणं विना कर्मण-श्चारमणीयत्वं किमिति क्षेपेण फलप्रश्नेन वा व्यज्यते । तस्य च भगवद्विषयकभावध्वन्यनुग्राहकत्वेऽप्यप्रतिहतैव ध्वनिव्यपदेश्य-ता । अन्यथाऽनुग्राहकत्वलक्षणसंकरोच्छेदापत्तेरिति ॥

इत्यलंकारमणिहारे विनोक्तिसरश्चतुर्विंशः

## अथ समासोक्तिसरः

साम्याद्भेदकमात्रस्य गम्यमप्रस्तुतं यदि । स-मासोक्तिमिमां प्राहुः प्राज्ञोऽलंकारवेदिनः ॥

भेदकं विशेषणम् । विशेषणमात्रसाम्यगम्याप्रस्तुतवृत्तान्ता समासोक्तिः; समासेन संक्षेपेण प्रस्तुताप्रस्तुत वृत्तान्तयोर्वच-नात् ।

> असावुदयमारूढः कान्तिमान्रक्तमण्डलः ।
> राजा हरति लोकानां हृदयं मृदुभिः करैः ॥

इति प्रकृताप्रकृतश्लेषे चाप्रकृतनृपवृत्तान्तस्य विशेष्य-वाचिना श्लिष्टेन राजपदेनाप्यवगमान्न तत्रातिव्याप्तिः ॥

यथा —

सामोदबाष्पगद्गदरोमोद्गमवेपथुप्रलयललितम् । आलिङ्गति फणधरगिरिमौलिं भक्त्युन्मुखा मदी-यमतिः ॥७३२॥

अत्र भक्त्युन्मुखस्वमतिवृत्तान्ते वर्ण्यमाने सामोदेत्यादिक्रियाविशेषणसाम्याद्वल्लभस्वयंग्रहाश्लेषप्रसक्तनायिकावृत्तान्तः प्रतीयते ॥

स्फुटकुचमुखवर्णैषा वृत्तातुलनाभितोऽतिगम्भीरा। कविवाणी ललितपदाश्लेषेण हरेर्मुदं ददाति पराम् ॥७३३॥

कुः कुवर्णः कवर्गो वा चः चवर्णश्च मुखं येषां तानि वर्णानि अक्षराणि स्फुटानि यस्यास्सा तथोक्ता। अन्यत्र स्फुटाः कुचमुखवर्णाः स्तनवदनवर्णाः यस्यास्सा तथोक्ता। अविद्यमाना तुलना साम्यं यस्यास्सा तथोक्ता। वृत्तैः मात्रावर्णभेदाभिदुरच्छन्दोनिष्पन्नैः श्लोकैः वृत्तेन भगवच्चरित्रेण वा अतुलना असदृगित्यर्थः। लोकोत्तरवृत्तघटिततयाऽतिश्लाघ्येति भावः। 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' इत्यमरः। अभितः समन्ततः अतिगम्भीरा 'ध्वनिमत्ता तु गाम्भीर्यम्' इत्युक्तगाम्भीर्यगुणशालिनीत्यर्थः। पक्षे—वृत्ता आवर्तवद्वर्तुला अतुला असदृशी या नाभिः तया नाभितः सार्वविभक्तिकस्तसिः। अतिगम्भीरा अतिगभीरवर्तुलासदृशनाभिरित्यर्थः। ललितानि पदानि सुप्तिङन्तात्मकानि यस्यां सा, ललिते पदे चरणे यस्यास्सा तथोक्ता च कविवाणी श्लेषेण पक्षे—आश्लेषेणेति छेदः। आलिङ्गनेनेत्यर्थः। अत्र कविभारतीवृत्तान्ते प्रस्तुते स्फुटकुचमुखेत्यादिविशेषणसाम्यात् वाणीशब्दगतस्त्रीलिङ्गमहिम्ना चाप्रस्तुतोत्कण्ठितनायिकावृत्तान्तः प्रतीयते। पूर्वत्र विशेषणानि साधारणानि। इह तु श्लिष्टानीति विशेषः। साधारणत्वं च श्लेषेण विनैव प्रकृताप्रकृतवृत्तान्तानुगतत्वम् ॥

यथावा—

आदौ मदमलिनोऽच्युत जला (डा)शयानुप्रवेशितपदोऽथ । विषमतमासद्ग्राहग्रस्तोऽद्य विरौम्युदस्तहस्तोऽहम् ॥ ७३४ ॥

हे अच्युत ! आदौ मदेन गर्वेण दानोदकेन च मलिनः, अथ जलाशयेषु जडधीषु जलाधारेषु च अनुप्रवेशितं पदं व्यवसायः चरणं च येन स तथोक्तः । अत एव विषमतमेन असता ग्राहेण दुराग्रहेण । पक्षे—जलजन्तुविशेषेण अवहारापरपर्यायेण ग्रस्तस्सन् 'ग्राहो ग्रहेऽवहारे च' इति मेदिनी । उदस्तः उत्क्षिप्तः हस्तः करः शुण्डा च येन स तथोक्तस्सन् अद्य कर्मपरिपाकदशायां, विरौमि रोदिमि । अत्र संसारनिर्विण्णजनवृत्तान्ते प्रस्तुते श्लिष्टविशेषणसाम्यात् ग्राहग्रस्तजरद्गजवृत्तान्तः प्रतीयते ॥

सारूप्यादपीयं दृश्यते यथा—

जन्म सरस्वति फणिपतिगिरिपतिलसदुरसि भवति तव वसतिः । कौस्तुभ विभासि धन्यो निस्तुलविभवो भवादृशः कोऽन्यः ॥ ७३५ ॥

सरस्वति सागरे । अत्र श्रीनिवासकौस्तुभवर्णने प्रस्तुते यत्र क्वा जन्म लब्ध्वाऽतिमात्रविदेशे श्लाघनीयतमेऽधिगतसाम्राज्यसंपदो भाग्यशालिनः पुरुषस्य वा महाविदुषो वा वृत्तान्तः प्रतीयत इति सारूप्यनिबन्धनेयम् ॥

यथावा—

फणिगिरिपतिहृदि कौस्तुभमणिवरसंदर्शनेन

**नयनयुगम् । हृष्यति हृदयं विकसति गळति तमो मिळति मञ्जुलच्छाया॥ ७ ३६॥**

अत्र प्रस्तुतेन कौस्तुभदर्शनवृत्तान्तेनाप्रस्तुतोदयमानभानुदर्शनवृत्तान्तः प्रतीयते । अत्र नयनयुगं हृष्यति, हृदयं विकसतीत्यत्र सारूप्याच्चक्रवाकमिथुनहर्षकमलविकासौ प्रतीयेते । गळति तमः, मिळति मञ्जुलच्छायेत्यत्र श्लेषेणान्धकारनिरासकान्तिलाभाविति पूर्वोदाहरणाद्वैलक्षण्यम् ॥

अत्र कुवलयानन्दकृतः–" प्रस्तुताप्रस्तुतसाधारणविशेषणबलात्सारूप्याद्वा यदप्रस्तुतवृत्तान्तस्य प्रत्यायनं तत् प्रस्तुते विशेष्ये समारोपार्थं, सर्वथैव प्रस्तुतानन्वयिनः कविसंरम्भगोचरत्वायोगात् । ततश्च समासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः । न तु रूपक इव प्रस्तुते अप्रस्तुतरूपसमारोपोऽस्ति । मुखचन्द्र इत्यत्र मुखे चन्द्रत्वारोपहेतुचन्द्रपदसमभिव्याहारवत् 'रक्तश्चुम्बति चन्द्रमाः' इत्यादिसमासोक्त्युदाहरणे चन्द्रादौ जारत्वाद्यारोपहेतोस्तद्वाचकपदसमभिव्याहारस्याभावात् 'निरीक्ष्य विद्युन्नयनैः' इत्याद्येकदेशविवर्तिरूपकोदाहरण इव प्रस्तुते अप्रस्तुतरूपसमारोपगमकस्याप्यभावात् । तत्र हि विद्युन्नयनैरित्यत्र निरीक्षणानुगुण्यादुत्तरपदार्थप्रधानरूपमयूरव्यंसकादिसमासव्यवस्थितादुत्तरपदार्थभूतनयनान्वयानुरोधात्पयोदेऽनुक्तमपि द्रष्टृपुरुषत्वरूपणं गम्यमवगम्यते । न चेह तथा निरीक्षणवत् 'त्वय्यागते किमिति वेपत एष सिन्धुः' इति श्लोके सेतुकृत्त्वादिवच्चाप्रस्तुतासाधारणवृत्तान्त उपात्तोस्ति । नापि श्लिष्टसाधारणादिविशेषणसमर्पितयोः प्रस्तुताप्रस्तुतवृत्तान्तयोरप्रस्तुतवृत्तान्तस्य विद्युन्नयनवत्प्राधान्यमस्ति । येन तदनुरोधात् 'त्वं सेतुमन्थकृत्' इत्यत्रेव प्रस्तुतेऽ-

नुक्तमप्यप्रस्तुतरूपसमारोपमभ्युपगच्छेम । तस्माद्विशेषणसमार्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुताहेतुः । यद्यपि प्रस्तुताप्रस्तुतवृत्तान्तयोरिह श्लिष्टसाधारणविशेषणसमर्पितयोर्भिन्न पदोपात्तविशेषणयोरिव विशेष्येणैव साक्षादन्वयादस्ति समप्राधान्यम् । तथाऽप्यप्रस्तुतवृत्तान्तान्वयानुरोधान्न प्रस्तुते अप्रस्तुतरूपसमारोपोऽङ्गीकार्यः । तथाहि यथा प्रस्तुतविशेष्ये नास्त्यप्रस्तुतवृत्तान्तस्यान्वययोग्यता, तथैवाप्रस्तुतेऽपि नास्ति प्रस्तुतवृत्तान्तस्यान्वययोग्यता । एवं च समप्रधानयोः प्रस्तुताप्रस्तुतवृत्तान्तयोरन्यतरस्यारोपेऽवश्यमभ्युपगन्तव्ये श्रुत एव प्रस्तुते अप्रस्तुतस्यारोपश्चारुताहेतुरिति युक्तम्" इत्याहुः ॥

रसगङ्गाधरकारस्तु समासोक्तेरेवं लक्षणादिकमभाणीत् । तथाहि—"यत्र प्रस्तुतधर्मिको व्यवहारस्साधारणविशेषणमात्रोपस्थापिताप्रस्तुतधर्मिकव्यवहाराभेदेन भासते सा समासोक्तिः । साधारणविशेषणमात्रश्रुत्युपस्थापिताप्रस्तुतधर्मिकव्यवहाराभिन्न - त्वेन भासमानप्रकृतधर्मिकव्यवहारत्वमिति चैकोक्तिः । शब्दशक्तिमूलध्वनिवारणाय मात्रेति, तत्र विशेष्यस्यापि श्लिष्टतया प्रकृतेतरधर्म्युपस्थापनद्वारा तादृशधार्मिकव्यवहारोपस्थापकत्वात् । एवमपि—

> आबध्नास्यलकान्निरस्यसि तमां चोलं रसाकांक्षया-
> लङ्कायां वशतां तनोषि कुरुषे जङ्घाललाटक्षतम् ।
> प्रत्यङ्गं परिमर्दनिर्दयमहो चेतस्समालम्बसे
> वामानां विषये नृपेन्द्र भवतः प्रागल्भ्यमत्यद्भुतम् ॥

इत्यत्र प्रकृतधर्मिकप्रकृताप्रकृतव्यवहारविषयके श्लेषेऽतिव्याप्तेर्वारणाय प्रस्तुताप्रस्तुतत्वे धर्मिविशेषणतयोपात्ते । व्यवहार-

विशेषणत्वेन तयोरुपादाने तु साधारणविशेषणमात्रश्रुत्युपस्थापिताप्रकृतशृङ्गारवृत्तान्ताभिन्नत्वेन स्थित एवात्र प्रकृतो वीरवृत्तान्त इति स्यादेवातिप्रसङ्गः । न चात्र राज्ञो वर्णनस्य प्रस्तुतत्वात्तद्गतयोर्द्वयोरपि वृत्तान्तयोः प्रस्तुतत्वमिति कथमतिप्रसङ्ग इति वाच्यं, न स्यादतिप्रसङ्गः यदि वर्णनमात्रं प्रस्तुतं स्यात् , तत्संग्रामादौ वीरतामात्रवर्णनप्रस्तावे तु स्यादेवातिप्रसङ्गः ॥

मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि ।

त्वयि चपलेऽपिच सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥

इत्याद्यप्रस्तुतप्रशंसायामप्रकृतव्यवहारस्साक्षादुपात्तत्वाद्विशेष्येणाप्युपस्थापित एवेति न तत्रातिव्याप्तिः । यदि तु जलक्रीडादौ भ्रमरवृत्तान्त एव प्रस्तुतस्तदा भवत्येवेयं समासोक्तिः ॥ तत्र तावत्—

विबोधयन् करस्पर्शैः पद्मिनीं मुद्रिताननाम् ।

परिपूर्णोऽनुरागेण प्रातर्जयति भास्करः ॥

इत्यत्र किरणस्पर्शकरणकमुकुळितपद्मिनीकर्मकविकासानुकूलव्यापारवदभिन्नो भास्करो जयतीति वाक्यार्थश्शक्त्यैव तावत्प्रतीयते । हस्तस्पर्शकरणकनायिकाविशेषकर्मकानुनयनानुकूलव्यापारवदभिन्न इत्यादिश्चापरोऽर्थ उभयत्रानुषक्ततया तयैव शक्त्या शक्त्यन्तरेण व्यक्त्या वा सर्वथैव प्रतीयत इत्यत्र सहृदय एव प्रमाणम् । एवं च द्वाविमौ वाक्यार्थौ सव्येतरगोविषाणवदत्यन्तासंस्पृष्टौ यदि स्यातां तदा भगवतो भास्करस्य कामुकत्वं कमलिन्या नायिकात्वं च सकलप्रतीतिसिद्धं विरुद्धं स्यात् । द्विप्रधानत्वेन वाक्यभेदश्चापद्येत । यदि चापरोऽर्थः प्रकृतकर्तर्यारोप्यते तदा कमलिनीविकासकर्ता नायिकानुनयकर्ता

च सूर्य इत्येकत्र द्वयमिति विषयताशाली बोधस्स्यात् । न तु पूर्वोक्तानुपपत्तिपरिहारः । यदि च श्लेषमूलाभेदाध्यवसानेन कमलिन्यादीनां नायिकात्वादिप्रत्यय उपपाद्यते तदाऽप्यश्लिष्टपदोपस्थितो भगवान्नायकत्वानाघ्रात एव । पद्मिनीशब्दस्थाने नलिनीशब्दोपादाने साऽपि नायिकात्वेन कथं नाम प्रतीतिविषयत्वमियात् । तस्माद्विशेषणसाम्यमहिम्ना प्रतीतोऽप्रकृतवाक्यार्थं स्स्वानुगुणं नायिकादिमर्थमाक्षिप्य तेन परिपूर्णविशिष्टशरीरः प्रकृतवाक्यार्थे स्वावयवतादात्म्यापन्नतदवयवोऽभेदेनावतिष्ठते । स च परिणाम इव प्रकृतात्मनैव कार्योपयोगी । स्वात्मना च रसाद्युपयोगी । अत्र चाप्रकृतार्थस्य पृथक्छब्दानुपादानाद्रूपकाद्वाक्यार्थसंबन्धिनो वैलक्षण्यम् । पदार्थरूपकात्तु स्फुटमेव । आक्षिप्तार्थघटितत्वाच्च वाक्यार्थश्लेषात् । एवं चात्र शक्त्याक्षेपाभ्यां सर्वार्थनिर्वाह इति भामहोद्भटप्रभृतीनां चिरन्तनानामाशयः । 'निशामुखं चुम्बति चन्द्र एषः' इत्यादौ निशाचन्द्रशब्दयोरश्लिष्टत्वान्मुखचुम्बनमात्रस्य च पुत्रादिसाधारण्येन कथं तावन्नियतनायकाक्षेपकत्वम्, कथं वा आक्षिप्तस्यापि नायकादेर्निशाचन्द्रयोरेवाभेदेनान्वयः, न भेदेन चुम्बनादौ । तथात्वे च तयोर्नायकतातटस्थ्ये रसानुद्बोधापत्तेः । तस्मात् 'निशामुखं चुम्बति चन्द्रिकैषा, अहर्मुखं चुम्बति चण्डभानुः' इत्यादावप्रतीयमानं नायकत्वं प्रकृते टाप्प्रथमाभ्यां प्रतिपादितेन प्रकृत्यर्थगतेन स्त्रीत्वेन पुंस्त्वेन च स्वाधिकरण एवाभिव्यज्यते । एवं च निशाशशिनोर्नायकत्वसिद्धिरश्लिष्टविशेषणैः । व्यञ्जनव्यापारेणैवाप्रकृतार्थबोधनम्, शक्तेः प्रकरणादिना नियन्त्रणात् । तदित्थं व्यञ्जनमाहात्म्यादेवाप्रकृतवाक्यार्थतादात्म्येन प्रकृतवाक्यार्थोऽवतिष्ठते । गुणीभूतव्यङ्ग्यभेदश्चायमिति तु रमणीयः

पन्थाः" इति। अन्यत्सर्वं तत्रैव द्रष्टव्यं विस्तराभिलाषिभिरित्यलमतिभूमिस्वैरविसर्पणेन॥

अथास्याः केवलभेदाः प्रतिपाद्यन्ते। विशेषणसाम्यं श्लेषेण भवति शुद्धसाधारण्येन वा। तदपि धर्मान्तरपुरस्कारेण कार्यपुरस्कारेण वेति प्रत्येकं द्विविधम्। तत्र श्लिष्टधर्मान्तरपुरस्कारेण विशेषणसाम्यं यथा—

**विलिखितविचित्रपत्रा सुच्छाया भास्वदतनुतापहरा। उरगगिरितटवनी परिचरणाच्छ्रीवल्लभस्य सोल्लासा॥ ७३७॥**

विलिखितानि विशेषेण रचितानि, विभिः पक्षिभिः लिखितानि चञ्चुपुटैर्दलितानि च। चित्राणि मकरिकाद्याकारवक्रया नानारूपाणि पत्राणि पत्राकाररेखान्यसनानि। पक्षे—नानावर्णानि पलाशानि यस्यास्सा तथोक्ता। सुच्छाया शोभनानातपा मनोहरकान्तिश्च। भास्वतः भानोः अतनुः अकृशः यस्तापः तस्य हरा। अन्यत्र—भास्वान् उदीर्णः अतनोर्मदनस्य तापस्संज्वरः तस्य हरा। श्रीवल्लभस्य परिचरणात् परितस्संचारात् शुश्रूषणाच्च सोल्लासा सप्रकाशा सहर्षा च। अत्र दक्षिणनायकलब्धोपचारोत्तममहिळावृत्तान्ताभेदेन स्थितः प्रकृतवृत्तान्तः सुच्छायत्वसोल्लासत्वादिधर्मपुरस्कारेण श्लेषेण विशेषणसाम्यम्। एवं 'स्फुटकुचमुख' इति प्रागुदाहृते पद्येऽपि द्रष्टव्यम्॥

श्लिष्टकार्यपुरस्कारेण विशेषणसाम्यं यथा—

**पूर्वं निपात्य विग्रहकाले शौरे समानमध्यमवीरान्। पश्चादनिपात्यैकं पदमपि लोके सुशब्दतां प्रकटयसे॥ ७३८॥**

हे शौरे! विग्रहकाले आयोधनसमये एकं पदमपि पश्चादनिपात्य एकचरणापसर्पणमप्यकृत्वेत्यर्थः । समानाः तुल्याः उत्तमा इति यावत्। मध्यमाः स्वापेक्षयाऽपकृष्टाः ये वीराश्शूराः तान्। यद्वा—असमानिति छेदः । असमान् शौर्यवीर्यादिभिरसदृशान् । अत एव अमध्यमान् उत्कृष्टान् वीरान् पूर्वं आदावेव न तु विलम्बेन निपात्य पातयित्वा निहत्येत्यर्थः । अनेनास्य परानिरास ईषत्कर इति द्योतितम्। शोभनः शब्दः यशः यस्य तस्य भावं सुशब्दतां यशस्वितामित्यर्थः । प्रकटयसे। 'शब्दोऽक्षरयशोगीतव्योमवाक्यध्वनिष्वपि' इति रत्नमाला। पक्षे—विग्रहकाले समासार्थं विग्रहप्रदर्शनावसरे समानमध्यमवीरान् उक्तविधान् शब्दान् पूर्वं निपात्य तेषां शब्दानां 'पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च' इति सूत्रेण पूर्वनिपातस्य नियमितत्वात् पूर्वमेव प्रयुज्येत्यर्थः। एकं पदमपि एकमित्याकारकं शब्दमपि। पश्चादनिपात्य पूर्वमेव प्रयुज्येत्यर्थः। तस्य 'पूर्वकालैक' इति सूत्रेण पूर्वनिपातनियमात् । सुशब्दतां शब्दशास्त्रप्रावीण्यं प्रकटयसे प्रथयसे इत्यर्थः । अत्र वैयाकरणवृत्तान्ताभेदेन स्थितः प्रस्तुतवृत्तान्तः। निपात्येत्यादिश्लिष्टकार्यपुरस्कारेण विशेषणसाम्यम् ॥

एवं कार्यातिरिक्तधर्मप्रतिपादकश्लिष्टविशेषणसाम्येन कार्यरूपधर्मप्रतिपादकतत्साम्येन च समासोक्तिद्वैधी दर्शिता ॥

शुद्धसाधारण्येन धर्मान्तरपुरस्कारेण यथा—

**स्खलितमिमं संसारे ललिततमा दृक्तवात्र कंसारे । निरवधिवात्सल्या मां सरभसमुद्धर्तुमुत्सुकाऽऽपतति ॥ ७३१ ॥**

उत्सुका आपततीति छेदः। आपतति आयातीत्यर्थः। अत्र बालकजननीवृत्तान्ताभेदेन स्थितः प्रकृतवृत्तान्तः। निरवधिवात्सल्येत्यादिशुद्धसाधारण्येन धर्मान्तरपुरस्कारः॥

शुद्धसाधारण्येन कार्यपुरस्कारेण यथा—

**स्तोतुं त्रपामहे त्वां यस्य तवोच्छृङ्खलो वृषाद्रिमणे। विष्फारो ननु समितावम्बरमाधूय दश दिशो भुङ्क्ते॥ ७४० ॥**

समितौ सभायाम्। अम्बरं वसनम्। त्वद्विष्फारस्य निर्लज्जतया सभायामेवाम्बरव्याधूननपूर्वकं दशदिगुपभोगकारित्वात्त्वां स्तोतुं वयमेव लज्जामह इति भावः। वस्तुस्थितिस्तु - युधि तावकधनुर्विष्फारस्सकलगगनदशदिग्व्यापी ईदृशं महाविक्रान्तचूडामणिं त्वां स्तोतुं मितपचवचसो वयं लज्जामह इति। अत्र प्रस्तुतभगवद्धनुर्ज्यानिर्घोषवृत्तान्तोऽप्रस्तुतनिर्लज्जकामुकवृत्तान्ताभेदेनावतिष्ठते। भुङ्क्ते इति कार्यपुरस्कारेण विशेषणसाम्यम्। भोगश्च प्रकृते औपचारिकः। एवं प्रागुदाहृते 'सामोदबाष्पगद्गद' इति पद्येऽपि द्रष्टव्यम्॥

कार्यधर्मान्तरयोस्संकरेण साधारण्यं यथा—

**शुभविभवसंप्रसारणमाकलयन्पूर्वरूपमपि भगवन्। रचयसि मघोनि गुणमपि सुभेऽत्र दृढपाणिनिहितशास्त्रस्त्वम्॥ ७४१ ॥**

हे भगवन्! दृढं पाणौ निहितं शास्त्रं सुदर्शनादिशस्त्रसमुदयो यस्य स तथोक्तः। आश्रितानिष्टानिवारणेष्टप्रापणार्थमात्तपञ्चायुध इति भावः। त्वं मघोनि इन्द्रे शुभविभवसंप्र-

सारणं शुभस्य मङ्गळकरस्य विभवस्य त्रैलोक्यसाम्राज्यस्य संप्रसारणं संप्रदानमिति यावत् । आकलयन् सन् अत एव पूर्वरूपं दुर्वासश्शापात्पूर्वमवस्थितमूर्जितत्वादिरूपं च । आकलयन्निति संबध्यते । प्रवर्तयन्नित्यर्थः । अत एव सुभे शोभना भा दीप्तिर्यस्य तस्मिंस्तथोक्ते उज्ज्वलतेजसीत्यर्थः । अत्र अस्मिन्निन्द्रे गुणमपि नयविनयसमृद्ध्यादिसुगुणमपि रचयसि । परिपूर्णज्ञानशक्तिबलैश्वर्यवीर्यतेजसस्तवानुग्रहादेवेन्द्रस्येदशसमृद्ध्यादिलाभ इति भावः । अनेनैवाभिप्रायेण भगवन्निति संबोधनम् । पक्षे—दृढं स्वभ्यस्तं पाणिनये हितं यच्छास्त्रं व्याकरणं यस्य स तथोक्तस्त्वम् । अस्मिन् पक्षे शुभविभवसंप्रसारणमित्यत्र शुभविभेतिच्छेदः । शुभा विभा प्रभा यस्य तथोक्तः। तस्य संबुद्धिः हे शुभविभ! हे भगवन्! सुभे सुष्ठुभे 'यचि भम्' इत्युक्ताजादिविभक्तिपरकत्वलक्षणां भसंज्ञां प्राप्ते मघोनि मघवशब्दे । वसंप्रसारणं वस्य वकारस्य संप्रसारणं 'इग्यणस्संप्रसारणम्' इत्युक्तलक्षणं यण्स्थानिकमिकं उकारमित्यर्थः। 'श्वयुवमघोनामतद्धिते' इति भसंज्ञकमघवशब्दस्थवकारस्य संप्रसारणविधानादिति भावः। पूर्वरूपमपि 'संप्रसारणाच्च' इति सूत्रेण संप्रसारणादचि परे पूर्वरूपमेकादेशं च आकलयन् निष्पादयन् अत्र अस्मिन्मघवशब्दे गुणमपि 'आद्गुणः' इत्यनेन गुणसंज्ञिकमेकादेशं च रचयसि । तथाच मघवशब्दे भसंज्ञायां वकारस्य संप्रसारणं पूर्वरूपं गुणं च विधाय मघोनीत्यादिरूपं निष्पादयसीति निर्गळितोऽर्थः। अत्र प्रस्तुते महेन्द्रवैभवादिप्रदातृभगवद्वृत्तान्ते अप्रस्तुतवैयाकरणवृत्तान्तोऽभेदेन स्थितः। अत्र दृढपाणिनिहितशास्त्रत्वेन धर्मेण शुभविभवसंप्रसारणाकलनादिकं कार्यं संकीर्णम् ॥

समासोक्तौ व्यज्यमानस्याप्रकृतव्यवहारस्योपस्कारकत्वमेव, न प्राधान्यम्। तदुपस्कृतवाच्यस्यैव प्राधान्यमित्युक्तम्। तत्र यदि व्यङ्ग्यस्यैव प्राधान्यं स्यात् न वाच्यस्य, तदा 'स्तोतुं त्रपामहे त्वां' इति प्रागुदाहृते पद्ये निन्दाव्याजेन स्तुतौ पर्यवसानं न स्यात्। स्तुतिनिन्दयोः प्रकृताप्रकृतव्यवहाराश्रयत्वादिति ध्येयम्॥

अलंकारसर्वस्वकारेण तु "औपम्यगर्भत्वेनापि विशेषणसाम्यं संभवति। यथा—

> दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी।
> केशपाशालिबृन्देन सुवेषा हरिणेक्षणा॥

अत्र हरिणेक्षणामात्रवृत्तेस्सुवेषत्वस्य विशेषणस्य महिम्ना दन्तप्रभासदृशानि पुष्पाणीत्यादियोजनां विहाय दन्तप्रभाः पुष्पाणीवेत्याद्युपमितसमासाश्रयेण कृते योजने प्रकृतार्थसिद्धौ सत्यां वृत्त्यन्तरेण त्यक्ताया एव योजनायाः पुनरुज्जीवने पुष्पपल्लवालिबृन्दैरुपमेयैः आक्षिप्ताया लतायाः प्रत्ययात्तद्व्यवहारारोपः। एवं सुवेषेत्यपहाय परीतेति कृते उपमारूपकसाधकबाधकप्रमाणाभावात्तदुभयसंशयरूपसंकराश्रयेण कृते योजने पश्चात्पूर्वोक्तरीत्या लताप्रतीतेस्समासोक्तिरेव। समासभेदेनार्थभेदेऽपि शब्दैकमादाय श्लिष्टमूलायामिव विशेषणसाम्यं बोध्यम्। आद्यवन्ते वा रूपकाश्रयेण दन्तप्रभा एव पुष्पाणीति योजने कृते तु हरिणेक्षणांशे आक्षिप्तलतातादात्म्यकेन एकदेशविवर्तिरूपकेणैवाप्रकृतार्थप्रत्ययोपपत्तेर्नार्थस्समासोक्तेरत्र" इत्यभिहितम्।

तन्न विचारसहं—दन्तप्रभाः पुष्पाणीवेत्युपमागर्भत्वेनाप्याद्यौ योजने कृते हरिणेक्षणांशे आक्षिप्तलतोपमानिकया एकदेशविवर्तिन्या उपमयैव गतार्थत्वात्समासोक्तेरानर्थक्यादत्राप्रसक्तेः। न

चोद्भटमते एकदेशविवर्तिनोरुपमासंकरयोरस्वीकारात्तथोक्तमिति वाच्यम् । अनुपदमेव स्वयं तत्स्वीकारात् ॥

हालाहलसमो मन्युरनुकम्पा सुधोपमा ।
कीर्तिस्ते चन्द्रसदृशी भटास्तु मकरोद्भटाः ॥

इत्यादौ गत्यन्तराभावात्तेनाप्येकदेशविवर्त्युपमाया एव स्वीकृतत्वाच्च । अवश्यकॢप्तेनोपपत्तौ भेदान्तरकल्पनानौचित्यात् । तस्मादौपम्यगर्भविशेषणोत्थापितस्समासोक्तिप्रकारो न संगच्छते । यत्र श्लिष्टविशेषणेन शुद्धसाधारणविशेषणेन वा सहचरितमौपम्यगर्भविशेषणं तत्र यद्यप्यस्ति समासोक्तिः । तथाऽपि नासावौपम्यगर्भविशेषणोत्थापितस्तृतीयः प्रभेदो भवितुमीष्टे । स्वतन्त्रविषयत्वाभावात् । यथा—

निर्मलाम्बररम्यश्रीः किंचिद्दर्शिततारका ।
हंसावलीहारयुता शरद्विजयते तराम् ॥

अत्र पूर्वार्धगतश्लिष्टविशेषणोत्थापितैव समासोक्तिः उत्तरार्धगतेनौपम्यगर्भविशेषणेन विद्वदुत्थापिता युक्तिस्तदनुगामिना मूर्खेणेवानुमोद्यते । एवं 'दत्तानन्दा समस्तानां प्रफुल्लोत्पलमालिनी' इति पूर्वार्धे कृते शुद्धसाधारणविशेषणोत्थापितैव ॥

परिफुल्लाब्जनयना चन्द्रिकाचारुहासिनी ।
हंसावलीहारयुता शरद्विजयते तराम् ॥

इत्यत्रोपमारूपकयोस्साधकस्य बाधकस्य चाभावात्संकरालंकारस्वीकर्तृनये तदुभयसंशयात्मक एकदेशविवर्ती संकरालंकार एव । तदस्वीकर्तृनये च यदोपमितसमासस्फूर्तिस्तदैकदेशविवर्तिन्युपमा । विशेषणसमासस्फूर्तौ तथाविधमेव रूपकमिति प्रथमयोजनयैवाप्रकृतार्थावगतेः द्वितीययोजनायाः परिफुल्लाब्जानीव

नयनानीत्युपमागर्भाया वैयर्थ्यादनुत्थानमेव । यदा तु—'शरद्वर्षा-सखी बभौ' इति चतुर्थचरणं निर्मीयते तदा तु शरन्मात्रवृत्ते-र्वर्षासखीत्वस्योपादानादब्जचन्द्रिकाहंसप्रधानस्योपमितसमास - स्यावश्यकत्वात्प्रथमप्रादुर्भूतया नयनहासहाराक्षिप्तकामिनीरूपो-पमानिकथा अत एवैकदेशविवर्तिन्या उपमयैव निर्वाह इति वे-दितमपि सहृदयप्रीतये पुनर्निवेदितमिति हि रसगङ्गाधरे स्थि-तम् । सेयं लौकिके व्यवहारे लौकिकस्य व्यवहारस्य शास्त्रीये शास्त्रीयस्य लौकिके शास्त्रीयस्य शास्त्रीये लौकिकस्य वा स-मारोप इति चतुर्धा भवति । तत्राद्या प्रागुदाहृताऽपि पुनरुदा-ह्रियते बालबुद्धिवैशद्याय ॥

यथा—

प्रदरक्षोभादस्रं प्रमुञ्चमाना तव द्विषां सेना ।
दूनाऽभूद्वीभत्सा म्लाना च रघूद्वहातिविचिकित्सा ॥

हे रघूद्वह! तव द्विषां सेना प्रदरेण विदारणेन बाणेन भङ्गेन वा यः क्षोभः तस्मात् । पक्षे—प्रदरेण शोणितस्राविणा स्त्रीरोगविशेषेण यः क्षोभः तस्मात् 'प्रदरा भङ्गनारीरुग्बाणाः' इत्यमरः । 'प्रदरो रोगभेदे स्याद्विदारे शरभङ्गयोः' इति मेदिनी च । अस्रं अश्रु केशं वा जात्येकवचनम् । अन्यत्र रुधिरं 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनी । प्रमुञ्च-माना विसृजन्ती । मुञ्चतिः स्वरितेत् ततश्शानच् । एकत्र वि-दारणबाणभङ्गान्यतमजनितवैकल्येन बाष्पायमाणा विकीर्णकेशा वेत्यर्थः । अन्यत्र व्याधिविशेषेण रुधिरस्राविणीत्यर्थः । दूना परि-तप्ता बीभत्सा विकृता बीभत्सरसालम्बनभूता च 'बीभत्सं वि-कृतं त्रिष्विदं द्वयम्' इत्यमरः । अतिविचिकित्सा अतिमात्रसंश-

यग्रस्ता प्राणसंशयमापन्नेत्यर्थः। पक्षे—विगता चिकित्सा रुक्प्रतिक्रिया यस्यास्सा तथोक्ता अतिमात्रं विचिकित्सा अतिविचिकित्सा अतिवेलरोगप्रतीकारविधुरेत्यर्थः। म्लाना क्षीणहर्षा च अभूत्। अत्र प्रस्तुते लौकिके भगवत्पराहतरिपुसेनाव्यवहारे लौकिकव्याधितवनिताव्यवहारारोपः॥

शास्त्रीये व्यवहारे शास्त्रीयव्यवहारारोपेण यथा—

**श्रुतविधिना मन्त्राऽऽप्त्रा नानामूलार्थवादसंधात्रा। स भवानवेदि निश्चितमच्युत विदुषा सनातनो धर्मः॥ ७१३॥**

हे अच्युत! श्रुतविधिना श्रुतः निशमितः विधिः 'द्रष्टव्यो निदिध्यासितव्यः' इत्याम्नातो विधिः येन तथोक्तेन। अत एव मन्त्रा मननशीलेन। मननं नाम श्रुतस्यार्थस्य प्रतिष्ठापनाय युक्तिभिरेवमेवेति चिन्तनम्। नानामूलार्थवादसंधात्रा नाना वक्ष्यमाणरीत्या बहुप्रकाराः मूलार्थः 'कारणं तु ध्येयः' इति ध्येयतयोक्तजगत्कारणरूपवस्तु मूलं चासावर्थश्चेति विग्रहः तद्विषये ये वादाः तेषां संधात्रा शेषषष्ठ्या समासः 'मूलमाद्ये शिफाभयोः, अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इति चामरः। "सन्मूलास्सोम्येमाः, अदोमूलाः क्रियास्सर्वाः, मूलमूलेति खिन्ने" इत्यादौ मूलशब्दः कारणवाचितया प्रयुक्तः। अयं भावः—'सदेव सोम्येदमग्र असीत्, ब्रह्म वा इदमेकमेवाग्र आसीत्, आत्मा वा इदमेक एवाग्र आसीत्, हिरण्यगर्भस्समवर्तताग्रे, न सन्न चासच्छिव एव केवलः' इत्यादीनां नानाविधानां कारणवाक्यानामेकविषयत्वावश्यंभावे 'छागो वा मन्त्रवर्णात्' इत्युक्तन्यायेन सद्ब्रह्मात्माहिरण्यगर्भशिवादिसामान्यशब्दान् 'एको ह वै नारायण

आसीत्' इति श्रुते नारायणरूपविशेषे पर्यवसाययतेति । आप्त्वा प्राप्त्वा । अनेन 'ब्रह्मविदाप्नोति' इत्यत्रोक्तं परप्राप्तृत्वं प्रकटीकृतम्। विदुषा 'द्वे विद्ये वेदितव्ये परा चैवापरा च' ॥

तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ।
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥

इत्यत्रोक्तागमोत्थज्ञानवतेत्यर्थः, विवेकादिसाधनसप्तकानुगृहीतोपासनात्मकज्ञानस्यावेदीति पृथग्वक्ष्यमाणत्वात् । सनातनः नित्यः धर्मः सिद्धधर्मरूपः । अलौकिकश्रेयस्साधनं हि धर्मः । स च सिद्धसाध्यभेदेन द्विविधः सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगोऽपि महाभारते दृश्यते । यथा—

ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥

इति सिद्धोपायभूत इत्यर्थः । स भवान् प्राप्यरूपस्त्वम् । निश्चितं युक्त्यन्तरैरचाल्यं यथा स्यात्तथा अवेदि उपास्यत । आवृत्त्यधिकरणे विद्युपास्योरैकार्थ्यस्य भाषितत्वात् । उपासनं नाम विजातीयप्रत्ययानन्तरितं अहरहरभ्यासाधेयातिशयं प्रीतिरूपापन्नं दर्शनसमानाकारं ध्यानम् । अनेन 'द्रष्टव्यो निदिध्यासितव्यः' इत्यसावर्थोऽनुसृतः ॥

पक्षे—श्रुताः विधयः अपूर्वनियमपरिसंख्याभेदभिदुराः विधयः येन स तथोक्तः । तेन ईदृशविधिस्वरूपपरिज्ञात्रेत यावत् । तत्र यो विधिरत्यन्ताप्राप्तमर्थं प्रापयति सोऽपूर्वविधिः। यथोक्तं 'विधिरत्यन्तमप्राप्तौ' इति । यथा दर्शपौर्णमासप्रकरणे 'व्रीहीन् प्रोक्षति' इति । एतद्विध्यभावे दर्शपौर्णमासीयव्री-

हिषु प्रोक्षणं कथमपि न प्राप्नोति । एतद्विधिसद्भावे तु तदीयव्रीहिषु प्रोक्षणं प्राप्नोत्येवेत्यत्यन्ताप्राप्तप्रोक्षणप्रापकत्वादयमपूर्वविधिः । यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः । यथोच्यते—'नियमः पाक्षिके सति' इति । यथा तत्रैव 'व्रीहीनवहन्ति' इति । एतद्विध्यभावे दार्शपौर्णमासिकेषु व्रीहिषूत्पत्तिवाक्यावगतपुरोडाशोपयोगितण्डुलनिष्पत्त्यनुकूलवैतुष्यरूपकार्यायावहननवत्कदाचिन्नखविदलनमपि प्राप्नुयादिति । तस्मिन्पक्षेऽवहननस्य प्राप्त्यभावात्कार्यान्यथानुपपत्तेरवहननस्य पाक्षिकी प्राप्तिस्स्यात् । सति चास्मिन्विधौ अवहननेनैव वैतुष्यं संपादनीयमिति नियमे सति विदलनमर्थान्निवर्तेत इति नियमविधिरयम् । द्वयोस्समुच्चित्य प्राप्तावितरनिवृत्तिफलको विधिः परिसंख्याविधिः । यथोच्यते—'तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते' इति । यथा 'चयनप्रकरणे—इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यश्वरशनाग्रहणाङ्गत्वेन मन्त्रविधिः । एतद्विध्यभावे हि रशनाग्रहणप्रकाशको मन्त्रो रशनादानप्रकाशनसामर्थ्यरूपाल्लिङ्गादश्वरशनादान इव गर्दभरशनादानेऽपि नियमेन प्राप्नुयात् । सति चास्मिन्विधौ अनेन मन्त्रेणाश्वरशनामेवाददीत । न तु गर्दभरशनां, सा तु तूष्णीमेव आदाति गर्दभरशनातो मन्त्रनिवृत्तिर्भवतीति द्वयोस्समुच्चित्य प्राप्तावितरनिवृत्तिफलकत्वादयं परिसंख्याविधिरिति संक्षेपः । प्रकृतमनुसरामः—मन्त्राप्त्या । मन्त्राणामाप्ता प्राप्ता तेन अधिगतमन्त्रेणेत्यर्थः । पूर्ववदेव समासः । प्रयोगसमवेतार्थस्मारका मन्त्राः । तेषां च तादृशार्थस्मारकत्वेनैवार्थवत्त्वम्, न तु तदुच्चारणमदृष्टार्थं, संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात् । नच दृष्टस्यार्थस्मरणस्य प्रकारान्तरेणापि संभवान्मन्त्राम्नानं व्यर्थमिति वाच्यम् । मन्त्रै-

रेव स्मर्तव्यमिति नियमविध्याश्रयणात्। नानामूलार्थवादसंधात्रा नानामूलानां बहुकारणकानां अर्थवादानां अर्थवादवाक्यानां संधात्रा अर्थवादवाक्यानि विधिवाक्यैकवाक्यतया संयोज्य प्रमाणीकुर्वतेति यावत्। अर्थवादो नाम प्राशस्त्यनिन्दान्यतरपरं वाक्यम्। तस्य च लक्षणया प्रयोजनवदर्थपर्यवसानम्। तथाहि—अर्थवादवाक्यं हि स्वार्थप्रतिपादने प्रयोजनाभावाद्विधेयनिषेध्ययोः प्राशस्त्यनिन्दितत्वे लक्षणया प्रतिपादयति। स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात्। आम्नायस्य च क्रियार्थत्वात्। न चेष्टापत्तिः 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिना सकलवेदाध्ययनस्य कर्तव्यतां प्रतिपादयता सर्वस्यापि वेदस्य प्रयोजनवदर्थपर्यवसानं सूचयतोपात्तत्वेनानर्थक्यानुपपत्तेः। स च द्विविधः—विधिशेषो निषेधशेषश्च। तत्र 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादिविधिशेषस्य 'वायुर्वै क्षेपिष्ठा देवता' इत्यादेर्विधेयार्थप्राशस्त्यबोधकतयाऽर्थवत्त्वम्। 'बर्हिषि रजतं न देयम्' इत्यादिनिषेधशेषस्य 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इत्यादेर्निषेध्यस्य निन्दितत्वबोधकतयाऽर्थवत्त्वम्। नच प्राशस्त्यादिबोधनस्य निष्प्रयोजनत्वेन नार्थवादस्यार्थवत्त्वमिति वाच्यम्। आलस्यादिवशादप्रवर्तमानस्य पुंसः प्रवृत्त्यादिजनकत्वेन तद्बोधस्योपयोगात्। स पुनस्त्रेधा। तदुक्तम्—

विरोधे गुणवादस्स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥ इति॥

अयमर्थः—प्रमाणान्तरविरोधे सत्यर्थवादो गुणवादः। यथा 'आदित्यो यूपः' इत्यादि। यूपे आदित्याभेदस्य प्रत्यक्षबाधिततयाऽऽदित्यवदुज्ज्वलत्वगुणोऽनेन लक्षणया प्रतिपाद्यते। प्रमाणान्तरा-

वगतार्थबोधकोऽनुवादः । यथा—'अग्निर्हिमस्य भेषजम्' इति । अत्र हिमविरोधित्वस्याग्नौ प्रत्यक्षावगतत्वात् । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको वादो भूतार्थवादः । यथा—'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादिः । इत्यलं प्रसक्तानुप्रसक्तिकाचापलेन । विदुषा उक्तरीत्या विधिमन्त्रार्थवादवेत्त्रा पुरुषेण विपश्चिता । सनातनः 'एष धर्मस्सनातनः' इत्युक्तरीत्या श्रुतिस्मृत्यादिपरंपरागतः । धर्मः साध्यरूपो धर्मः निश्चितं मीमांसान्यायैर्निस्संदिग्धं यथा स्यात्तथा स भवानवेदि ज्ञातः । धर्मो नाम वेदप्रतिपाद्यः प्रयोजनवदर्थः । स च यागादिरेव । प्रयोजनेऽतिव्याप्तिवारणाय प्रयोजनवदिति । भोजनादावतिव्याप्तिवारणाय वेदप्रतिपाद्य इति । अनर्थफलकत्वादनर्थभूते श्येनादावतिव्याप्तिवारणायार्थ इति । नच 'चोदनालक्षणोऽर्थो धर्मः' इति सौत्रतल्लक्षणविरोधः । चोदनापदस्य विधिरूपवेदैकदेशपरत्वादिति वाच्यम् । तत्रापि चोदनाशब्दस्य वेदमात्रपरत्वात् । वेदस्य सर्वस्य धर्मतात्पर्यवत्त्वेन धर्मप्रतिपादकत्वादित्यलं विस्तरेण । अत्र ब्रह्ममीमांसाशास्त्रीये प्रस्तुते व्यवहारे अप्रस्तुतकर्ममीमांसाशास्त्रीयव्यवहारारोपः ॥

यथा वा—

**अप्प्राप्ते पूर्वं त्वयि बहवोऽपि गुणाः परं विधीयन्ते । अन्यत्र तु न विधातुं शक्योऽनेको गुणो भगवन् ॥ ७४४ ॥**

हे भगवन्! इदं वक्ष्यमाणगुणपौष्कल्यवत्ताभिप्रायगर्भम् । पूर्वं सृष्टेः प्राक् । अपः प्राप्तः अप्प्राप्तः । तस्मिंस्तथोक्ते 'क्षिती-

याश्रित' इत्यादिना समासः । महार्णवजले शयान इति यावत् । 'यमन्तस्समुद्रे कवयोऽवयन्ति, महार्णवे शयानोऽप्सु' इत्यादिप्रमाणात् । अनेन—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।

ता यदस्यायनं पूर्वं तेन नारायणस्स्मृतः ॥

इति स्मृत्युक्तनारायणशब्दनिर्वचनं दर्शितम् । तेन 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी' इति श्रुतं कारणत्वमप्याक्षिप्तं भवति । त्वयि परं त्वय्येव । बहवोऽसंख्याता अपि गुणाः कारणत्वौपयिकाः सर्वज्ञत्वसर्वशक्तित्वादयः कल्याणगुणाः विधीयन्ते 'यस्सर्वज्ञस्सर्ववित्' इत्यादिश्रुतिभिरिति भावः । अन्यत्र त्वदतिरिक्ते देवे तु अनेकोगुणः विधातुं न शक्यः । एकोऽपि गुणो न शक्यो विधातुं किमुतानेकः । त्वेवान्येषां दैवतानामेकयाऽपि श्रुत्या उक्तविधकल्याणकगुणस्यैकस्याप्यनुक्तेरिति भावः । एतेन कारणवाक्यघटितानां हिरण्यगर्भशिवादिशब्दानामैन्द्रीन्यायेन कयाचिदवयवशक्त्या रूढ्या अपर्यवसानवृत्त्या वा नारायणपरत्वमेवेति पूर्वश्लोकोक्त एवार्थः स्थूणानिखनन्यायेन स्थिरीकृत इत्यवधेयम् ॥

अन्यत्र—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।

अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥

इति मीमांसककारिकायाः पूर्वोत्तरार्धयोरर्थः एतत्पद्योत्तरपूर्वार्धाभ्यां वैपरीत्येन वर्णितः । तथाहि—पूर्वं गुणविधानात्पूर्वं अप्राप्ते शास्त्रान्तरेणाविहिते कर्मणि अत्र ''अनचि च' इति रेफघटितपकारस्य वैकल्पिकं द्वित्वम् । बहवोऽपि गुणाः अप्रधानभूता अर्थाः परं एकयत्नेनैवेति यावत् । विधीयन्ते विहिता भवन्ति ।

तथाच सूत्रम्—'तद्गुणास्तु विधीयेरन्न विभागाद्विधानार्थेन चेदन्येन शिष्टाः' इति । अन्यत्र प्राप्ते कर्मणि तु अनेको गुणो न विधातुं शक्यः । अत एव 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इति प्रकृत्य 'चित्रया यजेत पशुकामः' इति मानान्तरप्राप्तकर्मानुवादेन चित्रत्वस्त्रीत्वगुणद्वयविधाने वाक्यभेद इति चित्रापदस्य नामधेयत्वमेव 'यदाग्नेयोऽष्टाकपालो भवत्यमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्यत्र मानान्तराप्राप्ते कर्मणि एकदेवताष्टाकपालपुरोडाशामावास्यापौर्णमास्याद्यनेकगुणविशिष्टो द्रव्यदेवतासंबन्धेनानुमितो यागो विधीयत इति विशिष्टकर्मविधानान्न वाक्यभेद इति व्यवस्थापितमाकरे । एवमन्यत्रापि द्रष्टव्यमिति संक्षेपः। अत्रापि पूर्ववदेव शास्त्रीये व्यवहारे शास्त्रीयव्यवहारारोपः ॥

यथा वा—

**ब्रह्म जयतादपूर्वं करणादिकमपि यदन्वयादेव। प्राप्नोति शक्तिमत्त्वं प्रभाकराद्याश्च यदनुगा विबुधाः ॥ ७४५ ॥**

अपूर्वं 'न चास्य कश्चिज्जनिता' इत्युक्तरीत्या कारणान्तररहितं, कार्याणां कारणं पूर्वम्' इत्युक्तरीत्या सकलजत्कारणभूतमित्यर्थः । ब्रह्म भगवान् जयतात् । यस्य ब्रह्मणः अन्वयात् प्रेरणादेवेति यावत्। करणादिकं इन्द्रियादिकमपि आदिशब्देन प्राणादिकं गृह्यते। शक्तिमत्त्वं स्वस्वविषयकार्यक्षमत्वं प्राप्नोति—

केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं क उ देवो युनक्ति ॥

इति परब्रह्मस्वरूपपक्षे—

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः।

चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति॥

इत्युत्तररूपा श्रुतिरत्रानुसंहिता॥ प्रभाकराद्याः सूर्यप्रमुखाः विबुधाः देवाः यदनुगाः यच्छासनानतिवर्तिन इति यावत्। 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषास्माद्वातः पवते भीषोदेति सूर्यः' इत्यादिश्रुतिभ्यः॥

पक्षे—अपूर्वं मीमांसकाभ्युपगतं किंचिद्वस्तु। विहितनिषिद्धकर्मणां तत्तद्वाक्यैस्तत्तत्फलसाधनत्वेऽवगते आशुविनाशिनां कर्मणां कालान्तरभाविफलसाधनत्वस्योपपत्त्यर्थमन्तरा पुण्यपापरूपमदृष्टापरपर्यायमपूर्वं नाम किंचित्तैर्हि कल्पितम्। तच्चोत्पत्त्यपूर्वं फलापूर्वमित्याद्यनेकविधम्। करणादिकं 'साधकतमं करणम्' इत्याद्युक्तं कारकवाचि पदजातमपि। येन अपूर्वेण अन्वयात् अन्वितत्वादेव शक्तिमत्त्वं मुख्यार्थवत्त्वं प्राप्नोति। ते हि पदानामन्विताभिधायित्वेन कारकपदानामपूर्वकार्यान्विताभिधायिनां तदन्वित एव मुख्यार्थः, तदन्वयपरित्यागे लक्षणैवेति वदन्ति। प्रभाकराद्याः प्रभाकरो नाम तान्त्रिकाग्रणीः स एवाद्यो येषां ते विबुधाः विपश्चितः यदनुगाः यत् अपूर्वं अनुगच्छन्तीति तथोक्ताः अपूर्वप्रतिपादनपरा इत्यर्थः। अत्रापि पूर्ववदेव व्यवहारारोपः॥

यथा वा—

**विविधपदनामरूपव्याकरणकृता त्वयैव ननु भगवन्। मृत्युंजयस्य सुतरामुमागमश्रीर्व्यधीयतार्धाङ्गे॥ ७४६॥**

हे भगवन्! विविधानां पदानां वस्तूनां नामरूपयोः देवादिनामधेयविचित्रसृष्ट्योः व्याकरणं विभागः तत्करोतीति तथोक्तः तेन। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतेः। त्वयैव मृत्युंजयस्य पिनाकिनः अर्धाङ्गे अर्धशरीरे सुतरां अतिसुष्ठु उमागमश्रीः उमायाः गौर्याः आगमश्रीः संबन्धसंपत्। व्यधीयत अक्रियत। विविधप्रपञ्चनामरूपव्याकर्तारं त्वामन्तरेण पुरारातेरर्धाङ्गिनाङ्गत्वं को नु नामान्यो विदधीतेति भावः॥

अन्यत्र—विविधानां पदानां सुप्तिङन्तात्मकानां नाम्नां कृदन्तादिप्रातिपदिकानामपि यानि रूपाणि तेषां व्याकरणं प्रकृतिप्रत्ययाद्यन्वाख्यानं करोतीति तथोक्तेन। मृत्युंजयस्य मृत्युंजयशब्दस्य अर्धाङ्गे तस्य शब्दस्य वर्णचतुष्टयात्मकतया वर्णद्वयस्यार्धाङ्गत्वं, तत्र आद्यवर्णद्वयचरमभागे इति यावत्। सुतरां अतिवेलरमणीया उच्चारणे कोमलतासंपादनादिति भावः। मुमागमस्य मुमित्याकारकागमस्य श्रीः "संज्ञायां भृतॄवृजि' इत्यादिना खचि 'अरुर्द्विषदजन्तस्य मुम्' इत्यनेन मुमागम इत्यर्थः। व्यधीयत विहिता। अत्र प्रस्तुते वेदान्तशास्त्रीयव्यवहारे अप्रस्तुतशब्दशास्त्रीयव्यवहारारोपः॥

यथा वा—

**साधुक्रियाप्रधानकमाख्यातं येन विश्वमनुशिष्टम्। नामानि तस्य सत्त्वप्रधानतां दधति तव विभान्ति विभो॥ ७४७॥**

हे विभो! येन त्वया 'सत्त्वस्यैष प्रवर्तकः' इति सत्त्वप्रवर्तकतया श्रुतेन भवता। विश्वं कृत्स्नं जगत् साधुक्रिया

प्रशस्तकर्म प्रधानं अनुष्ठेयतया मुख्यं यस्य तत् साधुक्रिया-प्रधानकं सत् अनुशिष्टं लाक्षितं उज्जीवितमिति यावत् । यद्वा—साधुक्रियाप्रधानकं यथा तथा अनुशिष्टमिति योज्यम् । आख्यातं उक्तरीत्या प्रतिपादितं 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति' इत्यादिश्रुतिभिरिति भावः । 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति । पतिं विश्वस्य' इत्यादिश्रुतयोऽप्यत्रानुसन्धेयाः । तस्य उक्तरीत्या विश्वानुशासितुः तव नामानि अभिधानानि सत्त्वप्रधानतां सत्त्वगुणप्राधान्यं सत्त्वप्रवृत्तिनिमित्तकतामिति यावत् । 'सत्त्ववान्सात्त्विकः' इति नामसहस्रपाठादिति भावः । यद्वा—सतो भावस्सत्त्व तत्प्राधान्यं दधात दधानानि 'सदसत्क्षरमक्षरम्' इति तत्रैव पाठात् । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः' इत्युक्तेश्चेति भावः । दधतीत्यत्र 'वा नपुंसकस्य' इति नुमो वैकल्पिकत्वात्तदभावः । विभान्ति । अथवा—उक्तरीत्या सकलभुवनानुशासितुस्तव दिव्यनामानि कर्तृणि कीर्तयतां जनानां सात्त्विकतां पुष्णन्ति प्रकाशन्त इत्यर्थः ॥

पक्षे—येन यास्केनेति प्रतीयते । विश्वं सर्वं आख्यातं तिङ् क्रियाप्रधानकं साधु यथा स्यात्तथा अनुशिष्टं देवदत्तस्तण्डुलं पचतीत्यादौ शाब्दबोधे देवदत्तकर्तृकस्तण्डुलकर्मकः पाक इत्याख्यातस्य क्रियाप्राधान्यं 'भावप्रधानमाख्यातम्' इति तेनानुशिष्टमिति भावः । भावः क्रिया । आहुश्च—

> फलव्यापारयोर्धातुराश्रये तु तिङस्स्मृताः ।
> फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥

इति । तस्य यास्कस्येति प्रतीयते । नामानि कृदन्तादिप्रातिपदिकानि सत्त्वप्रधानानि द्रव्यप्रधानानि सन्ति विभान्ति । पाचक

इत्यादौ नाम्नि बोधे पाकाश्रय इत्यादेर्द्रव्यप्राधान्यस्य 'सत्त्वप्रधानानि नामानि' इति तेनानुशिष्टत्वादिति भावः । अत्रापि प्रस्तुते वेदान्तशास्त्रीयव्यवहारे अप्रस्तुतशब्दशास्त्रीयव्यवहारारोपः ॥

यथावा—

**अपि पापकारिणमहो सुभजन्तं साधुकारिवज्जानन् । अस्वपदविग्रहमथ स्वनिभं च तनोषि नाथ सुमनास्तम् ॥७४८॥**

हे नाथ! त्वं पापकारिणमपि पापंकरोतीति पापकारी तथोक्तमपि 'सुप्यजातौ' इति ताच्छील्ये णिनिः । सुभजन्तं आत्मानं सम्यगनन्यभाक्त्वेन भजमानं जनं साधु करोतीति साधुकारी साधुकर्मकृत् । पूर्ववदेव णिनिः । तेन तुल्यं तद्वत् जानन् साधुकारिपापकारिपदाभ्यां "साधुकारी साधुर्भवति पापकारी पापो भवति" इति श्रुतिः प्रत्यभिज्ञाप्यते । आदौ दुष्कृतकारिणमप्यात्मानं सम्यग्भजमानं पुमांसं साधुकारिवज्जानन् ।

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यस्सम्यग्व्यवसितो हि सः ॥

इति स्वेनैव गीतत्वादिति भावः । तं पुमांसं अस्वपदविग्रहं स्वपदाभ्यां स्वचरणाभ्यां विग्रहः कलहः विवाद इति यावत् स न विद्यते यस्य तं तथोक्तं तनुषे ।

यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः ॥

इत्युक्तरीत्या सर्वान्तर्यामिणा सर्वस्वामिना स्वेनाविवदमानं विधत्स इत्यर्थः । अत्र 'त्वं मेऽहं मे' इत्युक्तरीत्या भगवता सह प्र-

त्यगात्मनो विवादस्तत्पदयोरौपचारिकस्तद्गौरवप्रदर्शनायोक्तः, चरणानुग्रह इत्यादिवत्। उदाहृतेऽस्मिन्वचने यमवैवस्वतराजशब्दाः भगवत्पराः। अविवादशब्दस्तु तत्पदयोरात्मरक्षाभरसमर्पणपर इति ध्येयम्। यथैतद्विवृतं वरदगुरुभिः—

> दक्षिणाशापतेरत्र न मुख्या हृदयस्थितिः।
> अन्तःप्रविष्टश्शास्ता यो जनानां यमयत्यपि॥
> आत्मानमन्तरस्तस्य मृत्युमृत्योर्हृदि स्थितः।
> तेन सर्वाधिराजेन विवस्वद्बिम्बवर्तिना॥
> अविवादस्तु तस्यैव पदयोरात्मनोऽर्पणम्।

इति। स्वचरणारविन्दसमर्पितात्मरक्षाभरं विदधासीति भावः। अथ एवमात्मरक्षाभरार्पणानन्तरं आर्त्याधिक्ये तत्क्षणमेव। दृप्तत्वे तच्छरीरावसाने इति भावः। तं प्रपन्नं स्वनिभं स्वेन तुल्यं च तनोषि 'निरञ्जनः परमं साम्यमुपैति' इत्याद्युक्तरीत्या परमसाम्यापन्नं विदधासीत्यर्थः। उक्तेऽर्थे हेतुमभिप्रयन्नाह—सुमना इति। दयमानमहोदारमानस इत्यर्थः॥

पक्षे—सुमनाः विद्वानित्यर्थः। पापकारिणं सुभजन्तं च शब्दं साधुकारिवत् साधुकारिशब्दतुल्यं जानन् अस्वपदविग्रहं स्वघटकयावत्पदविग्रहविरहिणं तनोषि। पापकारिसाधुकारिशब्दयोः 'उपपदमतिङ्' इत्यनेन सुभजच्छब्दस्य 'कुगतिप्रादयः' इत्यनेन च सूत्रेण समासविधानात्। तयोश्च 'नित्यं क्रीडा' इत्यतो नित्यमित्यनुवृत्त्या तद्विहितसमासस्य नित्यत्वात्। अत एव ह्यस्वपदविग्रहः 'अविग्रहो नित्यसमासः अस्वपदविग्रहो वा' इत्युक्तेः। विग्रहो नाम समस्यमानानां पदानां व्यस्ततया प्रदर्शनं, 'विभज्य गृह्यते यस्स विग्रहः परिकीर्तितः' इ-

त्युक्तेः, 'विग्रहस्समरे देहे विस्तरेऽपि' इति रत्नमाला । अथ स्वनिभं स्वनिभशब्दं च अस्वपदविग्रहं तनुषे इति योजना। तस्यापि नित्यसमासत्वादिति भावः 'स्युरुत्तरपदे त्वमी'। 'निभसंकाशनीकाशप्रतीकाशोपमादयः' इत्युत्तरपदभूतस्यैव निभशब्दस्य तुल्यार्थकत्वानुशासनात् । उत्तरपदशब्दश्च समासचरमावयवे रूढः । अत्रापि पूर्ववदेव व्यवहारारोपः ॥

यथावा—

**शास्त्रप्रसिद्धिसुभगे निरन्तरं भात्यतो गुणे परतः। अपदान्तस्थितिभाजस्तस्यास्य बुधस्य भवति पररूपम् ॥ ७४१ ॥**

शास्त्रे औपनिषददहरविद्यादौ प्रसिद्धिः ख्यातिः तया सुभगे रमणीये गुणे 'अपहतपाप्मा विजरो विमृत्युः, विज्ञानघन एव' इत्यादिश्रुते गुणे। जात्यभिप्रायकमेकवचनम् । परतः परस्मात् अतः अकारवाच्यान्नारायणात् 'अ इति भगवतो नारायणस्य प्रथमाभिधानम्' इत्याद्युक्तेः। परब्रह्मणस्सकाशात् तदनुग्रहादिति यावत्। निरन्तरं निश्शेषाविद्यानिवृत्त्या निरर्गळं यथा स्यात्तथा भाति सति । यद्वा अतःपरत इति षष्ठ्यर्थे। सार्वविभक्तिकस्तसिः। परतः अतः परस्य ब्रह्मणः गुणे इति योजना । अपहतपाप्मत्वादौ ब्राह्मे गुणे इत्यर्थः । निरन्तरं भाति नित्यं प्रकाशमाने सतीत्यर्थः। अपदान्तस्थितिभाजः अस्य अकारवाच्यस्य नारायणस्य पदं 'तद्विष्णोः परमं पदम्' इत्याम्नातं स्थानं तस्मिन् तस्य वा अन्तः मध्ये। रेफान्तमाधिकरणशक्तिप्रधानमव्ययम्। स्थितिभाजः तस्यास्य परब्रह्मप्रसादाविर्भूतब्राह्मगुणस्यास्य बुधस्य ब्रह्मविदः पररूपं परस्य ब्रह्मणो रूपं

'निरञ्जनः परमं साम्यमुपैति' इति श्रुतं परमसाम्यमिति यावत्। भवति निष्पद्यते। अत्र फलाध्यायस्थब्राह्माधिकरणार्थोऽनुसन्धेयः। तत्र हि 'स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र अभिनिष्पाद्यतयोक्तं किमपहतपाप्मत्वादिकमेव उत ज्ञानमात्रमेव आहोस्विदुभयमपीति विशये—मुक्तमधिकृत्यापहतपाप्मत्वाद्युपन्यासात्तेन रूपेणैवाविर्भवतीति 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति सूत्रेण जैमिनिमतमनूद्य 'विज्ञानघन एव' इत्यादिषु ज्ञानमात्रमेवास्य स्वरूपमित्यवगमात्, अपहतपाप्मादिशब्दानां शोकाद्यभावपरत्वाच्च ज्ञानमात्रस्वरूपेणाविर्भवतीति 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः' इत्यौडुलोमिमतमुपन्यस्य पक्षद्वयेऽप्यन्यतरश्रुतिबाधात् "'विज्ञानघन एव' इत्यवधारणस्य एकदेशजडत्वशङ्काव्युदासपरत्वेन गुणान्तरप्रतिक्षेपकत्वाभावादुभयरूपेणाविर्भवति" इति 'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः' इति सूत्रेण मतद्वयमपि प्रतिक्षिप्तम्॥

पक्षे—अतः ह्रस्वाकारात् परतः परत्र विद्यमाने शास्त्रप्रसिद्ध्या शब्दविद्याप्रसिद्ध्या सुभगे गुणे गुणसंज्ञके अकारादौ वर्णे निरन्तरं भाति संहितायां अव्यवधानेन भासमाने सति पदं सुप्तिङन्तात्मकं तस्य अन्तः चरमभागः पदान्तः स न भवतीत्यपदान्तः तस्मिन् पदान्तभिन्ने स्थितिभाजः तस्य गुणावधित्वेन पूर्वमुक्तस्य अस्य ह्रस्वाकारस्य पररूपं परस्य गुणसंज्ञकवर्णस्य रूपं तद्रूप एकादेश इत्यर्थः। भवतीति 'अतो गुणे' इति सौत्रोक्तप्राक्रिययाऽर्थोऽनुसन्धेयः। अत्रापि पूर्ववदेवारोपः॥

यथा वा—

**अचिदिह योऽनड्वानिव सन्मार्गस्तदपि तव दृशो**

विषयः । तं स्वपदान्ते दमितं विद्वांसमघध्वसं च विदधासि ॥ ७५० ॥

यः पुमान् अनड्वान् वृषभ इव अचित् ज्ञानहीनः 'चित्संवित्प्रतिपद्ज्ञप्तिचेतनाः' इत्यमरः । 'ज्ञानेन हीनः पशुभिस्समानः' इत्युक्तेः । सन्मार्गात्स्रंसत इति सन्मार्गस्रदपि तव दृशः कटाक्षस्य विषयः याहच्छिकादिसुकृतवशादिति भावः । भवेदिति शेषः । तं पुमांसं दमितं दान्तं 'दमु उपशमे' णिजन्तादस्मात् क्तः 'वा दान्त' इति निपातनस्य वैकल्पिकतया पक्षे इट् । 'दान्तस्तु दमिते' इत्यमरः । 'शान्तो दान्तः' इत्युक्तरीत्या साधनसंपन्नमित्यर्थः । अथ विद्वांसं ब्रह्मविदं अत एव अघे उत्तरपूर्वे पुण्यपापरूपे ध्वंसयत इत्यघध्वत् तथोक्तं अघध्वसं च 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्युक्तप्रक्रियया अश्लिष्टविनष्टोत्तरपूर्वाघं सन्तमिति भावः । ध्वंसेर्णिजन्तात् क्विपि 'णेरनिटि' इति णिलोपः । विद्वांसमघध्वसमित्याभ्यां 'तदा विद्वान् पुण्यपापे विधूय' इत्यस्याश्श्रुतेरर्थ उक्तः । स्वपदान्ते परमपदमध्ये स्वचरणसन्निधौ वा विदधासि स्थापयसीत्यर्थः ॥

पक्षे—यः अचित् अचिदित्याकारकश्शब्दः 'चिती संज्ञाने' संपदादित्वात्क्विप् । तान्तोऽयं चिच्छब्दः । ततो नञ्समासः । यः अनड्वानिव अनडुच्छब्द इव विद्यमानः सन्मार्गस्रच्छब्दश्च तव दृशो ज्ञानस्य विषयो गोचरो भवति तं अचिच्छब्दं अनडुच्छब्दतुल्यं सन्मार्गस्रच्छब्दं विद्वांसं विद्वच्छब्दं अघध्वसं अघध्वच्छब्दं च स्वपदान्ते स्वस्वरूपं यत्पदं 'स्वादिष्वसर्वनामस्थाने' इति विहितपदसंज्ञाशालि प्रातिपदिकं तस्य अन्ते

अन्तिमवर्णे तकारहकारसकाररूपे दं दकारं इतं प्राप्तं तकारादिस्थानिकदकारवन्तं विद्धासि अचिच्छन्दस्य तकारान्तस्य-पदान्ते 'झलां जशोऽन्ते' इति जश्त्वेन दकारविधानात् अनडुदादिशब्दानां 'वसुस्रंसुध्वंस्वनडुहां दः' इति सूत्रेण पदान्ते दत्वविधानाच्चेति भावः। अत्रापि पूर्ववदेव शास्त्रीये व्यवहारे शास्त्रीयव्यवहारारोपः॥

यथा वा—

**ननु सर्वनामतां हरिरयते स्वयमन्तरो बहिर्योगात्। पूर्वः परश्च विदितोऽसंज्ञायां धीमतां व्यवस्थायाम्॥ ७५१॥**

अयं हरिः स्वयं अन्तरः 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' इत्याद्युक्तरीत्या अन्तर्यामितयाऽन्तर्व्यापनशीलः बहिर्योगात् बहिर्व्याप्तेः सर्वनामतां सर्वनामधेयतां 'अन्तर्बहिश्च तत्सर्वम्' इत्युक्तरीत्या सर्वव्यापितया सर्वशब्दवाच्यतामित्यर्थः। अयते प्राप्नोति 'अन्तर्बहिश्च नारायणः, नारायण एवेद९ सर्वम्, पुरुष एवेद९ सर्वम्, यद्भूतं यच्च भव्यम्, सर्वं खल्विदं ब्रह्म, सर्वत एव सर्वः' इत्यादीनि प्रमाणान्यत्र स्मर्तव्यानि। अत एव 'सर्वश्शर्वः' इति तन्नामसु पठ्यते। किंच असंज्ञायां संज्ञा नाम संकेतः संकेतमात्रेणानिर्वृत्तायां किंतु शास्त्रीयेणैव पथा निष्पादितायामित्यर्थः। धीमतां ब्रह्मविदां व्यवस्थायां सिद्धान्तस्थित्यामिति यावत्। पूर्वः 'एष पूर्वस्य देवस्य लोककर्तुस्सनातनः' इत्याद्युक्तरीत्या सकलजगत्कारणभूतः परः सर्वोत्तर इति च 'परः पराणां, तमीश्वराणां परमं महेश्वरम्' इत्यादिश्रवणात्। विदितः ज्ञात इत्यर्थः। यद्वा—'ब्रह्मैवेदममृतं पुर-

स्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' इत्याद्युक्तरीत्या पूर्वपरादिदिग्दृश्यमानस्सर्वः पदार्थोऽप्ययमेवेति ज्ञात इत्यर्थः । अत्र मूले पूर्वपरशब्दौ श्रुतिगतदक्षिणोत्तरादिशब्दानामुपलक्षकाविति ध्येयम्॥

पक्षे—अयं अन्तरः अन्तरशब्दः बहिर्योगात् बाह्यरूपार्थवत्त्वात् सर्वनामतां सर्वनामसंज्ञां अयते । असंज्ञायां संज्ञाभिन्ने व्यवस्थायां स्वाभिधेयापेक्षावधिनियमरूपार्थे धीमतां विदुषां विदितः। मतिबुद्धीत्यादिना वर्तमाने क्तः 'क्तस्य च वर्तमाने' इति तद्योगे षष्ठी। पूर्वः पूर्वशब्दः परः परशब्दश्च सर्वनामतामयत इति योजना। अत्रार्थेऽपि पूर्वपरशब्दौ वक्ष्यमाणसूत्रस्थावरदक्षिणादिशब्दानामुपलक्षकाविति ध्येयम्। अन्तरशब्दस्य 'अन्तरं बहिर्योगोपसंव्यानयोः' इति बाह्यरूपार्थे पूर्वपरशब्दयोः 'पूर्वपरावर' इति सूत्रेणासंज्ञायां व्यवस्थायां च सर्वनामतानुशासनादिति भावः। अत्रापि पूर्ववदेव समारोपः॥

यथा वा—

**त्वय्यच्युतान्तरङ्गे सकलं बहिरङ्गमप्यसिद्धं नः।**
**नाजानन्तर्ये तव बहिष्ट्वक्लृप्तिः पुनः कदाऽपि भवेत् ॥ ७५२ ॥**

हे अच्युत! त्वयि विषये नः अन्तरङ्गे मनसि सति त्वां ध्यायति सतीति यावत्। सकलं बहिरङ्गं करचरणाद्यवयवजातमपि असिद्धं बाह्यविषयकप्रत्ययवैधुर्यात्सकलावयवानामविद्यमानवद्भानादिति भावः। अनेन ध्यानस्यैकाग्र्यं दर्शितम्। तत्र हेतुमाह—नेति । न, अज, आनन्तर्ये, इतिच्छेदः । हे अज! भगवन्! 'अजहराम्भौ विष्णुधात्रोः' इति रत्नमाला। तव आनन्त-

र्यं अनन्तरस्य भावः आनन्तर्यं तस्मिन् अविनाभावे सतीत्यर्थः । अन्तरङ्गस्येत्यर्थाल्लभ्यते । पुनः बहिष्ट्वक्लृप्तिः बहिर्भावकल्पनं पुनर्विश्लेष इति यावत् । कदाऽपि न भवेत् । अतो बहिरङ्गमखिलं न ज्ञानविषयतां प्रपद्यत इत्यर्थः । यदि त्वयि लग्नं मनो बहिर्मुखं भवेत्तर्हि बहिरङ्गमसिद्धवन्न स्यादिति भावः । अनेनैवाभिप्रायेणाच्युतेति भगवत्संबोधनम् । 'यस्मात्प्राप्ता न च्यवन्ते सोऽच्युतः' इति हि निरुच्यते । भगवति लग्नस्य यस्यकस्यापि वस्तुनस्तस्माच्च्युतिर्न भवतीत्यभिप्रायः ॥

पक्षे—पूर्वार्धेन 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषा, उत्तरार्धेन तदपवादभूता 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति परिभाषा च दर्शिता । अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं स्यादित्यन्तरङ्गपरिभाषाया अर्थः । अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिः बहिष्पदेन बहिरङ्गं गृह्यते तस्य भावो बहिष्ट्वं बहिरङ्गत्वं तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः न प्राप्तिरिति नाजानन्तर्यपरिभाषाया अर्थः । विस्तरस्त्वन्यत्र । अत्रापि पूर्ववदेवारोपः ॥

यथा वा—

**व्याप्त्या प्रथितमबाधं निष्प्रतिपक्षं च साधुपक्षस्थम् । सद्धेतुमीश जगतां त्वां प्राप्येष्टानि साधयन्ति बुधाः ॥ ७५३ ॥**

हे ईश! भगवन्! बुधाः सुधियः व्याप्त्या 'अन्तर्बहिश्च तत्सर्वम्' इत्यादिश्रुत्युक्तव्यापनेन प्रथितं अविद्यमाना बाधा दुःखं यस्य तं 'पीडा बाधा व्यथा दुःखम्' इत्यमरः । 'न जरा

न शोको न मृत्युः' इत्यादिश्रुतिरिहानुसन्धेया । निष्प्रतिपक्षं 'तेन कोऽर्हति स्पर्धितुम्' इति श्रुतेः । साधूनां ज्ञानिनां पक्षे तिष्ठतीति साधुपक्षस्थः तं 'ज्ञानी त्वात्मैव मे मतं, स च मम प्रियः' इति गानात् । सद्धेतुं 'सदेव सोम्य' इत्याद्युक्तरीत्या सकलजगत्कारणमित्यर्थ । त्वां प्राप्य उपास्य इष्टानि मुक्तैश्वर्यादीनि साधयन्ति ॥

अन्यत्र—साधु पक्षस्थमिति पदद्वयम् । जगतामीशेति संबोधनम् । व्याप्तया यत्र धूमस्तत्राग्निरित्यादिसाहचर्यनियमेन प्रथितं बाधो नाम साध्याभाववत्पक्षः । स नास्ति यस्य तं अबाधम् । प्रतिपक्षो नाम स्वसाध्यविरुद्धसाध्याभावसाधकप्रतिहेतुमत्पक्षः स निर्गतो यस्य तं निष्प्रतिपक्षम् । पक्षे संदिग्धसाध्यवति पर्वतादौ तिष्ठतीति पक्षस्थः तम् । अत एव सद्धेतुं धूमादिं प्राप्य ज्ञात्वा इष्टानि वह्न्यादीनि साधयन्तीत्यर्थः । अत्र वेदान्तशास्त्रीयव्यवहारे प्रस्तुते अप्रस्तुतन्यायशास्त्रीयव्यवहारारोपः पूर्वेभ्यो विशेषः ॥

यथा वा—

**यत्र त्वं तत्र श्रीरिति युवयोस्साहचर्यनियमोऽस्ति । व्याप्तिश्चैषाऽच्युत तत्साध्या सत्पक्षवर्तिनस्त्वच्छ्रीः ॥ ७५४ ॥**

हे अच्युत! यत्र यस्मिन् देशे त्वं भवसि, तत्र श्रीर्लक्ष्मीरपि भवति । इति युवयोः तव श्रियश्च 'त्यदादीनि सर्वैर्नित्यम्' इति युष्मच्छब्दैकशेषः साहचर्यनियमः अस्ति—

देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम् ॥

इत्युक्तप्रक्रियया नियतसाहचर्यमस्तीति भावः । 'नित्यैवैषा जग-

न्माता विष्णोश्श्रीरनपायिनी' इत्यादिकमपि भाव्यम् । एषा व्याप्तिश्च—

यथा मया जगद्व्याप्तं स्वरूपेण स्वभावतः ।
तया व्याप्तमिदं सर्वं नियन्त्री च तथेश्वरी ।
मया व्याप्ता तथा साऽपि तया व्याप्तोऽहमीश्वरः ॥

इति लक्ष्मीतन्त्रोक्ता व्याप्तिरपि अस्तीति संबध्यते । तत् तस्मात् सत्पक्षवर्तिनः ब्रह्मवित्पक्षपातिनः –

चतुर्विधा मम जना भक्ता एव हि ते मताः ।
तेषामेकान्तिनश्श्रेष्ठास्ते चैवानन्यदैवताः ॥

इति स्वेनैवोक्तत्वादिति भावः । साधुजनपक्षपातिन इति वा । 'मम-प्राणा हि पाण्डवाः' इति तदुक्तेरिति भावः । त्वत् नित्यानपायिलक्ष्मीकाद्भवतः । श्रीः साध्यते –

चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ।
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥

इत्याद्युक्तरीत्या महाविभूतेस्त्वत्त एव ऐहिकामुष्मिकापवर्गिकसर्वविधसमृद्धिस्साध्यत इति भावः । जातवेदश्शब्दो भगवत्परतया व्याख्यातश्श्रीसूक्तभाष्ये । 'सकलफलप्रदो हि विष्णुः । किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इत्यादिप्रमाणान्यत्रानुसंधेयानि ॥

पक्षे – युवयोः यत्र त्वं तत्र श्रीरिति यत्र धूमस्तत्राग्निरित्यादिवत्साहचर्यनियमः अस्ति व्याप्तिश्च व्याप्तिरपि एषा इयमेव । सर्वं हि वाक्यं सावधारणम् । साहचर्यनियम एवेत्यर्थः । 'सा-

हचर्यनियमो व्याप्तिः' इति हि तल्लक्षणम् । इयमिति विधेयव्याप्तिशब्दगतलिङ्गकटाक्षेण । ततः उक्तविधव्याप्तिसद्भावादेव पक्षवर्तिनः, पक्षे 'सन्दिग्धसाध्यवान्पक्षः' इत्युक्तलक्षणे पर्वतादौ वर्तत इति तथोक्तः । तस्मात् त्वत्तः सद्धेतुभूताद्भवतः श्रीः लक्ष्मीः साध्यते वह्न्यादिरिवेति भावः । अत्रापि पूर्वोदाहरण इवारोपोऽनुसन्धेयः ॥

यथा वा—

**यस्मिन्निश्चितमच्युत साध्यं निश्श्रेयसं वसत्यन्तः । त्वद्भक्तो न्यायविदां स सपक्षस्स्यात्फणाधरगिरीन्दो ॥७५५॥**

हे फणाधरगिरीन्दो! अच्युत! यस्मिन् पुंसि अन्तः मनसि निःश्रेयसं मुक्तिः निश्चितं यथा स्यात्तथा साध्यं साधनीयं सत् वसति । साध्यं निश्चितमिति वा योजना, साध्यत्वेन निश्चितं सद्वसतीत्यर्थः । 'सविशेषणे हि' इति न्यायेन साध्यत्वेन निश्श्रेयसविषयकनिश्चयो मनस्यस्तीति यावत् ।

यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्सांपराये महति ब्रूहि नस्तत् ।
योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते॥

इत्युक्तरीत्या नचिकेतसो मनसीवेति भावः । अन्तर्निश्श्रेयसं वसतीत्ययं निर्देशः 'कर्तुं वा कश्चिदन्तर्वसति वसुमतीदक्षिणस्सप्ततन्तुः' इतिवदिति ध्येयम् । सः त्वद्भक्तः न्यायविदां ब्रह्ममीमांसानयविदां गौतमीयन्यायवेत्तॄणां च । सपक्षः सदृशः पक्षोऽस्य सपक्षः स्ववर्गीण इत्यर्थः । स्यात् 'त्वादृङ्नो भूयान्नचि-

केतः प्रष्टा' इत्युक्तरीत्या छात्रत्वेन स्वीकार्यो भवेदिति भावः। अत्रापि वेदान्तशास्त्रीये प्रस्तुते व्यवहारे 'निश्चितसाध्यवान्सपक्षः' इति न्यायशास्त्रीयस्याप्रस्तुतव्यवहारस्यारोपः । निश्चितं यत्साध्यं वह्न्यादि तद्वान्महानसादिः सपक्षः सपक्षसंज्ञक इति तदर्थः॥

यथा वा—

**स प्रकृतिविकृतिभावं भजते साक्षी भवान्वरद पुरुषः। अविकृतिराद्यप्रकृतिर्महतोऽप्यन्यस्य स भवितैव खलु ॥७५६॥**

हे वरद! अविकृतिः निर्विकारा आद्यप्रकृतिः अखिलभुवनानां प्रथमोपादानकारणभूतः। प्रकृतिशब्दो नित्यस्त्रीलिङ्गः 'वासुदेवः परा प्रकृतिः, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिकमिहानुसन्धेयम् । अविकृतिरिति विशेषणेन 'अचेतना परार्था च नित्या सततविक्रिया' इत्युक्तरीत्या मूलप्रकृतेरिवास्याः प्रकृतेस्स्वरूपान्यथाभावराहित्यमुक्तम् । चिदचिच्छरीरकतया परस्य ब्रह्मण उपादानकारणत्वेऽपि विकाराणां शरीरगतत्वस्य श्रीभाष्यादौ निरूपितत्वात् 'निष्कलं निष्क्रियं, अविकाराय शुद्धाय' इत्यादिप्रमाणप्रतिपादितनिर्विकारभावे तस्मिन्न तत्प्रसक्तिरिति भावः । अत एव पुरुषः 'पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्' इति निर्वचनविषयः परमः पुमान् साक्षी सर्वदा सर्वद्रष्टा 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतेः भवान् प्रकृतिविकृतिभावं प्रकृतेः स्वभावस्य या विकृतिः विकारः तस्याः भावं स्थितिं ज्ञानत्वानन्दत्वादिस्वभावान्यथाभावमित्यर्थः । न भजते । तस्य कर्मकृतत्वेन तव तत्संस्पर्शाभावादिति भावः। 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः।

योनौ लिङ्गे च' इति मेदिनी । कोशे योनिशब्दः प्रकृतिवाची । अन्यस्य त्वदितरस्य चतुर्मुखादेः प्रत्यगात्मनस्तु महतोऽपि त्वदितरापेक्षया पूज्यस्यापि । सः प्रकृतिविकृतिभावः भवितैव । तस्य सर्वस्यापि—

आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥

इति कर्मपरतन्त्रताप्रतिपादनेन स्वभावान्यथाभावस्यावश्यंभावादिति भावः । खल्विति शास्त्रप्रसिद्धिं द्योतयति ॥

अन्यत्र तु—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

इति सांख्यतन्त्रप्रक्रिया निबद्धा । तथाह तदर्थः—मूलप्रकृतिर्नाम सत्त्वरजस्तमसां साम्यरूपा प्रकृतिः । तथाच कापिलं सूत्रम्—'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः' इति । सेयमेका स्वयमचेतना अनेकचेतनभोगापवर्गार्था नित्या सर्वगता सततविक्रिया न कस्यचिद्विकृतिः । तथाच सूत्रम्—'मूले मूलाभावादमूलं मूलम्' इति । अपि तु परमकारणमेव । महदाद्याः सप्त । महानहंकारश्शब्दतन्मात्रादितन्मात्रपञ्चकं चेति सप्त । प्रकृतिविकृतयः स्वस्वकार्यनिरूपितप्रकृतित्वं स्वस्वकारणनिरूपितविकृतित्वं च तेषामस्तीति भावः । यथा महतः प्रकृतिनिरूपितविकृतित्वं अहंकारनिरूपितप्रकृतित्वं च । एवमन्यत्रापि द्रष्टव्यम् । यथाच पूर्वोदाहृतसूत्रखण्डः 'प्रकृतेर्महान् महतोऽहंकारः अहंकारात्पञ्च तन्मात्राणि' इति । आकाशादिभूतपञ्चकं श्रोत्रादिज्ञानेन्द्रियपञ्चकं वागादिकर्मेन्द्रियपञ्चकं मनश्चैकमिति षोडश केवलं विकाराः । न तु कस्य चित्प्रकृतयः । सूत्रख-

ण्डश्च 'उभयमिन्द्रियं तन्मात्रेभ्यस्स्थूलभूतानि' इति । पुरुषः 'शरीरादिव्यतिरिक्तः पुमान्' इति सूत्रोक्तः पुमांस्तु निष्परिणामत्वेन न कस्य चित्प्रकृतिः न कस्यचिद्विकृतिरिति । उदाहरणपद्यार्थस्तु पुरुषः साक्षी केवलं साक्षिभूतः ॥

संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥
तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥

इति हि तदीयप्रक्रिया । प्रकृतिविकृतिभावं उक्तरीत्या कस्यचित्प्रकृतित्वं विकृतित्वं वा न भजते । आद्यप्रकृतिः मूलप्रकृतिः अविकृतिः निर्विकारा महतः महत्तत्त्वस्य अपिशब्दो भिन्नक्रमः । अन्यस्यापि अहंकारादितन्मात्रपर्यन्तस्य तत्त्वषट्कस्यापि सः प्रकृतिविकृतिभावः उक्तरीत्या प्रकृतित्वं विकृतित्वं च भवितैव खलु । इदमुपलक्षणं, षोडशकश्च विकार इत्यस्यापीति संक्षेपः । अत्र प्रस्तुते वेदान्तशास्त्रीयव्यवहारे अप्रस्तुतकापिलतन्त्रसिद्धव्यवहारारोप इति पूर्वेभ्यो विशेषः ॥

यथा वा –

**विदधासि वसूनि दैर्घ्यं विश्वस्य तथा परेऽपि पदराजि । न विकल्पमत्र तनुषे ननु रघुनन्दन समस्तपदवित्त्वम् ॥ ७५७ ॥**

ननु रघुनन्दन !

शक्तोऽपि रक्षणे लोभाद्भयाद्वा शरणागतम् ।
यस्त्यजेत्पुरुषो लोके ब्रह्महत्यां स विन्दति ॥

इत्यादिना राक्षसं प्रति व्यतिरेकमुखेन शरणागतपरित्राणस्य धर्ममूर्धन्यत्वमुपदिशतो रघोरघ्यानन्ददेत्यर्थः। अनेन च संबुद्ध्यन्तपदेन शरणागतपरित्राणादिधर्मप्रवर्तनाय तदनुगुणेऽभिजनेऽवतीर्णत्वं तादृशेषु शरण्येषु च शीर्षण्यत्वं द्योतितम्। समस्तपदवित् समस्तस्य अखिललोकस्य पदं शरणवरणाविषयकं व्यवसायं वेत्तीति तथोक्तः, सर्ववस्तुवेत्ता सर्वज्ञ इति वा। सर्वेषां पदं त्राणं वेत्तीति वा। सर्वभूतानामभयप्रदानेन रक्षितेति यावत्।

य एवमाह—

सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥

इति। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। त्वं—

विभीषणो वा सुग्रीव यदि वा रावणस्स्वयम्।
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया॥

इति वादीति भावः। परेऽपि शत्रुपक्षीयतया सुग्रीवादिभिश्शङ्कितेऽपि विभीषण इति भावः। यद्वा—परे रावणादावपि किमुत विभीषण इति भावः। अपिशब्दोऽत्र संभावने। संभावनं नामात्र दानशौण्डताविष्करणमित्युक्तिः। पदराजि पदयोश्चरणयोः राजत इति तथोक्तः तस्मिन्। 'त्यक्त्वा दारांश्च पुत्रांश्च राघवं शरणं गतः' इत्युक्तरीत्या सर्वस्वपरित्यागेन चरणारविन्दशरणवरणविधातरीति भावः। अयमर्थो राजीत्यनेन ध्वन्यते। तथा विश्वस्य तथाशब्दोऽत्रानिर्वचनीयताद्योतकः। 'तथागतां ताम्' इत्यादिवत्। अनिर्वचनीयं यथा स्यात्तथा विश्वस्य विस्रभ्येत्यर्थः। विपूर्वकात् श्वसेः क्त्वो ल्यप्। वसुनि धनोप-

लक्षिते ऐश्वर्ये विषये दैर्घ्यं आकल्पान्तकालावस्थायित्वं अपरिच्छिन्नत्वं वा विदधासि करोषि । अत्र ईदृशैश्वर्यविश्राणनविषये विकल्पं विविधं कल्पं देयं वा न वेत्यादिसंदेहं न तनुषे निर्विचिकित्समेव दत्से इत्यर्थः ॥

पक्षे—समस्तपदवित् समग्रशब्दशास्त्रवेत्तेत्यर्थः । यद्वा—समस्तानि समासं प्राप्तानि यानि पदानि तानि वेत्तीति तथोक्तः । सर्वसमासाश्रयविधिज्ञ इति यावत् । त्वं वसुनि वसुशब्दे तथा एवं पदराजि पदसंज्ञाभाजि राट्छब्दे परे सति विश्वस्य विश्वशब्दस्य दैर्घ्यं दीर्घं, स्वार्थे ष्यञ् ; विदधासि 'विश्वस्य वसुराटोः' इति सूत्रेण विधत्से इत्यर्थः । विश्वशब्दस्य दीर्घस्स्याद्वसौ राट्छब्दे च परे इति सूत्रार्थः । 'राडिति पदान्तोपलक्षणार्थं चर्त्वमविवक्षितम्' इत्याहुः । अनेनैवाभिप्रायेण पदराजीति राट्छब्दः पदशब्देन विशेषित इति ध्येयम् । अत्र अस्मिन् दीर्घविधौ विकल्पं विभाषां न तनुषे । तस्य नित्यतया विधानादिति भावः । अत्रैतिहासिके भगवद्वृत्तान्ते शब्दशास्त्रीयव्यवहारारोप इति पूर्वस्मादुदाहरणगणाद्विशेषः ॥

यथा वा—

**गहनायमानमप्यहिगिरिनाथ हरे समस्तमपि दितिजम् । अस्वपदविग्रहं त्वं पुरा विरचयन् सुधां च साधयसे ॥ ७५८ ॥**

हे अहिगिरिनाथ! हरे! गहनायमानं पापं चिकीर्षन्तमपि देवविषये द्रोहं चिकीर्षन्तमपीत्यर्थः । 'न परः पापमादत्ते परेषां पापकर्मणाम्' इत्यादौ पापशब्दो द्रोहार्थको दृष्टः । 'सत्रकक्षकष्ट-

कृच्छ्रगहनेभ्यः कण्वाचिकीर्षायामिति वक्तव्यम्' इत्यनेन वृत्तिविषये पापार्थकाद्द्वितीयान्ताद्गहनशब्दाच्चिकीर्षायां क्यङ्। पापं चिकीर्षतीत्यस्वपदविग्रह इत्याहुः। समस्तं सर्वमपि दितिजं दैत्यं अस्वपदाविग्रहं अस्वपन्तः अस्वप्ना देवाः तैः तेषु वा अविग्रहं त्यक्तकलहं 'कलहविग्रहौ' इत्यमरः। रचयन् सुरासुराणां सिन्धुमन्थनविषये सन्धिं विदधान इति भावः। सुधां अमृतं च पुरा साधयसे कूर्मावतारे साधितवान् 'पुरि लुङ्चास्मे' इत्यनेन पुराशब्दयोगे भूतानद्यतने वैकल्पिको लट्। अत्र श्रीभागवतीयं कूर्मावतारचरितमनुसन्धेयम् ॥

अन्यत्र गहनायमानं गहनायमानशब्दं समस्तं समासं प्राप्तं दितिजशब्दं च अस्वपदविग्रहं स्वपदरहितवृत्त्यर्थाविबोधकवाक्यमित्यर्थः। रचयन् गहनायमानशब्दस्य प्रागुपदर्शितरीत्या अस्वपदविग्रहः। दितिजशब्दस्य तु दित्यां जाता इति। 'सप्तम्यां जनेर्डः' इति डप्रत्ययः। अस्योपपदसमासत्वान्नित्यसमासत्वेनास्वपदविग्रह इति विभावनीयम्। सुधां च सुधाशब्दं च अस्वपदाविग्रहं रचयन्निति संबध्यते। साधितवान् निष्पादितवान्। सुष्ठु धीयत इति सुधा। सुपूर्वकात् 'धेट् पाने' इत्यस्माद्धातोः 'आतश्चोपसर्गे' इति कर्मण्यङ्। 'आतश्चोपसर्गे' इति कप्रत्यय उचित इत्यमरसुधायाम्। अयमपि प्रागुक्तरीत्या नित्यसमासत्वादस्वपदविग्रह एव। अत्र प्रस्तुते पौराणिकव्यवहारे अप्रस्तुतशब्दशास्त्रीयव्यवहारारोप इति प्राचीनोदाहरणेभ्यो वैलक्षण्यमिति ध्येयम् ॥

यथावा—

भूस्त्वत्सात्कृतिभाग्यत उपेन्द्रभावे गुणादगा-

द्रव्यत्वम् । तत्कृत्यान्तनिपातोऽयुक्तः क्ष्मादानकर्तरि बलिध्वंसिन् ॥ ७५१ ॥

हे बलिध्वंसिन्! इदं च वामनावतारासाधारणचरितमत्र विवक्षितमिति द्योतयितुम् । उपेन्द्रभावे वामनत्वे यतः यस्मिन् यज्ञियदानकृत्ये । सार्वविभक्तिकस्तसिः । त्वत्सात्कृतिभाक् त्वत्सात्कृतिः देयस्य वस्तुनः त्वदधीनीकरणं, तां भजतीति तथोक्ता 'विभाषा साति कार्त्स्न्ये' इत्यतस्सातीत्यस्मिन्ननुवर्तमाने 'देये त्रा च' इत्यनेन वैकल्पिकस्सातिप्रत्ययः कृञो योगे । बलिना तुभ्यं दत्तेति भावः । भूः भूमिः गुणात् दातृप्रतिग्रहीत्रादिगुणात् । यथोक्तं देवलेन—

दाता प्रतिग्रहीता च श्रद्धा देयं च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः ॥
अपापरोगी धर्मात्मा दित्सुरव्यसनश्शुचिः ।
अनिन्द्यजीवकर्मा च षड्भिर्दाता प्रशस्यते ॥
त्रिशुक्लश्शुक्लवृत्तिश्च घृणालुस्संयतेन्द्रियः ।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥

त्रिशुक्लः त्रिभिर्मातापित्राचार्यैश्शिक्षितत्वेन शुद्धः ।

शौचं शुद्धिर्महाप्रीतिरर्थिनां दर्शने तथा ॥
सत्कृतिश्चानसूया च दाने श्रद्धेत्युदाहृता ।
आचाराबाधमक्लेशं स्वयत्नेनार्जितं धनम् ॥
स्वल्पं वा विपुलं वाऽपि देयमित्यभिधीयते ।
यद्यत्र दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः ॥
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा ।
अवस्था देशकालानां पात्रदात्रोश्च संपदा ॥

हीनं चापि भवेच्छ्रेष्ठं श्रेष्ठं वाऽप्यन्यथा भवेत् ॥

इति । भव्यत्वं शुभत्वं योग्यत्वं वा 'भव्यं शुभे च योग्ये च सत्ये च' इति मेदिनी । श्रेयस्करत्वमिति यावत् । अगात् अलभत । क्ष्मादानकर्तारि भूवितरणविधातरि बलिदानवेन्द्र इत्यर्थः । तत्कृत्यान्तनिपातः तस्य कृत्यस्य पूर्वोक्तदानकार्यस्य अन्ते अवसान एव । न तु कालान्तरे वा । निपातः अधोभुवनपातनम् । निपातोऽयुक्त इत्यत्र अयुक्त इति छेदः । अयुक्तः अनुचितः । येन यस्य यस्मिन् दानकृत्ये दत्तं वस्तु पात्रादिगुणभूम्ना 'युक्ताङ्गैस्सकलैष्षड्भिर्दानं स्याद्विपुलोदयम्' इत्युक्तरीत्या महाफलं संपद्येत, तस्यैव दानकर्तुस्तत्कार्यान्त एव प्रतिग्रहीत्रा निपातनमनुचितमिति निर्गळितोऽर्थः । अयं चार्थः—

यत्पादयोरचलधीस्सलिलं प्रदाय ।
दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ॥
अप्युत्तमां गतिमसौ लभते त्रिलोकीं ।
दाश्वानविक्लबमनाः कथमार्तिमृच्छेत् ॥

इति बलिनिग्रहावसरे भगवन्तं प्रति ब्रह्मणा लोकदृष्ट्योक्तमर्थमभिसंधाय वर्णित इति ध्येयम् ॥

पक्षे—क्ष्मादानकर्तरीत्यत्र क्ष्मादानेति उपेन्द्रभावे इत्यत्र उपेन्द्रेति च भिन्ने पदे संबुद्ध्यन्ते न तु समस्ते । आदत्ते स्वीकरोतीत्यादानः, नन्द्यादित्वात्कर्तरि ल्युः । क्ष्मायाः आदानः क्ष्मादानः, तस्य संबुद्धिः । यद्वा क्ष्मां दत्तवान् क्ष्मादान इति 'कृत्यल्युटो बहुळम्' इति बहुळग्रहणात् भूते कर्तरि ल्युडेव 'तत्कृतार्थेन गुणवचनेन' इत्यादौ 'गुणमुक्तवान् गुणवचनः' इति तत्त्वबोधिन्यादौ व्याख्यानात् । अथवा-क्ष्मा दीयते अस्मिन्निति 'करणाधिकरणयोश्च' इत्यनेन अधिकरणे ल्युडेव 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दी-

यते, 'सममब्राह्मणे दानम्' इत्यादाविव संप्रदानस्यैवाधिकरणत्व-विवक्षया सप्तमी। भूदानक्रियासंप्रदानभूतेत्यर्थः। हे उपेन्द्र! इन्द्रावरज! हे बलिध्वंसिन्! त्वत्सात्कृतिः त्वदधीनता त्वद्वाग्विधेयतेति यावत्। तां भजतीति तथोक्तः। 'तदधीनवचने च' इति सातिप्रत्ययः। भूः भूधातुरित्यर्थः। भावे भावार्थे 'तयोरेव कृत्यक्तखलर्थाः' इत्यनुशासनात्। तयोरेव भावकर्मणोरेवेत्यर्थः। यतः 'अचो यत्' इति विहिताद्यत्प्रत्ययात् यत्प्रत्ययं प्राप्येत्यर्थः। ल्यब्लोपे कर्मणि पञ्चमी। गुणात् 'सार्वधातुकार्धधातुकयोः' इत्यनेन विहितादार्धधातुकत्वलक्षणाद्गुणात्। भव्यत्वं भव्यमिति रूपं अगात् प्राप्नोत्। भूधातोरकर्मकतया भावे यति गुणे च भव्यमिति निष्पत्तेरिति भावः। कर्तरि कर्त्रर्थे तत्कृत्यान्तनिपातः तस्य भूधातोरेव कृत्यान्तनिपातः 'भव्यगेय' इत्यादिना कृत्यप्रत्ययान्तत्वेन निपातनमित्यर्थः। निपातो नाम लक्षणाभावे साधुत्वाय सूत्रकृता स्वरूपेण शब्दानामुच्चारणम्। युक्त इति छेदः। उचित इत्यर्थः। 'कृत्याः' इत्यधिकारे भूधातोः 'अचो यत्' इति कृत्यप्रत्ययास्सिद्धः। 'भव्यगेय' इत्यादिना कर्तरि स निपातित इति विवेकः। अत्रापि पूर्ववदेवारोपः॥

यथा वा—

हन्त त्वद्गिरियुदकं जातुस्वपरैकबिन्दुसंसर्गात्।
नाथोदेत्यादेशात्प्रथयति साधुं समस्तमात्मानम्॥

हे नाथ! त्वद्गिरिः वेंकटाद्रिः तस्य उदकं आ देशात् सर्वदेशमभिव्याप्य 'आङ्मर्यादावचने' इति। कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्' इत्यादिना पञ्चमी 'आङ्मर्यादाभिविध्योः' इत्यस्य महाविभाषाधिकारस्थत्वात्समासाभावः। उदेत्य आकाशगङ्गा-

कल्यादिनदीरूपेणोद्गत्य जातु कदाचित् स्वपरैकबिन्दुसंसर्गात् स्वस्य परः श्रेष्ठः एकः यो बिन्दुः शीकरः तस्य संसर्गात् संपर्कमात्रादिति यावत् । समस्तं स्वसंसर्गिणं सर्वं आत्मानं चेतनं साधुं निर्धूतपाप्मानं सन्तं प्रथयति प्रख्यापयति । वेंकटाद्रेर्निस्सृतो निर्झरस्स्वकीयैकशीकरसंस्पर्शमात्रेणाप्यखिल-चेतनजातं पावयतीति संपिण्डितोऽर्थः ॥

यद्वा—त्वद्गिर्युदकं उदेत्य आदेशात् आत्मानं जातु स्वप-रैकबिन्दुसंसर्गात् साधुं प्रथयतीति योजना । उदेत्य उदयं प्राप्य स्वामितीर्थादिनाम्ना उत्कर्षमेत्येत्यर्थः । 'उदयस्तु पुमान् पूर्वपर्व-ते च समुन्नतौ' इति मेदिनी । अन्यत्सर्वमुक्तार्थकमेव । अ-न्यत्र त्वद्गिरि त्वद्वाचि स्थितं त्वयोच्चारितमिति यावत् । उदकं उदकपदं जातु समासविवक्षायामिति यावत् । स्वपरैकबिन्दु-संसर्गात् स्वस्मात् उदकपदात् स्वस्मात् परः परत्र विद्य-मानः एकः केवलः पदान्तराव्यवहित इति यावत् । यो बि-न्दुः बिन्दुशब्दः तस्य संसर्गात् संबन्धात् । उदेत्यादेशात् उद इत्याकारकमादेशं प्राप्येत्यर्थः । ल्यब्लोपे कर्मणि पञ्चमी ॥

यद्वा—जातु इत्येतदत्र संबध्यते । जातु उदेत्याकारकमादेशं प्राप्येत्यर्थः । अनेनायमुदादेशः अनन्तरोदाहरिष्यमाणसूत्रविहितो वैकल्पिक इत्युक्तं भवति । समस्तं समासं प्राप्तं आत्मानं स्वं साधुं प्रथयति । उदकशब्दः पदान्तराव्यवहितबिन्दुशब्देन समस्त-स्तस्मिन्नुत्तरपदे 'मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च' इत्यनेन उदादेशं प्राप्तस्स्वस्य साधुतां प्रकाशयतीति प-रिनिष्पन्नोऽर्थः । अत्रापि पौराणिके व्यवहारे पूर्ववदारोपः । प्र-सिद्ध्यति हि वेंकटाद्रिजन्मनां सरितां तीर्थानां च महिमा । यथाहि स्कान्दे वेंकटगिरिमाहात्म्ये—

तस्मिन्वेंकटशैलेन्द्रे सुरासुरनमस्कृते ।
वियद्गङ्गेति नाम्ना वै तीर्थमस्ति महत्तरम् ॥

इति । तत्रैवान्यत्र

वृषभाचलसंभूता तीर्थराजिविराजिता ।
नदी ामुत्तमा कल्या कलुषौघविनाशिनी ॥

इति । वामनपुराणे च—

तीर्थान्येतानि संभूय वर्तन्ते पर्वतोत्तमे ।
नद्यस्समस्ताः पापघ्नयस्तासां संख्या न विद्यते ॥

इति च ।

स्वामितीर्थं महापुण्यं सर्वपापप्रणाशनम् ।
यस्य तीरे जगन्नाथो रमते रमया सह ॥
विश्रुतं त्रिषु लोकेषु विशेषेण नृपात्मज ॥

इति ॥

स्वामित्वात्सर्वतीर्थानां स्वामितीर्थमितीरितम् ॥

इत्यादि चेत्यलं दूरधावनेन ॥

यथा वा —

**तद्धितकृदन्तमच्युत तव नाम यदस्ति ननु समस्तमपि । प्रातिपदिकं हि तदिदं प्रभाति सत्सुप्रयोज्यमितरन्न ॥ ७६१ ॥**

ननु अच्युत! तत् सकलपुराणादिप्रसिद्धं हितकृदन्तं हितकृत् श्रेयस्कारि अन्तः पर्यवसानं यस्य तत् अन्ततश्श्रेयःप्रदमित्यर्थः । यद्वा—हितकृत् अन्तः स्वरूपं यस्य तत् स्वभावत एव श्रेयस्करमित्यर्थः । 'अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे' इति रत्नमाला । अत्र ।

यथाकथंचिद्गोविन्दे कीर्तिते वा श्रुतेऽपि वा ।
पापिनोऽपि विशुद्धास्स्युश्शुद्धा मोक्षमवाप्नुयुः ॥
सकृत्स्मृतोऽपि गोविन्दो नृणां वर्षशतैश्चितम् ।
पापराशिं दहत्याशु तूलराशिमिवानलः ॥
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ।
सकृदुच्चारितं येन हरिरित्यक्षरद्वयम् ॥
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यस्सिंहत्रस्तैर्मृगैरिव ॥
हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हुताशनः ॥

इत्यादिप्रमाणसहस्रमनुन्धेयम् । समस्तं निखिलमपि तव नाम अभिधानं यदस्ति, तदिदं तदेतत्तव नाम । पदेपदे प्रतिपदं, यथार्थेऽव्ययीभावः । प्रतिपदं भवं प्रातिपदिकं, अध्यात्मादेराकृतिगणत्वाद्भवार्थे ठञ् । पौनःपुनिकं यथा स्यात्तथा । सत्सु प्रयोज्यं सद्भिः ब्रह्मविद्भिः सुष्ठु प्रयोक्तव्यं संकीर्तनीयमित्यर्थः । यद्वा—'तन्नामकरणं चेति दास्यमेतच्चतुष्टयम्' इत्युक्तरीत्या दास्यसूचकत्वेन पुत्रशिष्यादौ सुष्ठु न्यसनीयमित्यर्थः । प्रभाति प्रकाशते । अथवा प्रातिपदिकमिति नाम्न एव विशेषणं प्रातिपदिकं तदिदं सत्सु प्रयोज्यमिति योजना । प्रतिपत् ज्ञानं 'चित्संवित्प्रतिपज्ज्ञप्तिचेतना' इत्यमरः । प्रतिपत् ज्ञानं प्रयोजनमस्य प्रातिपदिकं 'प्रयोजनम्' इत्यनेन प्राग्वहतीयष्ठक् । ज्ञानफलकमित्यर्थः । ज्ञानं चात्र—

संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाऽप्यधिगम्यते वा तज्ज्ञानम्........ ॥

इत्युक्तं निश्श्रेयसोपायभूतमुपासनात्मकमिति वेद्यम् । प्रतिपच्छब्दस्य प्रतिपूर्वकपद्धातुनिष्पन्नतया दकारान्तत्वेन नात्र 'इसुसुक्तान्तात्कः' इति तान्तलक्षणकादेश इति ध्येयम् । इतरत् भगवदितरनामधेयं तु न । सत्सु प्रयोज्यं न भवति । तेषामनन्यशेषत्वादिति भावः । यथोच्यते भरद्वाजसंहितायां—

> तामसान् राजसांश्चैव व्यपदेशान्विवर्जयेत् ।
> ध्रुवं व्यपैति भक्तोऽपि व्यपदेशैरसात्त्विकैः ॥

व्यपदेशैः नामभिः ।

> सात्त्विकं नाम शुद्धानामशुद्धानां तु राजसम् ॥
> बाह्यादितन्त्रसिद्धानां दैवतानां तु तामसम् ॥

इति । शुद्धानां अनन्ययाजिनाम् । अशुद्धानामन्ययाजिनामित्यर्थः । यद्वा पूर्वार्धेऽपि समस्तमपि तव नाम यदस्ति तत् हितकृदन्तमिति योजना । अर्थस्तूक्त एव । हितकृदन्तमित्येतत् विधेयमस्मिन्पक्षे इति विशेषः ।

अन्यत्र—तद्धितकृदन्तं तद्धितान्तं कृदन्तं च यत् शब्दरूपम् । समस्तमपि समासरूपमपि यत् । कर्मणि भावे वा क्तः । नाम नामत्वेन संकेतितं तद्धि तदेव 'हि हेतावधारणे' इत्यमरः । प्रातिपदिकं प्रातिपदिकसंज्ञकम् । नामप्रातिपदिकशब्दयोरेकार्थत्वात् । 'कृत्तद्धितसमासाश्च' इति नाम्नां प्रातिपदिकसंज्ञाविधानात् । इदं पूर्वोक्तं प्रातिपदिकं सुप्प्रयोज्यं सुप्प्रत्याहारघटकविभक्तिभिः प्रयोज्यं प्रयोगार्हं सुब्वैशिष्ट्येनैव हि तेषां प्रयोगो लोके दृश्यते । सत् साधु 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः । प्रभाति । इतरत् असुप्प्रयोज्यं सुबविशिष्टमित्यर्थः । न साधु न प्रभाति 'न केवला प्रकृतिः प्रयोक्तव्या'

इति भाषणादिति भावः। अत्रापि पुराणप्रसिद्धे प्रस्तुतव्यवहारे अप्रस्तुतशब्दशास्त्रीयव्यवहारारोपः ॥

यथावा—

**परमं पदमध्यवसत्सरमं यद्ब्रह्म तत्त्वमसि भगवन् । इह फणिशिखरिणि लग्नस्तद्भागत्यागलक्षणाश्रयणात् ॥ ७६२ ॥**

हे भगवन्! श्रीनिवास! यद्ब्रह्म परमं पदं 'तद्विष्णोः' इत्यादिश्रुतिप्रथितं दिव्यं स्थानं सरमं सश्रीकं सत् अध्यवसत् भक्तानुग्रहार्थपरिगृहीतदिव्यमङ्गळविग्रहविशिष्टतया अध्यतिष्ठत्। इह अस्मिन् भूलोके फणिशिखरिणि लग्नः त्वं तद्ब्रह्म असीति योजना। अर्थस्तु स्फुट एव।

श्रीनिवासोऽपि शेषाद्रौ ततस्स्वामिसरस्तटे।

इत्युपक्रम्य,

पुराणपुरुषो धाता पुरुषस्तमसः परः।
वैकुण्ठं पूर्ववसतिं त्यक्त्वेदानीं हि तिष्ठति ॥

इति पाद्मवेंकटाद्रिमाहात्म्योक्तिः, 'मायावी परमानन्दम्' इत्याद्युक्तिश्चेहानुसंहिता । अत एव तद्भा तस्य परमपदस्य भा। आदन्तोऽयं शब्दः।

ब्रह्मणस्सदनात्तस्य परं स्थानं प्रकाशते।
देवा हि यत्र पश्यन्ति दिव्यं तेजोमयं पदम् ॥
अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः।
स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः ॥

इति महाभारताद्युक्ता दिव्या दीप्तिः । आगत्य परमपदाद्भुवमेत्य । अगलक्षणाश्रयणात् अगलक्षणं उक्तफणिगिरिरूपं यत्

आश्रयणं आधारः तं अतति सततं गच्छतीत्यगलक्षणाश्रयणात् 'अत सातत्यगमने' अस्मात् क्विप्। भवति। परस्मिन् ब्रह्मणि परमव्योम्नः फणिगिरावबतीर्णे परमव्योमादिव्यदीप्तिरपि फणिगिरिमेव सततमाश्रितेत्यर्थः।

पक्षे—तत् त्वमिति पदद्वयं भागत्यागलक्षणायाः जहदजहल्लक्षणायाः आश्रयणात् अर्थबोधकं भवतीति भावः । परस्य ब्रह्मणो दिव्यमङ्गळविग्रहविशिष्टस्य यद्देशकालवैशिष्ट्यं पूर्वमासीत् तद्देशकालवैशिष्ट्यमधुना नास्तीति तत्त्वमित्यत्र तत्तांशे स्वार्थत्यागः त्वत्तांशे तु तदत्याग इतीयं भवति जहदजहल्लक्षणेति ध्येयम् ॥

अंशभेदमुपादाय जहाति न जहाति च।
शब्दस्स्वार्थं यदि जहदजहत्स्वार्थलक्षणा ॥

इति तल्लक्षणम्। अत्र प्रस्तुते पौराणिकव्यवहारे अप्रस्तुतस्यालंकारशास्त्रीयव्यवहारस्यारोपः।

यद्वा—अत्र तत्त्वमसीति पदैः 'तत्त्वमसि श्वेतकेतो' इति श्रुतिवाक्यप्रत्यभिज्ञापनात् तत्र जीवब्रह्माभेदमुपपादयतामद्वैतिनां व्यवहारोऽप्रस्तुतः प्रतीयमानः प्रस्तुते पौराणिकव्यवहारे समारोप्यत इति। ते हि 'तत्त्वमसि' इत्यत्र तत्त्वंपदार्थयोस्सर्वज्ञत्वकिंचिदज्ञत्वरूपविरुद्धांशपरित्यागेन अविरुद्धचिन्मात्रोपादानेन चोभयोपलक्षितमेकमखण्डं वस्तु भागत्यागलक्षणया प्रतिपाद्यत इति वर्णयन्ति। अनयोरियानेव भेदः । तथाहि—आलंकारिकास्तावत् 'सोऽयं देवदत्तः' इत्यादौ तत्तांशस्येदानीमसंभवात्तस्यैव हानं इदंतांशस्य त्विदानीं संभवादहानमिति जहदजहत्स्वार्थां लक्षणामाचक्षते। अद्वैतब्रह्मवादिनस्तु—दृष्टान्तदार्ष्टान्तिकयोरैकरूप्याय 'सोऽयं देवदत्तः' इत्यत्रापि तत्तेदंतांशयोः परस्परविरुद्धयोरुभयोः परित्यागेन अविरुद्धस्वरूपमात्रापरित्यागेन द्वयोपलक्षितं

स्वरूपमात्रं लक्ष्यत इति जहदजहत्स्वार्थां व्युत्पाद्य 'तत्त्वमसि' इत्यादिमहावाक्येऽपि तत्त्वंपदार्थगतविरुद्धांशत्यागेन चिन्मात्रोपादानेन चोभयोपलक्षितमखण्डमेकमेव वस्तूक्तलक्षणया प्रतिपाद्यत इति। यदाहुः—

स्वार्थैकांशत्यागादंशान्तरमेव लक्ष्यते यत्र।
सा जहदजहत्स्वार्था तत्त्वमसीत्यादिविषयदृश्येयम्॥

इतीत्यलमतिदूरोत्सर्पणेन॥

यथावा—

**सुविदितशक्तिं स्वामिन् कृतलक्षणमञ्जनाचलोल्लासम्। साहित्यमेत्यभान्तं श्रिया श्रये त्वामनन्त सुश्लोकम्॥ ७६३॥**

अनन्तः देशकालवस्तुभिरपरिच्छिन्नः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः। तस्य संबुद्धिः हे अनन्त! हे स्वामिन्! सर्वशेषिन्! सुविदिता सकलश्रुतिसुप्रसिद्धा शक्तिः यस्य तम्। शक्तिर्नाम स्वेतरसर्वसामर्थ्यनिर्वाहकः 'जगत्प्रकृतिभावो मे यस्सा शक्तिरितीर्यते' इत्यादिषूक्तस्सर्वोपादानत्वात्मको गुणविशेषः। यदन्यैरशक्यत्वादघटितामेव भवति तद्घटनसामर्थ्यरूपो वा। अत्र 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतिरप्यनुसन्धेया। कृतलक्षणं 'समस्तकल्याणगुणात्मकोऽसौ' इत्याद्युक्तरीत्या कल्याणगुणैः प्रतीतं 'गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ' इत्यमरः। अञ्जनाचले उल्लासो हर्षः प्रकाशो वा यस्य तम्। अञ्जनाचलेन उल्लास्यत इति वा तथोक्तम्। श्रिया लक्ष्म्या साहित्यं वैशिष्ट्यं एत्य प्राप्य भान्तं श्रीवैशिष्ट्यादेव हि तव भानमिति भावः। अत्र 'स्वामिपुष्करिणीतीरे रमया सह मोदते' इत्येत-

दप्यनुसन्धेयम् । अत एव सुश्लोकं शोभनकीर्तिं 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वेन श्रुतस्यैव हि तव 'तस्य नाम महद्यशः' इति यशस्विता श्रूयते 'स आपः प्रदुघे उभे इमे' इति 'जगत्कारणत्वेन प्रस्तुतस्य निखिलजगज्जननादिलीलत्वसर्वरक्षकत्वकीर्तिस्तस्यैव नान्यस्येत्यर्थः । नामेति प्रसिद्धौ' इत्युपनिषद्भाष्यम् । त्वां श्रये । नारायणीये प्रथमानुवाके 'अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ' इति पाठात् तस्मिंश्चानुवाके 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रवणात् लक्ष्मीपतेरेव 'तस्य नाम' इति तदनुवाकोक्तं यशस्वित्वं नान्यस्येत्यवधेयम् ।

पक्षे—शक्तिः अभिधापरपर्यायः साक्षात्संकेतविषयविषयकधीहेतुर्मुख्यश्शब्दनिष्ठो व्यापारः 'व्यापारश्शक्यधीहेतुर्मुख्यश्शब्दगतोऽभिधा' इति लक्षणात् । सा सुष्ठु विदिता येन तम् । कृता विचारिता लक्षणा येन तं तथोक्तम् । लक्षणा नाम -

तात्पर्यविषयीभूतार्थान्वयानुपपत्तितः ।
शक्तिभिन्नार्थधीहेतुर्व्यापारो लक्षणोच्यते ॥

इत्युक्तलक्षणश्शब्दव्यापारः । कृञो व्यापारसामान्यार्थकत्वेन कृतेत्यस्य विचारणार्थकत्वमवसेयम् । अत एव कृतहस्तः कृतधीरित्यादौ कृञश्शिक्षाद्यर्थकत्वं दृश्यते । अञ्जनं 'वाच्यलक्ष्यविभिन्नार्थधीकृद्व्यापृतिरञ्जनम्' इत्युक्तलक्षणो व्यञ्जनापरपर्यायश्शब्दव्यापारविशेषः । तस्मिन् अचलः स्थिरः उल्लासः हर्षः यस्य तम् । एतैर्विशेषणैः अभिधालक्षणाव्यञ्जनारूपशब्दव्यापारत्रितयकूलंकषप्रतिभोन्मेषतया वाचकलक्षकव्यञ्जकपदप्रयोगनिरङ्कुशकौशलं द्योत्यते । साहित्यं सहितानि सर्वशास्त्राण्येव साहित्यम् । स्वार्थे ष्यञ् । यथोक्तं भावप्रकाशे—

तर्कव्याकृतिमीमांसाज्योतिश्शास्त्राद्यपेक्षया ।
साहित्यात्साहिती प्रोक्ता स्वार्थे ष्यञ् कीर्त्यते बुधैः ॥ इति,
समष्टिस्सर्वशास्त्राणां साहित्यमिति कथ्यते ।

इत्येतदप्युक्तार्थेऽनुकूलम् । एत्य ज्ञात्वेत्यर्थः । श्रिया उपदर्शितोपकरणज्ञानानुरूपकाव्यग्रथनौपायिकवाग्विभवेनेत्यर्थः । 'श्रीर्लक्ष्म्यां सरळद्रुमे । वेषोपकरणे वेषरचनायां मतौ गिरि । शोभात्रिवर्गसंपत्त्योः' इति हेमचन्द्रः । अत एव अनन्ताः अपरिच्छिन्नाः सुश्लोकाः अदोषसगुणसालंकारशब्दार्थरूपकाव्यलक्षणपरिपूर्णानि पद्यानि यस्य वश्यवाक्त्वेन भूयिष्ठसत्काव्यनिर्माणप्रवीणमिति भावः । अत्र वेदान्तपुराणप्रतिपादितेऽर्थे पूर्ववदारोपः ॥

यथावा—

**दारिद्र्यदवं शमयत्याख्यैकाऽब्जाक्षभागधेयस्य ।**
**सारोपासाध्यवसितिरिह गौणी साधुलक्षणा शुद्धा ॥**

इह लोके सारा उपासायाः उपासनायाः अध्यवसितिः निश्चयः यस्यास्सा तथोक्ता यद्विषयक उपासनाध्यवसायः अवश्यंभाविफलतया श्रेयान् सा सारोपासाध्यवसितिरित्यर्थः । आख्याया उपासनं च 'ओं नमो नारायणायेति मन्त्रोपासकः' इत्यादाविव जप एवेति ध्येयम् । गौणी 'यानि नामानि गौणानि' इत्युक्तरीत्या गुणत आगता—

शृणाति निखिलान्दोषान् श्रीणाति च गुणैर्जगत् ।
श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥
श्रयन्तीं श्रीयमाणां च शृण्वतीं शृणतीमपि ॥

इत्यादिनिरुक्तोरीति भावः । अत एव साधु लक्षणं प्रवृत्तिनिमित्तं यस्यास्सा तथोक्ता । यद्वा—लक्ष्यन्त इति लक्षणाः 'क्र-

त्यल्युटो बहुलम्' इति बहुलग्रहणात्कर्मणि ल्युट्। साधवो लक्षणाः यस्यास्सा यद्वाख्याधारणेन साधवस्सज्जना इति लक्ष्यन्ते ज्ञाप्यन्ते सा साधुलक्षणेत्यर्थः। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति मेदिनी। शुद्धा पावनी 'शुद्धं स्यात्रिषु केवले। निर्दोषे च पवित्रे च' इति मेदिनी। अब्जाक्षस्य श्रीनिवासस्य भागधेयं तस्य भागधेयत्वेनाध्यवसितायाश्श्रिय इत्यर्थः। एका आख्या श्रीरित्यादिकमेकमेवाभिधेयं दारिद्र्यमेव दवं वनहुताशनं शमयति। 'सर्वदारिद्र्यनाशिनी' इति तन्नामसु पाठादिति भावः।

पक्षे—इह दारिद्र्यदवमिति पदे सारोपा गौणी लक्षणा अब्जाक्षभागधेयस्येत्यत्र तु साध्यवसितिः शुद्धा लक्षणेति पाठक्रमेण यथासंख्यमन्वयः। साधु साध्वीत्यर्थः। सामान्ये नपुंसकं 'शक्यमरविन्दसुरभिः' इत्यादिवत्। यद्वा—साधुत्वेन लक्षणैव विशेष्यते। अथवा भवतीत्यध्याहृतक्रियाविशेषणमिति बोध्यम्। अयं भावः दारिद्र्यदवमित्यत्र विषयविषयिवाचकयोर्दारिद्र्यदवपदयोस्सामानाधिकरण्यनिर्देशात्सारोपा लक्षणा। सा च दवशब्दस्य तापकारित्वादिगुणसादृश्येन वृत्तेर्गौणी॥

> सारोपा द्विविधा सेयं गौणी शुद्धेति भेदतः।
> सादृश्यात्मकसंबन्धरूपा गौणीत्युदीर्यते॥
> शुद्धा तदन्यसंबन्धरूपा सा तु निगद्यते।

इति लक्षणात्। अब्जाक्षभागधेयस्येत्यत्र तु आरोपविषयं श्रियं निगीर्य तस्य विषयिणो भागधेयस्यैव निबन्धनात्साध्यवसाना लक्षणा। भागधेयश्रियोः कार्यकारणभावसंबन्धं पुरस्कृत्य विषयिपदमात्रोपादानेन शुद्धेति विवेकः। तथाच तल्लक्षणम्—

निगीर्य विषयं यत्र विषय्येव निबध्यते ।
तत्र साध्यवसाना स्याद्गौणी शुद्धेति भेदतः ॥

इति । अध्यवसायो नाम एकांशे उत्कटं ज्ञानं, ज्ञानस्योत्कटत्वं च तत्तत्कोटिसहचरितानेकधर्मवद्धर्मिविषयत्वादिकम् । सादृश्यसंबन्धपुरस्कारेण प्रवृत्ता गौणी । तदन्यसंबन्धपुरस्कारेण प्रवृत्ता शुद्धेति सारोपलक्षणायामिवास्यामपि भेदो द्रष्टव्यः । अत्रापि पौराणिके श्रीलक्ष्मीनामवैभवे व्यवहारे प्रस्तुते अलंकरशास्त्रीयव्यवहारस्याप्रस्तुतस्यारोपः ॥

यथा वा—

**तामेव यान्ति वृत्तिं धाम्नि परे गौणलक्षणाभिज्ञाः । काव्योचिता न चान्यां गौणीं भक्तः प्रभाकराद्येषु ॥ ७६५ ॥**

काव्या बुद्धिः उचिता समञ्जसा येषां ते काव्योचिताः 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इत्युक्तप्रकारसूक्ष्मधिय इति यावत् । 'काव्या स्यात्पूतनाधियोः' इति विश्वमेदिनीहेमचन्द्राः । 'उचितं स्यान्मिते योग्ये ज्ञातेऽभ्यस्ते समञ्जसे' इति रत्नमाला । परे धाम्नि औज्ज्वल्यरामणीयकतमोहारित्वादिगुणसादृश्यवत्तया तेजस्त्वेनाध्यवसिते भगवति श्रीनिवासे भक्ताः भक्तिमन्तः पुमांसः अगौणेति छेदः । अगौणं मुख्यं यत् लक्षणं शङ्खचक्रलक्ष्म तेन अभिज्ञाः भागवतत्वेन ज्ञायमानास्सन्तः अभिपूर्वकात् ज्ञाधातोः 'आतश्चोपसर्गे' इति कर्मण्यङ् । उपज्ञादिवत् । स्वभावतोऽयं स्त्रीलिङ्गः । पञ्चायुधाङ्कनादपि शङ्खचक्राभ्यामेवाङ्कनस्य मुख्यत्वादगौणलक्षणाभिज्ञा इत्युक्तम् । तथाच श्रुतिः—

प्र ते विष्णो अब्जचक्रे पवित्रे
जन्माम्भोधिं तर्तवे चर्षणीन्द्राः ।
मूले बाह्वोर्दधते ये पुराणाः
लिङ्गान्यन्ये तावकान्यर्पयन्ति ॥

इति । भगवच्छास्त्रे भरद्वाजश्च—

अग्नीषोमौ हि चक्राब्जौ सर्वं एव तदात्मकाः ।
ऊनो वा मानयन्नेकं पूर्णो हि फलमश्नुते ॥
शङ्खचक्रप्रधानं हि सर्वमन्यद्गदादिकम् ।
अङ्कितश्शङ्खचक्राभ्यां सर्वैरङ्कित एव वा ॥

इति । यद्वा—

नारायणैकनिष्ठा ये सात्त्विकांस्तान्निबोधत ॥

इत्युपक्रम्य—

मुनयस्सत्त्वनिष्ठानां लक्षणानि निबोधत ।
विष्णोर्दास्यैकफलता तदेकोपायतास्थितिः ॥
तदाज्ञाकरणे प्रीतिस्तत्कर्मगुणकीर्तनम् ।
तच्चिह्नाङ्कितदेहत्वं तदीयाराधने रतिः ॥
तदन्यस्पर्शवैराग्यमिन्द्रियार्थेष्वलोलता ।
आचार्याधीनवृत्तित्वमाचार्यार्थात्मवृत्तिता ॥
क्रोधलोभमदालस्यमानमोहविहीनता ।
सत्यशौचदयाधैर्यक्षमासंतोषयुक्तता ॥
इत्येतैर्लक्षणैर्युक्ता वैष्णवा वीतकल्मषाः ।
सभाज्या दर्शनेनैव नावज्ञेयाः कदाचन ॥

इति भरद्वाजपरिशिष्टोक्ता मुख्यभागवतलक्षणज्ञा इत्यर्थः । अभि-पूर्वकाज्ज्ञानातेः कर्तरि 'आतश्चोपसर्गे' इति कप्रत्ययः । अत एव तामेव तदनुगुणां मुख्यामेव वृत्तिं अनन्यरातित्वादिवक्ष्यमाणल-

क्षणां वृत्तिं यान्ति श्रयन्ति । यथा हि भगवच्छास्त्रीयभरद्वाजसंहितायाम्—

> यथा प्रपत्तिर्विहिता भगवच्चरणाब्जयोः ।
> तथैव तत्र वृत्तिश्च कार्या गुरुनिदेशतः ॥
> वृत्तिश्च विहिताचारः प्रतिषिद्धविवर्जनम् ।
> दृष्टिर्भक्तिस्तथा लक्ष्म सतां सेवेति षड्विधा ॥

इति वृत्तेष्षाड्विध्यं प्रदर्श्य—

> अनन्यगतिरत्यन्तं विहितानि समाचरन् ।
> वर्जयन् प्रतिषिद्धानि वेदवेदान्ततत्त्ववित् ॥
> अर्चादिष्वर्चयन्विष्णुमाङ्कितो हरिलाञ्छनैः ।
> सेवेत यद्गुरून्भक्त्या सेयं वृत्तिः परा मता ॥

इति पूर्वोक्तश्लोकार्थो विवृतः । अत्र परेति विशेषणेनास्या एव वृत्तेर्मुख्यत्वमुक्तम् । तामेवेत्यवधारणेन व्यञ्जितमितरव्यवच्छेदं कण्ठतो दर्शयति—न चान्यामित्यादिना । प्रभाकराद्येषु भास्करादिषु भक्तास्सन्तः अन्यां गौणीं वृत्तिं च न यान्ति नाश्रयन्ते । चशब्दस्त्वर्थकः ।

> अथ वृत्तिमिमां शश्वत्कुर्वाणो विगतव्यथः ।
> विसृज्य देहं प्राप्नोति तद्विष्णोः परमं पदम् ॥

इत्यविलम्बितनिश्श्रेयसनिदानतया भरद्वाजसंहितोक्तभागवतवृत्तिमपेक्ष्य—

> वर्णाश्रमाचारपरस्सप्त जन्मानि यो द्विजः ।
> एकान्तसूर्यभक्तस्स्यात्स विप्रस्सप्तजन्मसु ॥
> ततस्तत्पुण्यमाहात्म्याद्रुद्रभक्तो भविष्यति ।
> तथैव सप्तजन्मानि शिवभक्तिपरायणः ।
> महता तेन पुण्येन वैष्णवत्वं लभेत सः ॥

विष्णुभक्तिपरस्तद्वत्सप्तजन्मानि मानवः ।
एकान्तभगवद्याजी विप्रो भागवतान्वये ॥
ततस्स लभते मुक्तिं देवैरत्यन्तदुर्लभाम् ।

इति वाराहे,

त्रिभिः प्रजापतेर्भक्तः पञ्चभिश्शंकरस्य तु ।
विंशत्याऽग्नीन्द्रसूर्यादेर्जन्मभिर्वैष्णवो भवेत् ॥

इत्यादिभरद्वाजसंहितायां च बहुजन्मव्यवधानेन मुक्तिसाधनतया उक्तेषु भास्करादिष्वनन्यरतित्वादिकां जघन्यां वृत्तिं नाद्रियन्त इति भावः ॥

पक्षे—काव्योचिताः अभ्यस्तकाव्याः आलंकारिका इति यावत् । गौणी च सा लक्षणा च तस्याः अभिज्ञाः 'अग्निर्माणवकः, अग्निरधीते' इत्यादौ ।

साहश्यात्मकसंबन्धरूपा गौणीत्युदीर्यते ।

इत्युक्तलक्षणां गौणीं लक्षणां जानानाः, अत एव परे धाम्नि धाम्नीत्याकारके पदेऽपि तामेव वृत्तिं उक्तोदाहरण इव गौण लक्षणाख्यामेव शब्दव्यापृतिं यान्ति मन्यन्ते । यदाहुः—

अभिधेयाविनाभूता प्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥

इति । अविनाभावश्चात्र संबन्धमात्रं न तु नान्तरीयकत्वं तथा सति मञ्चमञ्चस्थयोर्दैशिकस्य कालिकस्य वाऽविनाभावस्याभावात् 'मञ्चाः क्रोशन्ति' इत्यत्र लक्षणाभावप्रसङ्गात् । वृत्तेः लक्षणाख्यव्यापृतेः गौणता गुणप्रयुक्तता लक्ष्यमाणगुणैर्योगात् इष्टा भवतीति तदर्थः । तामेवेत्यवधारणेन व्यवच्छेद्यं दर्शयति—न चान्यामित्यादिना । प्रभाकरस्तान्त्रिकाग्रणीः स आ-

दिर्येषां ते भट्टादयः । तेषु भक्तास्तन्मतानुयायिनस्सन्तः अन्यां लक्षणापेक्षया विलक्षणां गौणीं गुणत आगतां वृत्तिं संबन्धव्यापृतिं न यान्ति न मन्यन्त इत्यर्थः । ते हि 'अग्निर्माणवकः' इत्यादौ समानाधिकरणपदप्रयोगादेव पैङ्गल्यादिगुणाविशिष्टे अग्निपदस्य तात्पर्यम् । 'गङ्गायां घोषः' इत्यादौ लक्षणायां तु तीरपदप्रयोगेण विनैव तत्संबन्धिनि तीरे गङ्गापदस्य तात्पर्यमिति पदप्रयोगतदप्रयोगप्रयुक्तविशिष्टाविशिष्टतात्पर्याभ्यां गौणीलक्षणयोर्भेदः । यत्रापि पदप्रयोगो नास्ति 'अग्निरधीते' इत्यादौ तत्रापि सादृश्यविशिष्ट एव पदतात्पर्यम् । पदप्रयोगसहिते स्थले तथैव तात्पर्यावधारणात् । यथा—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ काम्ये कामिनियोज्यान्वयबलादपूर्वे लिङ्गादेस्तात्पर्यमिति 'अहरहस्सन्ध्यामुपासीत' इत्यादिनित्यस्थलेऽपि तथेति वर्णयन्ति । अयं भावः—आलंकारिकास्तावत्—

> अभिधेयेन संबन्धात्सादृश्यात्समवायतः ।
> वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥

इति सादृश्यस्यापि संबन्धत्वेनाभ्युपगमात् 'अग्निर्माणवकः, अग्निरधीते' इत्यादावपि तथाविधसंबन्धस्य सामानाधिकरण्याद्यनुपपत्तेः, अभेदप्रतीतिरूपप्रयोजनस्य च लक्षणाबीजस्य जागरूकतया गौणीं वृत्तिमपि लक्षणायामेवान्तर्भावयन्ति न तु पृथग्वृत्तित्वेनाभ्युपयन्तीति । अत्रापि भगवच्छास्त्रीयव्यवहारारोपः ॥

यथावा—

पिप्रीषयैव तेऽच्युत कनकमुखर्यां मखैर्यजति

हि त्वाम् । बुधततिरेषा कथमिह न स्यात्सल्लक्षणा जहत्स्वार्था ॥ ७६६ ॥

हे अच्युत! बुधततिः विद्वत्संहतिः ते तव पिप्रीषयैव प्रीणनेच्छयैव न तु प्रयोजनान्तरापेक्षया । कनकमुखर्यां सुवर्णमुखर्याख्यायां तरङ्गिण्यां तत्तीरे वेङ्कटाद्राविति यावत् । मखैः क्रतुभिः त्वां ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।

इति सर्वयज्ञभोक्तृत्वेन च स्वेनैव गीतमिति भावः । यजति आराधयति ।

सर्वभूतान्तरात्मानमीशमाराध्यमच्युतम् ।
बुध्वा चरन्ति सुधियो धर्मांस्तत्प्रीतये परम् ॥

इति भरद्वाजपरिशिष्टोक्तप्रकारेण केवलं त्वत्प्रीणनायैव यागादिकर्माण्यनुतिष्ठतीत्यर्थः । सल्लक्षणा सतां लक्षणानि चिह्नानि तान्यस्यास्सन्तीति तथोक्ता । अर्श आदेराकृतिगणत्वान्मत्वर्थीयोऽच् । अत्र सतां सल्लक्षणानां च लक्षणं—

पत्युर्ज्ञानमयी वृत्तिर्विष्णोः प्रियमिहोच्यते ।
ये सन्ति तत्र निरतास्ते सन्त इति कीर्तिताः ॥

इति,

प्रतप्तैर्भगवद्दिव्यायुधैर्गात्रेषु लाञ्छनम् ।
सततं च हरिक्षेत्रोद्धृतमृत्स्नोर्ध्वपुण्ड्रकम् ॥

इत्युपक्रम्य,

विष्णोस्तत्संश्रयाणां वा चेतनाचेतनात्मनाम् ।
आख्यया व्यपदेशश्च लक्षणानि सतां विदुः ॥

इत्यन्तेन भरद्वाजपरिशिष्टोक्तं द्रष्टव्यम् । एषा त्वत्प्रीणनार्थमेव त्वां यजन्ती बुधततिः इह यजनकर्मणि कथमिव जहत्स्वार्था जहात् स्वार्थो यां सा तथोक्ता न स्यात् जहत्स्वार्थैव स्यादित्यर्थः ।

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा ......................... ... ॥

इति त्वद्गानानुरोधेन सर्वाणि कर्माणि केवलं त्वदाराधनरूपतया त्वत्प्रीणनानीति मत्वाऽनुतिष्ठन्त्या अस्या बुधततेरन्यदर्थाशंसा कथमपि नोदियादेवेति भावः । अनेन

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनस्समाधाय स सात्त्विकः ॥

इत्युक्तरीत्या तदनुष्ठितानां मखानां सात्त्विकत्वं द्योत्यते । अनेनैव जहत्स्वार्थेति विशेषणेन तस्याः पारमैकान्त्यं दर्शितम् । परमैकान्तिनो हि भगवद्दास्यैकरतित्वान्न तत्प्रीणनमन्तरा मनागपि स्वप्रयोजनमभिलष्यन्ति यथोच्यते भरद्वाजसंहितायाम्—

स एकान्त्यन्यविमुखो हरिं सर्वेश्वरं परम् ।
यस्समाश्रयते किंचित्फलमभ्यर्थयन्नरः ॥
न्यस्ताशेषभरश्शौरौ यस्तु दास्यैकजीवितः ।
स एष परमैकान्ती द्वावेतौ वैष्णवौ स्मृतौ ॥

इति । पक्षे—पूर्वार्धमनतिरिक्तार्थकमेव । उत्तरार्धे तु-इह कनकमुखर्यां यजतीत्यत्र जहत्स्वार्था सती च सा लक्षणा सल्लक्षणा लक्षणाख्या शब्दवृत्तिः कथं न स्यात् । 'गङ्गायां घोषः' इत्यत्रेवात्रापि स्वार्थत्यागेन लक्षणा स्यादेवेति भावः ॥

स्याज्जहल्लक्षणा यत्र स्वार्थं त्यक्त्वाऽन्यवृत्तिता ।

इति लक्षणात् । यत्र स्वार्थत्यागेन परार्थवृत्तिता तत्र जहल्ल-

क्षणेति तदर्थः। अत्र च कनकमुखर्यामित्यत्र वाच्यस्य प्रवाहस्य मखकरणकयजनान्वयायोग्यत्वात्कनकमुखरीशब्दस्स्वार्थं परित्यज्य स्वार्थसंबन्धिनि तीरे वर्तत इति जहत्स्वार्था लक्षणैषेति ध्येयम्। अत्र गीताभगवच्छास्त्रादिसिद्धे प्रस्तुतव्यवहारे अप्रस्तुत· न्यायादिशास्त्रीयव्यवहारारोपः॥

यथावा—

**परमपुरुषार्थमाप्तुं फणाधरगिरिं प्रपत्तिरध्युषिता। मध्यमवृत्तिरविजहत्स्वार्था भवतीह को नु संदिग्धाम्॥७६७॥**

मध्यमवृत्तिः मध्यमा वृत्तिः वक्ष्यमाणलक्षणा यस्यास्सा तथोक्ता प्रपत्तिः, प्रपत्तिविशिष्टाः पुरुषा इति यावत्। 'कुन्ताः प्रविशन्ति' इत्यत्र कुन्तविशिष्टाः पुरुषा इतिवत्। परमपुरुषार्थं निश्श्रेयसरूपमुत्तमपुरुषार्थं आप्तुं लब्धुं फणाधरगिरिं अध्युषिता सती अविजहत् स्वार्थः परमपुरुषार्थो यां सा तथोक्ता भवति।

उपायापायसंत्यागी मध्यमां वृत्तिमाश्रितः।
रक्षिष्यतीति निश्चित्य निक्षिप्तस्वस्वगोचरः।
बुध्येत देवदेवं तं गोप्तारं पुरुषोत्तमम्॥

इति लक्ष्मीतन्त्रोक्तमार्गेण उपायापायमध्यस्थां वृत्तिमास्थितो भगवन्तं प्रपन्नो जनः—

यत्र नारायणो देवः परमात्मा सनातनः।
तत्पुण्यं परमं ब्रह्म तत्तीर्थं तत्तपोवनम्॥
तत्र देवर्षयस्सिद्धास्सर्वे चैव तपो धनाः।

इति भारताद्युक्तरीत्या प्रपन्ननिवासार्हे वेङ्कटमहीभृति कृतवस-

तिस्स्वविवक्षितं परमपुरुषार्थं साधयतीति निर्गळितोऽर्थः । इह अस्मिन्विषये को नु संदिग्धां कः पुमान् संदेग्धु, ईदृशस्य परमपुरुषार्थाधिगमे पामरोऽपि न संशयीतेति भावः । संपूर्वात् 'दिह उपचये' इत्यस्माद्धातोः कर्तरि लोट्प्रथमपुरुषैकवचनम् । उपायापायादिस्वरूपं च तत्रैव लक्ष्मीतन्त्रे—

उपायापाययोर्मध्ये कीदृशी स्थितिरम्बिके ।
उपायापायतामेव क्रिया सर्वाऽवलम्बते ॥
स्वीकारे व्यतिरेके वा निषेधविधिशास्त्रयोः ।
दृश्यते कर्मणो व्यक्तमुपायापायरूपता ॥

इति पृच्छते शक्राय—

त्रिविधां पश्य देवेश कर्मणो गहनां गतिम् ।
निषेधविधिशास्त्रेभ्यस्तां विधां च निबोध मे ॥
अनर्थसाधकं किंचित्किंचिच्चाप्यर्थसाधकम् ।
अनर्थपरिहाराय किंचित्कर्मोपदिश्यते ॥
त्रैराश्यं कर्मणामेवं विज्ञेयं शास्त्रचक्षुषा ।
अपायोपायसंज्ञौ तु पूर्वराशी परित्यजेत् ॥
तृतीयो द्विविधो राशिरनर्थपरिहारकः ।
प्रायश्चित्तात्मकं कश्चिदुत्पन्नानर्थनाशनः ॥
तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत् ।
क्रियमाणं न कस्मैचिद्यदर्थाय प्रकल्पते ॥
अक्रियावदनर्थाय तत्तु कर्म समाचरेत् ।
एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा ॥
अस्यां स्थितो जगन्नाथं प्रपद्येत जनार्दनम् ॥

इति भगवत्या श्रीलक्ष्म्या स्वयमेवोक्तम् । विवृतं चैतद्वात्स्यवरदगुरुभिः—

एतदुक्तं भवत्यत्र हिंसास्तेयादिकं च यत् ।
अनर्थसाधनं कर्म काम्यं त्वर्थस्य साधनम् ॥
चैत्यादिकं तथा कर्म सांख्ययोगादिकं तथा ।
उपायं कर्म सांख्यादि प्रायश्चित्तादिकं तथा ॥
चान्द्रायणादिकं कर्म न कुर्याच्च कदाचन ।
भाव्यनर्थस्य यत्कर्म परिहाराय कीर्तितम् ॥
सन्ध्याऽर्चापञ्चयज्ञादि तन्मुमुक्षुभिरादृतम् ।
नैमित्तिकं चाग्रयणं सीमन्तोन्नयनादिकम् ॥
अग्न्याधानादिकं कार्यमधिकारे सति द्विजैः ।
निषिद्धकाम्योपायाख्यकर्माण्यन्यानि नाचरेत् ॥
प्रायश्चित्तं प्रपन्नस्य विशेषेण यदुच्यते ।
लक्ष्मीतन्त्रे कमलया निमित्ते तत्तदाचरेत् ॥

इत्यादिना । पक्षे—इह प्रपत्तिरिति पदे अविजहत्स्वार्था अजहत्स्वार्थाख्या मध्यमवृत्तिः अभिधा लक्षणा व्यञ्जनेति क्रमेण परिगणितासु वृत्तिषु मध्यमा लक्षणाख्या वृत्तिः शब्दव्यापृतिः भवति । प्रपत्तिरध्युषितेत्यत्र प्रपत्तिपदं स्ववाच्यायाः प्रपत्तेः फणाधरगिर्यधिकरणकनिवासनिष्पत्तये प्रपत्तिमत्पुरुषे वर्तते । अत्र प्रपत्तेरपि पुरुषसाहित्येन क्रियान्वयादजहल्लक्षणा—

स्वसिद्धये पराक्षेपे त्वजहल्लक्षणोच्यते ॥

इति लक्षणात् । यत्र स्ववाच्यस्यान्वयसिद्ध्यर्थं स्ववाच्यसंबन्धी लक्ष्यते तत्राजहल्लक्षणेति तदर्थः । अत्र भगवच्छास्त्रीयव्यवहारे शास्त्रान्तरीयव्यवहारारोपः पूर्ववदेव ॥

अत्रेदमवधेयम्—'परमं पदमध्यवसत्' इत्यादीनि पद्यानि 'सुविदितशक्ति स्वामिन्' इतिं पद्यवर्जितानि अप्रस्तुतव्यवहा

रात्मन आलंकारिकाद्यभिमततत्तत्पदगततत्तदर्थबोधौपयिकलक्षणाख्यवृत्तिविशेषस्य स्फूर्तिं तद्भावमात्रमवलम्ब्य समासोक्त्युदाहरणतां नीतानि । यदा तु प्रकृताप्रकृतधर्मिद्वयसाधारणविशेषणोपादानमूलिका अप्रकृतधर्मिव्यवहारस्फूर्तिर्हि समासोक्तिमूर्तिः सा च न प्रकृतपद्येषु सुप्रसरा । तत्त्वंपदादिरूपस्याप्रकृतधर्मिणस्तदादिपदैरेवोपादानात् । प्रकृतस्य फणिशिखरिलग्नभगवदादिरूपस्य अप्रकृतस्य तत्त्वंपदादिरूपस्य च धर्मिणोस्साधारणस्य कस्यचिदपि विशेषणस्यानुपादानाच्च । यद्यपि तद्भागत्यागलक्षणाश्रयणादिति तुरीयचरणार्थौ परमपदावधिकागमनपूर्वकफणिशिखर्याश्रयणकर्तृपरमपदाधिवासिभगवत्प्रभा भागत्यागलक्षणाश्रयणहेतुकार्थबोधकतावत्तत्त्वंपदद्वयं चेत्येतौ श्लेषतोऽभेदेनाध्यवसीयेताम्, एवमन्येष्वपि पदेषु तौ तावर्थौ । तथाऽपि नैतौ कस्यचिद्विशेषणतया प्रतीयेते, न तरां च प्रकृताप्रकृतयोरिति तत्त्वं सुसूक्ष्ममीक्ष्यते, तदा पुनश्श्लेषस्य प्रकृताप्रकृतगोचरस्यैवैतान्युदाहरणानि भविष्यन्तीति ॥

यद्वा — तद्भागत्यागलक्षणाश्रयणादित्यतः परमपदावधिकागमनपूर्वकफणिशिखर्याश्रयणकर्तृस्वकीयप्रभाकत्वेन प्रकृतभगवद्विशेषणतयाऽर्थात्प्रतीयमाने प्रकृतव्यवहारे अप्रकृतालंकारिकादिगतस्य स्वाभ्युपगतभागत्यागलक्षणाश्रयणहेतुकार्थबोधकतावत्तत्त्वंपदद्वयकत्वस्याप्रकृतव्यवहारस्य प्रतीतिरित्यभिप्रायेणेह परमं पदमिति पद्यं समासोक्त्युदाहरणतां प्रापितम् । समासोक्तिशरीरे प्रविष्टस्य विशेषणविशेष्यभावस्य शाब्दतानियमाभ्युपगमे तूक्तरीत्या श्लेषस्यैवेदमुदाहरणं भविष्यति । एवं पद्यान्तरेष्वप्यूह्यमिति ॥

यथावा —

**जगदानन्दकृतस्तव नाम्नो ग्रहणे फणाधरगि-**

# रीन्दो। पुंसोऽनघगतिकारकपूर्वस्यापि स्वयं भवेद्ग्रहणम् ॥ ७६८ ॥

हे अनघगतिकारक! दिव्यगतिदायिन्! फणाधरगिरीन्दो! जगदानन्दकृतः सकललोकामोददायिनः तव नाम्नः नारायणवासुदेवविष्णुहरिप्रभृतिनामधेयस्य ग्रहणे उच्चारणे सतीति यावत्। पूर्वस्य 'पूर्वेषामपि पूर्वजः' इत्युक्तरीत्या अखिलजगत्कारणभूतस्य पुंसः पुरुषस्य तवेत्येतदत्राप्यनुषज्यते। तवापि योगिभिरपि दुर्ग्रहस्यापीति भावः। स्वयं प्रयत्नान्तरनिरपेक्षमेव ग्रहणं 'उपयाम गृहीतोसि ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इत्युक्तरीत्या आत्महविस्समर्पणोद्देश्यत्वेन वशीकरणं भवेत्॥

ओमित्येकाक्षरं साक्षाद्वासुदेवस्य वाचकम्।
ओमित्युच्चारणेनैव वाच्यमानीयते परम्॥
द्वादशाक्षरयोगेन दूरस्थं तदिहान्तिके।
स्मृतमात्रे महामन्त्रे सुसूक्ष्मे द्वादशाक्षरे॥
चित्तदर्पणसंक्रान्तस्सुसुखं लक्ष्यते हरिः।
अतश्च द्वादशार्णेन स्वाध्यायेन जनार्दनः॥
आसन्नतां व्रजत्याशु ब्रह्मण्यर्पितचेतसाम्।

इति,

हरिरित्यवशेनापि कीर्तयेन्नाम यो नरः।
किमन्यैस्साधनैः कार्यं तस्य वश्यो भवेद्धरिः॥

इति च शाण्डिल्यपरमधर्मशास्त्रभगवच्छास्त्रोक्तेरिति भावः।

पक्षे—जगदानन्दकृत इत्यत्र जगदानन्देति, अनघगतीत्यत्र अनघेति च छेदः। हे जगदानन्द! लोकानन्दकारण! हे अनघ!

अपहतपाप्मन्! कृतः कृत्प्रत्ययस्य ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवेदिति 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषार्थो दर्शितः। तेन 'कर्तृकरणे कृता बहुळम्' इति समासविधायके शास्त्रे कृद्ग्रहणेन नखैर्भिन्नो नखभिन्न इत्यत्रेव नखैः निर्भिन्नः हरिणा नखनिर्भिन्नः इत्यादौ गतिकारकपूर्वेणापि कृदन्तेन समासो भवतीति वेदितव्यम्। गतिरत्र प्रादिगणपठित उपसर्गापरपर्यायश्शब्दः 'उपसर्गाः क्रियायोगे, गतिश्च' इत्यनुशासनात्। कारकाणि च कर्मकरणादीनि सुप्रसिद्धानि। अत्र भगवच्छास्त्रीये व्यवहारे शाब्दशास्त्रीयव्यवहारारोपः॥

यथावा—

**शिरसः परतो न्यस्ते पदे समस्ते विसर्जनीयोऽप्यन्ते। सत्त्वं भजते भगवन्नयोगवाहेषु हन्त गणितो मनुजः॥ ७६१॥**

हे भगवन्! योगं वहन्तीति योगवाहाः, कर्मण्यन्। ते न भवन्तीत्ययोगवाहाः त्वद्ध्यानविधुरा इत्यर्थः। तेषु गणितोऽपि अन्ते विसर्जनीयः साधुजनगोष्ठ्या बहिष्कार्योऽपि मनुजः पुमान्, समस्ते इत्यत्र समः ते इति छेदः। ते तव पदे चरणे शिरसः परतः शीर्षादूर्ध्वं शीर्षे इत्यर्थः। वृक्षाग्रे श्येन इत्यस्मिन्नर्थे वृक्षाग्रात्परतश्श्येन इत्यपि प्रयोगदर्शनात्। न्यस्ते निक्षिप्ते सति समः साधुस्सन् 'सर्वसाधुसमानेषु समं स्यादभिधेयवत्' इति मेदिनी। 'तुल्यो मित्रारिपक्षयोः' इत्युक्तदिशा सर्वसमस्सन्निति वा। यद्वा असम इति छेदः। असदृशस्सन्नित्यर्थः। सत्त्वं भजते॥

महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः।

इति श्रुत्युक्तरीत्या सत्त्वप्रवर्तकभगवच्चरणारविन्दशिरोनिधानमहिम्ना बलिदानवेन्द्र इव सात्विकतां सतो भावं वा प्रतिपद्यत इत्यर्थः । पक्षे—शिरसः शिरःपदात् परतः परत्र न्यस्ते प्रयुक्ते पदे पदशब्दे समस्ते समासं प्राप्ते सति । अन्यथा वक्ष्यमाणं सत्वं न स्यात् 'नित्यं समासेऽनुत्तरपदस्थस्य' इत्यधिकारात् । अयोगवाहाः अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयाः तेषां भगवता पतञ्जलिना तथा संज्ञाया विधानात् । तेषु गणितः । अन्ते शिरश्शब्दान्ते विद्यमानः विसर्जनीयोपि विसर्गोपि सत्वं सकारत्वं भजते 'विसर्जनीयस्य सः' इति खर्परकत्वलक्षणसत्वापवादतया 'कुप्वोः ≍क≍पौ च' इति प्राप्तस्य विसर्जनीयस्य 'अधश्शिरसी पदे' इत्यनेन सत्वविधानादिति भावः । अत्रापि—

> शिरसा प्रतिगृह्णानो देवदेवस्य पादुकाम् ।
> पापोपि सात्विको भूत्वा याति तद्वैष्णवं पदम् ॥

इति भगवच्छास्त्रप्रतिपादिते वस्तुनि शब्दशास्त्रीयव्यवहार आरोप्यते ॥

यथावा—

**कमला वैशम्पायनकथनीयोदारभागवतगीता । भयमुपशमयति भविनां प्रियशान्त्यनुशासनाहितोद्योगा ॥ ७७० ॥**

वै इति भिन्नं पदम् । शम्पानां शतह्रदानां अयने मार्गे कथनीया 'आदित्यवर्णां, हिरण्यवर्णाम्' इत्यादिश्रुतिप्रथितवर्णतया विद्युत्तुल्येति वर्णनीयेति यावत् । यद्वा—शम्पा दम्भोलिः

तस्याः अयनः प्राप्ता । शम्पया ईयत इति वा । सर्वथाऽपि वज्री इन्द्र इत्यर्थः । 'शम्पा विद्युत्पविश्शम्पा' इत्यनेकार्थध्वनिकोशः । तेन कथनीया,

नमस्ते सिन्धुसंभूते नमस्ते पद्मसम्भवे ।
नमस्सरोरुहावासे नारायणकुटुम्बिनि ॥

इति,

नमामि सर्वलोकानां जननीमब्धिसंभवाम् ।

इत्यादिना च लक्ष्मीतन्त्रविष्णुपुराणादौ देवराजेन स्तुतेत्यर्थः । यद्वा--शम्पायने इन्द्रे कथनीयं उपदेष्टव्यं लक्ष्मीतन्त्रादि यस्यास्सा तथोक्ता । लक्ष्मीतन्त्रस्य लक्ष्म्या इन्द्रायोपदिष्टत्वादिति भावः ॥

पक्षे—वैशम्पायनेत्येकं पदम् । वैशम्पायनेन परमर्षिणा कथ्यत इति कथनीया 'तयोरेव' इति कर्मण्यनीयर् । जनमेजयायोपदिष्टेत्यर्थः । उदारभागवतगीता उदाराः 'उदारास्सर्व एवैते' इति भगवतैव प्रशस्ताः वदान्या ये भागवताः भगवद्भक्ताः 'चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन' इत्यादिनोक्ता आर्तजिज्ञास्वर्थार्थिज्ञानिनः । ते हि भगवतो यत्किंचिदपि गृह्णन्ति तस्मै तु सर्वस्वदायिन इत्युदारता तेषाम् । तैर्गीता । पक्षे—भगवत इयं भागवती गिता भगवद्गीतोपनिषदित्यर्थः । सा उदारा यस्यां सा तथोक्ता । उदारत्वं चास्याः पठतां शृण्वतां च परमपुरुषार्थदातृत्वम् । महाभारतान्तर्विद्यमानाख्यानेषु महत्त्वं वा । 'उदारो दातृमहतोः' इत्यमरः । प्रियस्य स्ववल्लभस्य भगवतः शान्तिः आश्रितापराधनिर्वर्णनोदीर्णक्रोधावेगप्रशमनं तस्याः यदनुशासनं वाल्लभ्यातिशयेनाज्ञापनं तस्मिन् आहितः उद्योगः यया सा तथोक्ता ॥

पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने
हितस्रोतोवृत्त्या भवति च कदाचित्कलुषधीः ।
किमेवं निर्दोषः क इह जगतीति त्वमुचितैः
उपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥

इत्याद्युक्तरीत्या भगवन्मानसप्रसादनैकव्यापारेति भावः ॥
अत्र—

अपराधैकसक्तानामनर्हाणां चिरं नृणाम् ।
भर्तुराश्रयणे पूर्वं स्वयं पुरुषकारताम् ॥
वात्सल्येनानुतिष्ठन्ती वात्सल्याद्युपबृंहणीम् ।
उपायसमये भर्तुर्ज्ञानशक्त्यादिवर्धनीम् ॥

इत्यादिकं च स्मर्तव्यम् । पक्षे—प्रिये शृण्वतां प्रीतिजनके शान्तिश्चानुशासनं चेति पर्वणी यस्यां सा तथोक्ता । हितः श्रेयःप्रदः उद्योग इति पर्व यस्यां सा तथोक्ता च । कमला श्रीः भविनां संसारिणां भवभयं शमयति । अत्र पञ्चरात्रादिशास्त्रीये व्यवहारे प्रस्तुते भारतसंहिताव्यवहारस्यारोप इति विशेषः ॥

यथावा—

**सुप्रथतेजसि जगतां प्रथमे दिव्यस्वभा वशी भावः । त्वयि भात्यच्युत सुतरामसर्वसाधारणे- नित्यः ॥ ७७१ ॥**

दिव्या रमणीया स्वभाः 'न तत्र सूर्यो भाति' इत्यादिना 'तस्य भासा सर्वमिदं विभाति' इत्युक्तप्रकारा दीप्तिः यस्य तस्य संबुद्धिः हे दिव्यस्वभाः! हे अच्युत! शोभना प्रथा यस्य तत्तथोक्तं तेजः यस्य तस्मिन् सुप्रथतेजसि । तेजो

नाम अस्वाधीनसहकार्यनपेक्षत्वम् । तदुक्तं 'तेजस्त्वनन्यापेक्षता' इति ।

> सहकार्यनपेक्षा मे सर्वकार्यविधौ हि या ।
> तेजष्षष्ठं गुणं प्राहुस्तामिमं तत्त्ववेदिनः ॥

इति च, यद्वा—

> ज्योतींष्यादित्यवद्राजन्कुरून् प्रच्छादयन् श्रिया ।

इति निदर्शितं पराभिभवसामर्थ्यं,

> पराभिभवसामर्थ्यं तेजः केचित्प्रचक्षते ।

इत्युक्तेः । जगतां प्रथमे कारणे इत्यर्थः । एतैर्विशेषणैः 'महाशक्तिर्महाद्युतिः, महातेजा महोरगः, ओजस्तेजोद्युतिधरः, सिद्धिस्सर्वादिरच्युतः' इत्यादीनि स्मारितानि । अत एव असर्वसाधारणे सकललोकविलक्षणे त्वयि नित्यः शाश्वतः वशी वशः प्रभुत्वमस्यास्तीति वशी भावस्सत्ता प्रभुत्ववैशिष्ट्येन स्थितिरित्यर्थः । भाति 'सर्वस्य वशी' इत्येतदत्राभिसंहितम् । यद्वा—वशी प्राभववान् भावः क्रिया विभूतिर्वा । अथवा—वशो जन्म तदस्यास्तीति वशी अवशिनः वशिनस्संपद्यमानस्य भावः वशीभावः, अभूततद्भावे च्विः । अनित्य इति छेदः । अनित्यः अकर्मवश्यत्वेनेच्छापरिगृहीततया कादाचित्क इति भावः । यद्वा—भावः वशीति योजना । भावः जन्म । वशोऽस्यास्तीति वशी । वश इच्छा ऐच्छिक इत्यर्थः । अभिप्रायस्तु पूर्ववदेव । अत्र 'इच्छागृहीताभिमतोरुदेहः' इत्यादिकमनुसंधेयम् । अत एव अनित्यः उक्तोऽर्थः । यद्वा—जगतामित्येतदत्रैव संबध्यते । जगतां वशीभावः आयत्तत्वं 'वशो जन्मस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः' इति हेमचन्द्रः । सुतरां भाति प्रकाशते । अस्मिन्पक्षे प्रथमेत्यस्यैव सर्वजगदादिकारणेत्यर्थः॥

जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ।

इत्येतदत्र स्मर्तव्यम् ।

भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ।
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु ॥

इति मेदिनी । उक्तप्रकारे त्वय्यधीनमखिलं जगदित्यभिप्रायः ।

पक्षे—सुप्रथते इति दिव्यस्वभावेति च छेदः । हे दिव्यस्वभाव! हे अच्युत! भाति प्रकाशमाने प्रथमे प्रथमशब्दे असर्वसाधारणे सर्वशब्दतुल्यत्वेनाविद्यमानेऽपि 'साधारणस्समानश्च' इति तुल्यपर्यायेष्वमरः । अपिशब्दः 'न द्वन्द्वदुःखमिह किंचित्' इत्यत्रेव सामर्थ्याल्लभ्यते । सर्वादिगणापठितेऽपीति यावत् । जसि प्रथमाबहुवचने शीभावः शी इत्याकारकादेशः अनित्य इति छेदः । अनित्यः विकल्पितः जगतां सुतरां प्रथते सुष्ठु प्रसिद्ध्यति 'प्रथमचरमतय' इति सूत्रेणासर्वनाम्नोपि प्रथमशब्दस्य जस्येव शीभावस्य वैकल्पिकतयाऽनुशासनादिति भावः । अत्र सहस्रनामाध्यायादिप्रसिद्धव्यवहारे शब्दशास्त्रसिद्धव्यवहारारोपः ॥

यथावा—

**बहुधामासव्रजभूर्मलिम्लुचो जातु यो निषिद्धोपि । कारयतु स मां शौरिस्स्वस्मिन्नावश्यकं शुभं कर्म ॥७७२॥**

बहुधामा अमिततेजाः यः शौरिः जातु कदाचित् व्रजभूः नन्दव्रजजन्मा सन् निषिद्धोपि यशोदादिभिर्वारितोपि मलिम्लुचः दुग्धदधिनवनीतादिस्तेनः आस अभूत् । तिङन्तप्रतिरूपकमव्य-

यम् । सः शौरिः स्वस्मिन् स्वविषये आवश्यकं अवश्यकर्तव्यं शुभं कर्म--

न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम् ।

इत्याद्युक्तमाराधनादिकं मां कारयतु 'हृक्रोरन्यतरस्याम्' इति द्विकर्मकत्वम् । पक्षे—बहुधा बहुवारामिति यावत्। यद्वा—बहुप्रकारेण चैत्राद्याश्विनान्तमासेष्वनियमेनेत्यर्थः । तेष्वेव मासेष्वधिकमाससंभवात् । मासानां चान्द्रमासानां व्रजो निवहः 'गोष्ठाध्वनिवहा व्रजाः' इत्यमरः । तस्मिन् भवतीति मासव्रजभूः ।

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैष्षोडशभिस्तथा ।
घटिकानां चतुष्केण भवत्यधिकमासकः ॥

इति स्मरणात् । यः मलिम्लुचः—

एष षष्टिदिनो मासः पूर्वार्धस्तु मलिम्लुचः ।

इत्युक्तलक्षणः अधिमास इत्यर्थः । मलिम्लुचत्वं चास्य—

वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत् ।
नैर्ऋतैर्यातुधानैश्च समाक्रान्तो विनाशकैः ॥
मलिम्लुचैस्समाक्रान्तस्सूर्यसंक्रान्तिवर्जितः ।
मलिम्लुचं तं जानीयाद्गर्हितं सर्वकर्मसु ॥

इति शातातपोक्तरीत्या तस्करैर्यातुधानैराक्रान्तत्वादिति ध्येयम् ।

मलिम्लुचो मासभेदे चोरज्वलनयोः पुमान् ।

इति मेदिनी । सः निषिद्धोपि—

मलिम्लुचस्तु यो मासस्स मासः पापसंज्ञितः ।
त्यक्त्वा तमुत्तरे कुर्यात्पितृदेवादिकाः क्रियाः ॥
वर्जितः पितृदेवाभ्यां स मासः पापसंज्ञितः ।

इति स्मरणात्। जातु कदाचित् सति संभव इति भावः। स्वास्मिन् आवश्यकं सीमन्तोन्नयनादिकं प्रतिनियतकालमवश्यकर्तव्यं शुभं मङ्गळं कर्म मां कारयतु।

मासप्रोक्तेषु कार्येषु न मौढ्यं गुरुशुक्रयोः।

अधिमासादिदोषाश्च न स्युः कालविधेर्बलात्॥

इति स्मरणात्। अत्र पुराणवृत्तान्ते प्रस्तुते अप्रस्तुतधर्मशास्त्रीयव्यवहारारोप इति पूर्वेभ्यो विशेषः॥

यथावा—

**त्वयि सकलशुभगणास्मयमाताभानसजरा लगन्तीश। स्वच्छन्दस्थितिभाजां भाति शुभं श्रीप्रभादिवृत्तं च॥ ७७३॥**

अत्र श्रुतीतिहासपुराणादिशास्त्रीये व्यवहारे छन्दश्शास्त्रीयव्यवहारारोपः। तथाहि—सकलशुभगणा अस्मयेति छेदः। अविद्यमानः स्मयः गर्वः यस्य स तथोक्तः अस्मयः 'स्मयो नाऽद्भुतगर्वयोः, स्मयो गर्वेऽद्भुते' इति मेदिनीविश्वौ। 'न दृप्तो न च मत्सरी। अनुद्धतमना विद्वान्' इति श्रीरामायणोक्तेः। तस्य संबुद्धिः, अविद्यमानः स्मयो विस्मयो यस्येति वा 'वीर्यवान्न च वीर्येण महता स्वेन विस्मितः' इति तत्रैवोक्तेः। यद्वा—अविद्यमानः स्मयः आश्चर्यकरः पदार्थः यस्मात्स इति अनुत्तमादिवत्पञ्चमीबहुव्रीहिः।

यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले।

तं त्वा नु पश्यतो ब्रह्मन्किं मे दृष्टमिहाद्भुतम्॥

इत्यक्रूरोक्तप्रकारेण सर्वाश्चर्यनिधे इत्यर्थः। स्मय इत्येव छित्वा हे स्मयेति संबोधनं वा। अर्थस्तूक्त एव 'अनेकाद्भुतदर्शि-

नम्' इत्याद्यप्यत्रानुसंधेयम् । हे ईश! सर्वेश्वर! 'क्षरात्मानावीशते देव एकः, व्यक्ताव्यक्तं भरते विश्वमीशः, एष सर्वेश्वरः' इत्यादिश्रुतेः । त्वयि लगन्ती व्यतिषजन्ती शुभानां कल्याणानां गणाः निवहाः सकलास्समग्राः शुभगणा यस्यास्सा तथोक्ता । माता अस्य जगतामित्यादिः । यद्वा –अनौपाधिकनिर्देशेन शब्दशक्तेरसंकोचान्मातेत्यस्यैवाखिलजगज्जननीत्यर्थः । आभा इति छेदः । आ समन्तात् भातीत्याभाः । भातेः कर्तरि क्विप् । विश्वव्यापिनीत्यर्थः ॥

यथा मया जगद्व्याप्तं स्वरूपेण स्वभावतः ।
तया व्याप्तमिदं सर्वं नियन्त्री च तथेश्वरी ॥

इति विष्वक्सेनसंहितोक्तेः । यद्वा—आ समन्तात् भाः प्रभा यस्यास्सा । विश्वतोमुखद्युतिरित्यर्थः । 'चन्द्रां प्रभासां, ज्वलन्तीं तृप्ताम्' इत्यादिश्रुतेः । जरया सह वर्तत इति सजरा सा न भवतीति नसजरा । नशब्देन सुप्सुपेति समासः 'जरां मृत्युमत्येति, विजरो विमृत्युः' इत्यादिश्रुत्युक्तरीत्या भगवत इवास्या अपि जरातीतत्वाद्यखिलहेयप्रत्यनीकताया अव्याहतत्वात् । अत एवोक्तं लक्ष्मीतन्त्रे—

कान्तस्य देवदेवस्य विष्णोस्सद्गुणशालिनः ।
दयिताऽहं सदा देवी ज्ञानानन्दमयी परा ॥
अनवद्याऽनवद्याङ्गी नित्यं तद्धर्मधर्मिणी ॥

इति,

नित्यनिर्दोषनिस्सीमकल्याणगुणशालिनी ।
अहं नारायणी नाम सा सत्ता वैष्णवी परा ॥

इत्यादि च । यद्वा माता अभा न सजरा इति छेदः । नेत्येतन्मध्यमणिन्यायेनोभयतोऽन्वयि । अभा निष्प्रभा न, किंतु सप्रभैव ।

प्रतिषेधद्वयेन कादाचित्कनिष्प्रभात्वसंभावनाऽपि व्युदस्यते । 'संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः । सजरा च न । उक्त एवार्थः । भवतीति शेषः । अस्तेर्भवन्तिपरस्याप्रयुज्यमानस्याप्यस्तित्वभाषणात् । अव्याहतमहाविभूतिविशिष्टस्त्वमिति तात्पर्यार्थः । अत एव त्वच्छन्दस्थितिभाजां तव छन्दः अभिप्रायः 'अभिप्रायवशौ छन्दौ' इत्यमरः । तस्मिन् स्थितिभाजां 'त्वदीयगम्भीरमनोऽनुसारिणः' इतिवत्त्वदभिप्रायानतिलङ्घिनामित्यर्थः । यद्वा—त्वदधीनतास्थितिशालिनामित्यर्थः । त्वच्छेषभूतानां नृणामिति भावः । शुभं कल्याणं । श्रीः संपत्, प्रभा तेजः ते आदी यस्य तत् । आदिशब्देन यशआदीनां ग्रहणम् । वृत्तं तदनुरूपं चरित्रं च भाति प्रकाशते 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने, सकलफलप्रदो हि विष्णुः' इत्यखिलफलप्रदातृभगवच्चित्तानुवर्तिनामीदृशविशेषो न दुर्लभ इति भावः ॥

पक्षे—सकलशुभगणाः स्म यमाताभानसजराः इति छेदः । हे ईश! त्वयि यमाताभानसजराः अत्र मादिवर्णेषु दीर्घोऽपि यादिवर्णेष्वकार इवोच्चारणसौकर्यार्थ एव । यमतभनसजराः यादिसंज्ञकाः सकलाश्शुभाश्च गणाः—

> सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।
> मध्याद्यौ ज्भौ त्रिलौ नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥

इति छन्दश्शास्त्रप्रसिद्धा गणाः वर्णत्रयात्मकाः लगन्ति स्म लग्ना भवन्ति स्म । त्वद्वाङ्घ्रस्था अभवन्निति यावत् । अस्यामानुपूर्व्यां यकारादिवर्णत्रितये यथा आदिलघुर्यगणो निष्पद्यते। एवं एकैकवर्णापायेन मा इत्यादौ वर्णत्रितयत्रितये सर्वगुरुर्मगण

अन्त्यलघुस्तगणः आदिगुरुर्भगणः सर्वलघुर्नगणः अन्त्यगुरुस्सगणः मध्यगुरुर्जगणः मध्यलघू रगणश्चेत्यष्टौ गणा निष्पद्यन्ते । ते चादिमवर्णैस्तत्तत्संज्ञका इति ज्ञाप्यन्ते । एवं लगन्तीत्यत्र लघुर्गुरुश्च ज्ञाप्येते इत्यवहितहृदयैर्द्रष्टव्यम् । त्वच्छन्दस्थितिभाजां तव छन्दांसि उक्तात्युक्तादीनि छन्दांसि तेषु स्थितिभाजां तद्विषयकज्ञानवतामित्यर्थः । शुभं स्वनाम्नैव मङ्गळं श्रीप्रभादिवृत्तं, श्रीः उक्तायां 'ग्श्रीः' इत्युक्तलक्षणं, प्रभा जगत्यां 'स्वरशरविरतिर्ननौ रौ प्रभा' इत्युक्तलक्षणं च वृत्तं ते आदी यस्य तत् । वृत्तं पद्यं जात्येकवचनं भाति । चकारः पूर्वोक्तसमुच्चयार्थकः ॥

यथावा—

**सर्वगुरुचरणमाप्त्वाऽऽद्यगुरुपदाधस्सखे लघुन्यासात्त्वम् । शेषमुपरीव दर्शय गुरुमूने शश्वदखिललघु तद्भवति ॥७७१॥**

हे सखे! सर्वेषां गुरूणां स्वाचार्यप्रभृतिभगवदवधिकानामाचार्याणां चरणं जात्येकवचनम् । आप्त्वा प्रपद्य आद्यगुरुपदाधः आद्यस्य गुरोः भगवतः 'कमप्याद्यं गुरुं वन्दे' इत्युक्तेः । पदयोः अधः 'त्वत्पादमूलं शरणं' इत्याद्युक्तरीत्या चरणमूले इत्यर्थः । लघु क्षिप्रं यथा स्यात्तथा न्यासात् आत्मरक्षाभरसमर्पणात् नास्मिन्नर्थे विलम्बितव्यम् ॥

महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया ।
प्राप्तुं दुःखाम्बुधेः पारं त्वर यावन्न भिद्यते ॥

इत्युक्तेरिति भावः । यद्वा—लघुन्यासात् भक्त्यपेक्षया लघूपायरूपात्प्रपदनात् प्रपदनं कृत्वेत्यर्थः । ल्यब्लोपे कर्मणि पञ्चमी ।

एवं पूर्वस्मिन्नर्थेऽपीति ध्येयम् । अत्र 'गुरुमुखाच्छ्रीशं प्रपद्य' इत्युक्तोऽर्थोऽनुसंहितः । उपरीव आदौ प्रदर्शिते गुरुचरण इव प्रथमगुरोश्चरणेऽपीति भावः । स्वमिति शेषः । आत्मानामित्यर्थः । शेषं शेषभूतं परगतातिशयाधानेच्छया उपादेयस्वरूपं दर्शय । यद्वा—उपरि सकललोकोपरि विद्यमाने अखिलजगदीश्वरे भगवतीत्यर्थः । तस्मिन्निव सर्वगुरुचरणेऽपीति भावः । शेषं दर्शयेति योज्यम् । अथवा उपरीत्यस्य सकललोकशिरोधार्ये भगवच्चरण इवेत्यर्थः । अन्यत्तुल्यम् ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥

इत्यादिश्रुतेः । ऊने उपायानुष्ठानसमयभाव्यङ्गादिवैगुण्ये संभाविते सति । शश्वत् गुरुं स्वाचार्यं दर्शयेत्येतन्मध्यमणिन्यायेनात्रापि संबध्यते ।

पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ।

इत्याद्युक्तरीत्या भगवत्प्रसादनायाचार्यं दर्शयेति भावः । तत् तस्मात् उक्तप्रकारेणानुष्ठानात् अखिलं च तत् लघु च अखिललघु निश्श्रेयसपर्यन्तसकलाभिष्टं भवति सिद्ध्यति 'त्रिष्विष्टेऽल्पे लघुः' इत्यमरः । इष्टेऽर्थे—

दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ।

इति प्रयोगश्च । लघुना इष्टेनेति विवृतम् । यदा ।

कृष्णागुरुणि शीघ्रे च लघु क्लीबेऽगुरौ त्रिषु ।
निस्सारे च मनोज्ञे च पृक्कायां च लघु स्त्रियाम् ॥

इत्यादिरभसादिकोशैकरस्यायेष्टशब्दोऽमरकोशगतो मनोज्ञवाचीत्याश्रीयते, तदा अखिललघु इत्यस्य सर्वमनोज्ञमित्यर्थः । तदिदं

गुरुपरंपराशरणवरणपूर्वकभगवच्चरणारविन्दशरणागत्यादिकमखि-
लमपि न्यासविद्यानिष्णातानां सर्वेषां मनोहरं भवतीति भावः ॥

पक्षे–छन्दश्शास्त्रीयप्रस्तारक्रमो दर्शितः । तथाहि—हे सखे ! त्वं सर्वे गुरवः गुरुवर्णज्ञापकवक्ररेखाविशेषाः यस्मिंस्तत्सर्व-गुरु । चरणं पद्यचतुर्थांशं आप्त्वा उक्तविधरेखाभिर्लिखित्वेति यावत् । आद्यगुरुपदाधः आद्यं प्रथमं गुरुपदं गुरुवर्णचिह्नं त-ज्ज्ञापकवक्ररेखाविशेष इत्यर्थः । 'पदं व्यवसितत्राणस्थानलक्ष्मा-ङ्घ्रिवस्तुषु' इत्यमरः । तस्य अधः अधस्तात् लघोः लघुवर्ण-ज्ञापकऋजुरेखाविशेषस्य न्यासात् तल्लेखनं कृत्वा । पूर्ववत्पञ्चमी । शेषं अवशिष्टं उपरीव उपरितनपङ्क्ताविव । दर्शय लिखेति यावत् । ऊने उपरिगुरुवर्णज्ञापकरेखाहीने लघुवर्णसूचकरेखासद्भावे इति भावः । गुरुं गुरुवर्णसूचकवक्ररेखाविशेषं दर्शयेत्यत्राप्यन्वेति । एवं शश्वत् पुनःपुनः दर्शय । एवं सति तत् चरणं अखिललघु अखिलाः लघवः लघुवर्णज्ञापकरेखाविशेषाः यस्य तत्तथोक्तं भवति इति,

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥
ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥

इति श्लोकार्थस्सर्वोप्यनुसन्धेयः । तथाहि तदर्थः—सर्वेषां छ-न्दसामाद्यं वृत्तं सर्वगुरु अन्त्यं सर्वलघु अतः पादोपि तादृश एव एवं सति सर्वगुरौ पादे छन्दोनुरूपतया अर्धचन्द्राकृति-वक्ररेखाभिर्लिखिते सतीति यावत् । आदेः गुरोः अधः आद्य-वक्ररेखाया अधस्तात् द्वितीयपङ्क्तौ लघुं ऋजुरेखां न्यस्य लिखित्वा यथोपरि लघुरेखायाः परत्र स्थाने दक्षिणपार्श्वे उपरिपङ्क्तौ यद्वत्

गुरुलघुज्ञापकरेखास्सन्ति तथा तेन प्रकारेणैव शेषं अवशिष्टगुरुलघुरेखाः पूर्वपङ्क्त्यवसानपर्यन्तं न्यस्य भूयः पुनरपि तदधः तृतीयपङ्क्त्यादौ अमुं विधिं आदेर्गुरोरध इत्यादिकं कुर्यात् लिखेत् द्वितीयपङ्क्तौ आदौ गुर्वभावाद्द्वितीयस्थानगत एवाद्यो गुरुर्भवति। एवं तृतीयादौ तृतीयादिस्थानगत एवाद्य इति ध्येयम्। ऊने क्रमप्राप्तलेखनहीने लघुरेखायाः पूर्वत्र स्थाने वामभागे गुरूनेव वक्ररेखा एव दद्यात् लिखेत्। एवं कियन्तमवधिं लिखेदित्यत आह – यावदिति। यावता सर्वलघुः पादो भवेत् तावदयं विधिरिति भावः। एवंचास्मिन्नुदाहरणपद्ये अत्युक्ताच्छन्दःप्रस्तारस्सर्वोऽपि प्रदर्शित इत्यवधेयम्। तत्र हि प्रथमं वृत्तं द्विगुरु द्वितीयं लघुगुर्वात्मकं तृतीयं गुरुलघ्वात्मकं चतुर्थं सर्वलघु इति चत्वारि वृत्तानि भवन्तीति। अत्रापि पूर्ववदेवारोपः॥

यथावा—

**अविसर्जनीयसत्त्वं स्वान्तस्तव दर्शनेन यो विन्देत। वाचस्पतिस्स भगवंश्छन्दसि साधुः प्रयोगतो लोकेऽपि॥ ७७५॥**

हे भगवन्! तव दर्शनेन अवलोकनेन यः पुमान् स्वस्य अन्तः मनसि अविसर्जनीयं अपरित्याज्यं नैसर्गिकमित्यर्थः। सत्त्वं सत्त्वगुणं विन्देत—

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः।

सात्त्विकस्स हि विज्ञेयस्स वै मोक्षार्थचिन्तकः॥

इति मोक्षधर्मोक्तेरिति भावः। स पुमान् वाचस्पतिः वाग्मी सन् 'वागीशो वाक्पतिस्समौ' इत्यमरः। बृहस्पतितुल्य इति वा— 'जीव आङ्गिरसो वाचस्पतिः' इत्यमरः। छन्दसि अभिलाषे

साधुः साध्वभिलाष इत्यर्थः । क्षोदिष्टप्रयोजनानभिलाषुक इति भावः । यद्वा—छन्दसि वेदे साधुः अधीतसाङ्गशिरस्कवेदतया पूज्य इति भावः । 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः' इति साधुशब्दयोगे छन्दश्शब्दात्सप्तमी ॥

छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः ।

इति मेदिनी । प्रयोगतः प्रकृष्टो विजातीयप्रत्ययासंवलिततया श्रेष्ठः योगः ध्यानं तस्मात् लोकेऽपि साधुस्सभ्यः मोक्षाथाचन्तकतया उपासनीय इति यावत् । भवति ।

स वेदैतत्परं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥

इति ब्रह्मविदुपासकानां जन्मवैधुर्यश्रवणादिति भावः । 'साधुस्त्रिषूचिते चारौ सभ्ये वार्धुषिकेऽपि ना' इति रत्नमाला ।

पक्षे—तव दर्शनेन शास्त्रेण व्याकरणेनेत्यर्थः 'दर्शनं दर्पणस्वप्नबुद्धिशास्त्राक्षिदृष्टिषु' इति रत्नमाला । वः वाचस्पतिशब्दः स्वान्तः स्वमध्ये अविसर्जनीयः विसर्गशून्यः विसर्गस्थानिक इति यावत् । सः सकारो यस्य स तथोक्तः तस्य भावं अविसर्जनीयसत्वं विन्देत । 'षष्ठ्याः पतिपुत्रपारपदपयस्पोषेषु' इति षष्ठीविसर्गस्य सकारादेशविधानादिति भावः । स वाचस्पतिः वाचस्पतिशब्दः छन्दसि वेदे साधुः प्रयोगार्हः । उदाहृतसूत्रेण सकारस्य छन्दस्येव विधानात् । लोकेऽपि प्रयोगतः 'वक्ता वाचस्पतिर्यथा' इत्यादिप्रामाणिकप्रयोगभूम्ना साधुर्भवति, यथा छन्दोमात्रविषयोपि परिपन्थ्यादिशब्द इति भावः । अत्र श्रुतीतिहासादिशास्त्रीयव्यवहारे शब्दशास्त्रीयव्यवहारारोपः ॥

यथावा—

**बहुधात्वात्मा विन्देन्नाथेषद्दुरितसूपपदतां चेत्।
न खलु न खलाश्रितस्स्यात्प्रत्ययितस्सोपि दर्श-
नेन तव ॥ ७७६ ॥**

हे नाथ! आत्मा प्रत्यगात्मा। ईषत् अल्पं दुरितेन वृजिनेन सूपपदतां सुखेन उपपद्यत इति सूपपदः। वक्ष्यमाणः खल्प्रत्ययः। तस्य भावं इयाच्चेत् यत्किञ्चिद्दुष्कृतोपपन्नश्चेदित्यर्थः। बहुधा बहुप्रकारेण प्रायेणेति यावत्। खलाश्रितः दुर्जनसंसृष्टः न स्यादिति तु न खलु। स्यादेवेति भावः। तुशब्दोऽवधारणे, खल्विति जिज्ञासायां वाक्यालङ्कारे वा। 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः। दुरितमूलको हि खलसंसर्गः। यथोच्यते—

अहो नु खलसंसर्गः पापानां महतां फलम्।

इति। सोपि एवं खलसंसर्गविदूषितोपि तव दर्शनेन यादृच्छिकादिसुकृतपरिपाकसुलभेन तवावलोकनेन प्रत्यायितः संजातप्रत्ययः ज्ञानवानित्यर्थः। इतच्। स्यादित्येतदत्रापि संबध्यते।

अज्ञानं नश्यति ज्ञानमुदेति हरिदर्शनात्।

इत्युक्तेरिति भावः।

पक्षे—बहुः बहुप्रकारः धातूनां भ्वादीनां आत्मा स्वरूपं ईषद्दुर्भ्यां शब्दाभ्यां इतः सुः सुइत्याकारकशब्दः उपपदं उपोच्चारितं पदं 'तत्रोपपदं सप्तमीस्थम्' इति संकेतितं यस्य सः तथोक्तः। तस्य भावः ईषद्दुस्सूपपदतेत्यर्थः। ताम्। यद्वा—ईषद्दुर्भ्यां उपपदभूताभ्यामिति भावः। इतः युक्तः सुः उपपदं यस्य सः सूपपदः ईषद्दुरितश्चासौ सूपपदश्चेति विशेषणोभय-

पदकर्मधारयः । ततस्तल् । तत्तां इयाच्चेत् । सोपीत्यत्र श्रुतः अपिशब्दो भिन्नक्रमः । प्रत्ययित इत्यनेन संबध्यते । संजात- प्रत्ययोपि । चेदित्येतदत्राप्यनुषज्यते । प्रत्ययान्तोऽपि भवेद्य- दीत्यर्थः । खला खल्प्रत्ययेन श्रितो न स्यादिति न । यदि यः कश्चिदपि वा धातुरीषद्दुस्सूपपदतया विहितप्रत्ययस्स्यात्तर्हि 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इतीषदाद्युपपदकाद्धातोः खलि- धानादीषत्करः दुष्करः सुकर इतिवत् खल्प्रत्ययान्तो भवेदे- वेति भावः । उदाहरणमपि सूपपदतामित्यत्रैव दिङ्मात्रतया प्रद- र्शितमिति वेदितव्यम् । अत्रापि पूर्ववदेवारोपोऽनुसन्धेयः ॥

यथा—

संकुचितोऽञ्जलिरयमिति न गृहाण कदाऽपि ननु फणिनगेन्दो । दृष्ट्वाऽसामर्थ्यमिह ग्राह्योऽञ्ज- लिरेष हि स्फुटोहोमे ॥ ७७७ ॥

ननु फणिनगेन्दो ! अयं मया कृतः अञ्जलिः संकुचितः सं- क्षिप्तः यथाशास्त्रमकृतत्वादपूर्ण इति न गृहाण । मा ज्ञासीः। मोपेक्षिष्ठा इति भावः । इह मे मम असामर्थ्यं यथावदञ्ज- लिकरणाशक्ततां दृष्ट्वा स्फुटः अयथावदनुष्ठिततया व्यक्तः एषः यथातथात्राऽपि कृत इति भावः । अञ्जलिः—'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इत्युक्तस्त्वत्प्रसादनाशुकारिमुद्राविशेषः अन्योन्याभिमुखमिळितप्रसृतिद्वितयलक्षणः 'पाणिर्निकुब्जः प्रसृ- तिस्तौ युतावञ्जलिः पुमान्' इत्यमरः । एकवचनेन सकृत्कृतोप्ययं 'त्वय्येकाञ्जलिकिंकरे' इत्युक्तरीत्याऽऽश्रितवशंवदेन परमकारुणि- कसार्वभौमेण एतावद्व्याजलाभमपि महत्तरलाभं मन्वानेन त्वया- ऽनुदासितव्य इति द्योत्यते । ग्राह्यः, हीत्यवधारणे, सादरं त्वया

स्वीकार्य एव। अहो स्वाशक्तता—भगवत्परमकारुणिकतानुचिन्तनजनिते हर्षे आश्चर्ये वा। अयं चाञ्जलिः प्रयोजनान्तरपरस्य तत्तत्प्रयोजननिष्पादकः। अनन्यप्रयोजनस्य तु निश्श्रेयसपर्यन्तपरमपुरुषार्थप्रद इति द्रष्टव्यम्। अत्र—

त्वदङ्घ्रिमुद्दिश्य कदाऽपि केनचित्
यथातथावाऽपि सकृत्कृतोऽञ्जलिः।
तदैव मुष्णात्यशुभान्यशेषतः
शुभानि पुष्णाति न जातु हीयते॥
हस्तीश दुःखविषदिग्धफलानुबन्धि-
न्याब्रह्मकीटमपराहतसंप्रयोगे।
दुष्कर्मसंचयवशाद्दुरतिक्रमे नः
प्रत्यस्त्रमञ्जलिरसौ तव निग्रहास्त्रे॥

इत्याद्युक्तोऽञ्जलिप्रभावोऽनुसन्धेयः।

पक्षे—स्फुटोहोमे इत्यत्र स्फुटः होमे इति छेदः। होमे 'अञ्जलिना जुहुयात्' इति वक्ष्यमाणाञ्जलिकरणकहोमे अयं अञ्जलिः विहितोऽञ्जलिः संकुचितः मुकुलित इति न गृहाणेति कंचिद्बुभुत्सुं प्रत्युपदेशः। किंतु इह होमे सामर्थ्यं दृष्ट्वा पर्यालोच्य एषः विहितः अञ्जलिः स्फुटः व्याकोच इति ग्राह्यः 'स्फुटो व्यक्तप्रफुल्लयोः' इति मेदिनी। अत्र पूर्वमीमांसाप्रथमाध्यायान्तिमसामर्थ्याधिकरणार्थ उद्पादितः। तत्र हि—'अञ्जलिना सक्तून्प्रदाव्ये जुहुयात्' इत्यत्र किं देवताप्रसादप्रार्थनायामिव हस्तसंयोगमात्रमञ्जलिर्होमे ग्राह्यः, यथासामर्थ्यं व्याकोच एव वा। इति संशय्य, तत्र विशेषाश्रवणात् अनियम इति पूर्वपक्षं प्रापय्य, अशक्यार्थविध्यसंभवाद्वश्यंविधायकस्य शक्तिस्सहकारिण्यङ्गीकार्येति शक्तिसहायो विधिरेव यथासामर्थ्यं विधेयं व्यवस्थाप-

यति । तस्माद्व्याकोचस्य सक्तुष्वर्थापत्तिवशाद्व्यवस्थेति सि-द्धान्तितम् । सामर्थ्यं नाम कारणत्वम्—

सामर्थ्यं स्यात्कारणत्वं मत्तोऽयं मधुना पिकः ।

इति सोदाहरणलक्षणात् । यथा कोकिलमदकारणत्वरूपसामर्थ्येन मकरन्दादिसाधारणस्य मधुशब्दस्य वसन्तैकदेशे चैत्रमासेऽभिधा नियम्यते, तथाऽत्रापि होमसाधनतारूपसामर्थ्येन संकुचितव्याकोचसाधारणस्याञ्जलिशब्दस्य व्याकोचाञ्जलावभिधा नियम्यत इत्यवधेयम् । अत्र पञ्चरात्रागमादिव्यवहारे कर्ममीमांसाव्यवहारारोपः ॥

यथावा—

**सेव्यातिथिवारार्चासुभगाऽनघयोगकरणनिपुणात्मा । भक्तततिस्त्वामञ्चति पञ्चाङ्गप्रपदनेन परमात्मन् ॥ ७७८ ॥**

हे परमात्मन् ! सेव्याः

सेव्याश्श्रेयोऽर्थिभिस्सन्तः पुण्यतीर्थफलोपमाः ।
क्षणोपासनयोगोपि न तेषां निष्फलो भवेत् ॥

इति च्यवननहुषसंवादोक्तप्रकारगुणवत्तया सेवनीयाः ये अतिथयः तेषां वाराः व्यूहाः तेषां अर्चया पूजया सुभगा शोभनश्रीः शोभनकीर्तिर्वा ।

दूराध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥
एकग्रामीणमतिथिं न गृह्णीत कदाचन ।
अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते ॥

अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना ।
इत्यादिपराशराद्युक्तलक्षणातिथिसत्कारप्राप्तसौभाग्येत्यर्थः ॥

पक्षे—सेव्येति भिन्नं पदम्। जातकादिफलजिज्ञासुभिस्सेवनीया । तिथयः प्रतिपदाद्याः वाराः भानुचन्द्रादिवासराः । अर्चतीत्यर्चा पचाद्यच् । तिथिवाराणामर्चा पूजयित्रीत्यर्थः । इदमपि भिन्नं पदं 'वारस्सूर्यादिदिवसे वृन्दावसरयोरपि' इति रत्नमाला। सुष्ठु भानि अश्विन्यादीन्युडूनि गच्छति जानातीति सुभगा। अनघः भगवदेकविषयतया निरवद्यः योगः ध्यानं तस्य करणे निपुणात्मा कुशलमतिः। अन्यत्र हे अनघेति भगवतो विशेषणम्। योगाः विष्कम्भादयः । करणानि बवबालवादीनि तेषु निपुणात्मा तत्स्वरूपगुणादिपरिकलनशिक्षितधीरित्यर्थः ।

योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु ।
वपुस्स्थैर्ये प्रयोगे च विष्कम्भादिषु भेषजे ॥ इति,

करणमिह बवादौ कारणे क्षेत्रमुख्ये
वपुषि च रथबन्धे कर्मगीतेन्द्रियेषु ।

इति च मेदिनीरत्नमाले । अनेन विशेषणत्रयेण तिथिवारतारयोगकरणनिरूपणलक्षणपञ्चाङ्गकरणनैपुणी सूचिता । ईदृशी भक्ततति: भक्तशब्देनात्र साधनभक्तिनिष्ठाः फलभक्तिनिष्ठा वा विवक्षिताः 'फलसाधनभक्तिभ्यां भक्तावपि च दर्शिताः' इत्युभयोरपि भक्तशब्दव्यपदेश्यत्वस्याचार्यैरनुगृहीतत्वात्। पञ्च अङ्गानि 'आनुकूल्यस्य संकल्पः' इत्युक्तानि आनुकूल्यसंकल्पप्रातिकूल्यवर्जनमहाविश्वासगोप्तृत्ववरणकार्पण्याख्यानि यस्य तत् प्रपदनं अङ्गरूपं स्वतन्त्ररूपं वा भरन्यसनं तेन उपायभूतेन त्वां अञ्चति आराधयति—

निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः ।
प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम् ॥

इत्यादिभगवच्छास्त्रोक्तेः,

आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ।

इति प्रपत्तेष्षाड्विध्योक्तिस्तु अङ्गाङ्गिसमुच्चयाभिप्राया । 'षडङ्गं तमुपायं च' इत्यादौ षडङ्गत्वोक्तिरष्टाङ्गयोगव्यपदेशवत् । अन्यथा 'पञ्चाङ्गसंयुतः' इत्यनुपदोपदर्शितप्रमाणविरोधप्रसङ्गात् । अङ्गिनश्चात्र भरन्यासरूपत्वं 'आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते' इति निर्धारितमिति व्यवस्थापितमाचार्यैः । पक्षे— पञ्चाङ्गस्य तिथ्यादिस्वरूपप्रकाशकस्य तिथिपत्रापरपर्यायस्य प्रपदनेन प्राप्त्या उपलक्षितः स्वामञ्चति प्राप्नोति पूजयति वा । अत्र भगवच्छास्त्रीयादिव्यवहारे प्रकृतेऽप्रकृतज्योतिश्शास्त्रीयव्यवहारारोप इति विशेषः ॥

यथावा—

**प्रमदां हरेः पुरस्तात्प्रपद्य विन्देत यदि च साधुतुलाम् । मन्दोप्युच्चगतिस्स्यान्मनुजो न तु जातु तर्हि नीचगतिः ॥ ७७१ ॥**

मन्दोपि अल्पोपि वा । भक्त्यादावपटुर्वा 'मूढाल्पापटुनिर्भाग्यामन्दाः' इत्यमरः । अनेन 'भक्त्यादौ शक्त्यभावः इत्याद्युक्ताधिकारसंपत्तिः पुरुषकारप्रपदनावश्यंभावश्च सूचितः । पुरस्तात् भगवत्प्रपदनात्पूर्वं हरेः प्रमदां भगवद्वल्लभां श्रियं

प्रपद्य शरणं प्राप्य साधूनां प्रपन्नानां तुलां समतां च यदि विन्देत तर्हि उच्चे ततो लक्ष्म्या अप्युच्चे भगवति गतिः प्रपत्तिः यस्य स तथोक्तस्स्यात् । आदौ श्रियं प्रपद्य 'अस्तु ते तयैव सर्वं संपत्स्यते' इति श्रियाऽनुगृहीतो भगवन्तं प्रपद्यत इत्यर्थः । यद्वा—उच्चा ऊर्ध्वलोकनेत्री गतिः अर्चिरादिसरणिगतिः यस्य स तथोक्तः स्यात् । जातु कदाचिदपि नीचगतिः अधोगतिः न तु स्यात् नैव स्यात् । अर्चिरादिना पथा परमं व्योम प्रपन्नस्य श्रीवल्लभचरणारविन्दशरणागतस्य कथं पुनस्संसृतिव्यतिकरस्संपद्येत 'एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति श्रवणादिति भावः ।

पक्षे—हरेः सिंहराशेः पुरस्तात् अग्रतः अनन्तरमित्यर्थः । प्रमदां कन्याराशिं प्रपद्य प्राप्य साधु अवक्रं यथा स्यात्तथा तुलां तुलाराशिं यदि विन्देत । तर्हि मन्दः शनैश्चरः 'शनिमन्दौ' इत्यमरः । उच्चगतिरपि स्यात् । तुलायास्तदुच्चस्थानत्वात् न केवलं मित्रराशिगतः अपितूच्चगतिरित्यपिशब्दाभिप्रायः । एवं तुलाराशिगश्शनिः जात्वपि नीचगतिः न तु स्यात् नैव भवेत् । मेषराशेस्तन्नीचस्थानत्वस्मरणात्तुलास्थितस्य तस्य न तत्प्रसक्तिरिति भावः । अत्रापि भगवच्छास्त्रीयादिव्यवहारे ज्योतिश्शास्त्रीयव्यवहारारोपः पूर्ववदेव ॥

यथावा—

**संपश्येन्मधुमथनस्सौम्यो जीवं यदा तदा संजातम् । श्रेयश्चिन्तकमाहुस्तं सत्त्ववतां शिरस्पदैर्मान्यं च ॥ ७८० ॥**

सौम्यः शुद्धसत्त्वमयतया नित्यप्रसन्नः । बुध इत्यपि गम्यते। 'सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते' इति मेदिनी । मधुमथनः भगवान्। अनेन तमोगुणनिरसनपटीयस्त्वं द्योत्यते। मधुर्नाम दैत्यो हि मूर्ततमोगुणरूपत्वेन भारतादौ प्रसिद्ध्यति। यदा यस्मिन् काले जीवं प्रत्यगात्मानं वाक्पतिं च। 'जीवः प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ' इति मेदिनी । संपश्येत् सम्यगवलोकेत। तदा तस्मिन् काले संजातं तं जीवं श्रेयश्चिन्तकं मोक्षार्थचिन्तकम्। पक्षे—तदा बुधस्य वाक्पतिविलोकनावसरं जातं पुमांसं श्रेयश्चिन्तकं सर्वेषां कल्याणानुध्यातारं धर्मचिन्तयितारं वा 'श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्' इति मेदिनी। अत एव सत्त्ववतां सात्त्विकानाम्, अन्यत्र बलवतां व्यवसायवतां द्रव्यवतां वा राज्ञामिति यावत्।

> सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः ।
> आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु ॥

इति मेदिनी। शिरस्पदैः शीर्षस्थानैः मान्यं च आहुः । 'अधश्शिरसी पदे' इति शिरश्शब्दविसर्गस्य सत्वम् । सत्त्ववतां शिरस्पदैर्मान्यं श्रेयश्चिन्तकं चाहुरिति वा योजना । अस्यां योजनायां अनुपदोदाहरिष्यमाणवचनार्थानतिमात्रानुरूप्यं भवति । अत्र—

> जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
> सात्त्विकस्स हि विज्ञेयस्स वै मोक्षार्थचिन्तकः ॥

इति महाभारतीयव्यवहारे प्रस्तुते,

> युज्यते वीक्ष्यते वाऽपि चन्द्रजेन बृहस्पतिः ।
> शिरसा शासनं तस्य वहन्ति वसुधाधिपाः ॥

इति ज्योतिश्शास्त्रीयव्यवहारस्याप्रस्तुतस्यारोपः ॥

यथावा—

**प्रास्यावैद्यान्गुरुणा दत्तं वैद्येन लोकनाथरसम् । पुरुषो निषेवमाणः पुण्यात्मा भवति विगतसर्वरुजः ॥ ७८१ ॥**

अवैद्यान् प्राकृतान् जनान् प्रास्य परित्यज्य—

अवैद्यः प्राकृतः प्रोक्तो वैद्यो वैष्णव उच्यते ।
अवैद्येन न केनापि वैद्यः किंचित्समाचरेत् ॥

इति भगवच्छास्त्रोक्तेरिति भावः । वैद्येन 'सा विद्या या विमुक्तये' इत्युक्तब्रह्मविद्याविदा । विद्याशब्दात् तद्वेदेत्यर्थे प्राग्दीव्यतीयोऽण् । गुरुणा आचार्येण । 'आभ्यां पदाभ्यां तद्विज्ञानार्थम्' इति श्रुत्युक्तश्रोत्रियब्रह्मनिष्ठगुरुशब्दार्थस्स्मारिताः । दत्तं अनुगृहीतं लोकनाथरसं भगवदनुभवानन्दं निषेवमाणः पुरुषः विगताः सर्वरुजाः यस्य स तथोक्तः 'स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः' इत्यमरः । गळितसकलोपताप इत्यर्थः । पुण्यात्मा धन्यस्वभावः भवति 'पुण्यवान्धन्यः' इत्यमरः । अत्र—

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥

इति भूमविद्यागतश्रुत्यर्थस्स्मारितः ।

पक्षे—अवैद्यान् अभिषजः प्रास्य परिहृत्य गुरुणा श्रेष्ठेन वैद्येन भिषजा दत्तं लोकनाथरसं तन्नामानमौषधविशेषं निषेवमाणः पुरुषः रोगीति भावः । विगतसर्वरुजः शान्तसकलरोगस्सन् वैद्यचिन्तामणौ लोकनाथरसस्वरूपं प्रपञ्च्य—

इत्ययं लोकनाथस्य रसस्सर्वरुजो जयेत् ।

इत्युक्तेरिति भावः। अत एव पुण्यात्मा नीरोगतया चारुशरीरो भवति। 'पुण्यं तु चार्वपि' इति, 'आत्मा यत्नो धृतिर्बुद्धिस्स्वभावो ब्रह्म वर्ष्म च' इति चामरः। अत्र पञ्चरात्रवेदान्तशास्त्रीयव्यवहारे वैद्यशास्त्रीयव्यवहारारोप इति पूर्वेभ्यो वैलक्षण्यम् ॥

यथावा—

**बहुधा कषायिताऽपि च वैष्णवरसमेळनात्तपरभागा । मानसवृत्तिर्विष्णुक्रान्तैषामज्ज्वरादिकं शमयेत् ॥ ७८२ ॥**

एषा मदीयेति भाव । मानसवृत्तिः मनास्स्थितिः बहुधा कषायिताऽपि च रागादिकलुषिताऽपि वैष्णवानां भागवतानां रसः अनुरागः तस्य मेळनेन तदनुग्रहव्यतिकरेणेत्यर्थः। आत्तः उपात्तः परभागः परस्य परमात्मनः भागो भजनं भक्तिः। भजेर्भावे घञ्, उपधावृद्धिः 'चजोः कुघिण्यतोः' इति कुत्वम्। यया सा तथोक्ता। यादृच्छिकादिसुकृतपरिणतिसुलभभागवताभिमानविषयतासंपादितपरब्रह्मभक्तिरित्यर्थः । अत एव विष्णुक्रान्ता भगवदाक्रान्ता सती तदाकाराकारिता सतीति यावत्। मज्ज्वरादिकं मदीयभवतापादिकं शमयेत् । मनोवृत्तेर्भागवतप्रवणत्वे भगवदधिष्ठितत्वे च सकलसांसारिकाभितापानिर्वापणं संभावितमेवेति भावः।

पक्षे—एषा विष्णुक्रान्ता प्रसिद्धा। उपलक्षणमिदं भूनिम्बादीनाम्। बहुधा कषायिता क्वथिता । नैतावदेव, अपिच किंच वैष्णवरसस्य औषधविशेषस्य मेळनेन योजनेन आत्तपरभागा स्वीकृतगुणोत्कर्षा 'परभागो गुणोत्कर्षे' इति यादवः। विष्णुक्रान्ता

स्वयमेव ज्वरहारिणी ज्वरहरवैष्णवरसमेळने तद्गुणोत्कर्षः किंपुननर्चायसिद्धः इति भावः । आमज्वरादिकं आमज्वरो नाम—

ज्वरोपद्रवतीक्ष्णत्वमग्लानिबहुमूत्रता ।
न प्रवृत्तिर्न विड्जीर्णा न क्षुत्साऽऽमज्वराकृतिः ॥

इति वाहटोक्तलक्षणः स अदिर्यस्य तम् । ज्वरोपद्रवाश्च दशविधाः । यथोक्तं तेनैव—

श्वासमूर्छारुचिच्छर्दितृष्णातीसारनिद्रिताः ।
हिक्काकासाङ्गभेदाश्च ज्वरस्योपद्रवा दश ॥

इति । आदिशब्देन—

ज्वरवेगोऽधिकं तृष्णा प्रलापश्श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥

इत्यादितदुक्तपच्यमानज्वरादिकं गृह्यते । शमयेत् । तथाचोक्तं वैद्यचिन्तामणौ—

भूनिम्बाश्चित्रकं चव्यं शरपुङ्खी गुडूचिका ।
विष्णुक्रान्ता शृङ्गिबेरं क्वाथस्सर्वज्वरापहः ॥

इति, शृङ्गिबेरमित्येषां क्वाथ इत्यध्याहारेण योज्यम्—

द्वंद्वज्वरं सन्निपातं पुराणं विषमज्वरम् ।
नाशयेदखिलं घोरं नाम्नाऽयं वैष्णवो रसः ॥

इति च । वैष्णवरसलक्षणादिकं तत्रैव द्रष्टव्यम् । अत्रापि श्रुतिस्मृतिपुराणागमादिव्यवहारे वैद्यशास्त्रीयव्यवहारारोपः ॥

यथा वा—

**शान्तो मम पाप्मा श्रीकान्तनिषेवणत एष धुततान्तिः । दीप्तार्चिस्सत्करणश्रीसुभगोऽन्नादतेऽस्मि यतः ॥ ७८३ ॥**

इदं कस्यचित्प्रपित्सोर्वचनम्। तथाहि–श्रीकान्तस्य श्रीनिवासस्य निषेवणतः प्रपदनात् मम पाप्मा विद्याधिगमादुत्तरं पूर्वं चाघं शान्तः अश्लिष्टो विनष्टश्च 'आशंसायां भूतवच्च' इत्याशंसायां भूते क्तः। न श्लिष्यति विनश्यतीत्याशंसाविषयभूत इत्यर्थः। तत्र हेतुमाह—एष इत्यादिना। यतः यस्मात्कारणात्। एषः अहं धुता विनष्टा तान्तिः अशनायापिपासादिग्लानिः यस्य सः। दीप्ता या अर्चिस्सत्करणश्रीः अर्चिरादिसत्कारसंपत् तया सुभगः दीप्यमानार्चिराद्यातिवाहिकपुरस्करणसौभाग्यवान् सन् अन्नादतेच्छुः अन्नादतां 'अहमन्नादोऽहमन्नादः' इति श्रुतिप्रथितपरिपूर्णब्रह्मानुभवानन्दं इच्छुः अभिलाषुकः अस्मि। यतोऽहमशनायादिग्लान्यतीतोऽर्चिरादिपथेन परमं पदं प्रपन्नः परिपूर्णपरब्रह्मानुबुभूषुर्भवामि तदाशंसे ममोत्तरपूर्वाघाश्लेषविनाशौ संपद्येते इतीति भावः।

पक्षे–श्रीयुक्तं च तत् कान्तं च श्रीकान्तं कान्तभस्म 'विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपः' इति भस्मशब्दस्य लोपः।

कान्तं तु शीतं मधुरं कषायमायुष्करं धातुविवर्धनं च।

इति योगरत्नाकरे कान्तभस्मनः कान्तमिति व्यपदेशदर्शनात्। तस्य निषेवणतः उपयोगात् मम पाप्मा ज्वरः।

ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽन्तकः।

इति वाहटेन पाप्मशब्दस्य तन्नामसु पाठात्। इदमुपलक्षणं पाण्डुरोगादीनाम्। शान्तः गत एवेत्यर्थः। यतः यस्मात् एष जनः अहमित्यर्थः। विधुततान्तिः विगलितग्लानिः दीप्तार्चिः प्रज्वलज्जाठराग्निः सती प्रशस्ता या करणश्रीः इन्द्रियसौष्ठवं तया सुभगः अन्नादतायां ओदनाशने इच्छुश्चास्मि। इदमुपल-

क्षणमव्यथत्वादीनाम् । अत्र श्रुतीतिहासादिव्यवहारे प्रकृते अप्रकृतस्य ।

देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षवः प्रकृतियोगिमदोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥

इति वाहटोपदर्शितविगतज्वरपुरुषव्यवहारस्यारोपः । कान्तस्य ज्वरादिशमायेतुत्वं योगरत्नाकरे —

ये गुणा मृतरूप्यस्य ते गुणाः कान्तभस्मनः ।

इति रूप्यभस्मगुणातिदेशाल्लभ्यते । तथाच तत्रैव रजतभस्मगुणा निरूप्यन्ते —

तारं शीतकषायमम्लमधुरं दोषत्रयच्छेदनं
स्निग्धं दीपनमक्षिकुक्षिगदजिद्दाहं विषार्तिं हरेत् ।
मेदोच्छेदिमदात्ययात्ययकरं कान्त्यायुरारोग्यकृत्
यक्ष्मापस्मृतिशूलपाण्डुपलितप्लीहज्वरघ्नं परम् ॥ इति ॥

एवमारोप्यारोपविषययोश्शास्त्रीयव्यवहारयोर्विजातीयत्वे दर्शितान्युदाहरणानि । तयोस्सजातीयत्वेऽपीयं संभवति । यथा—

**सहकार्येऽहंकारे महति विलीने तवेक्षणाद्भगवन् । प्रकृतिस्थोऽयमियं धीर्विलीयते त्वयि ततः परे देवे ॥ ७८४ ॥**

हे भगवन्! तव ईक्षणात् कटाक्षात् सहकार्ये कार्येण वक्ष्यमणेन सह वर्तत इति तथोक्ते महति अपरिच्छेद्ये अहंकारे ।

अविद्यायामन्तरे वर्तमानास्स्वयं धीराः पण्डितंमन्यमानाः ।

जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥

इत्याद्युक्ते स्वतन्त्रात्मभ्रममूलके गर्वापरनामन्यभिमाने । येन जरारोगाद्यनेकानर्थव्रातैर्भृशं हन्यमाना मूढास्संसारे भ्रमन्ति प्राणिनः । विलीने सति । अयं अहमित्यर्थः । स्वस्यैव विनयातिशयेन अन्यतया निर्देशः । प्रकृतिस्थः प्रकृतिः स्वाभाविकशेषता तस्यां तिष्ठतीति तथोक्तः—

दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः ।

इत्याद्युक्तस्वाभाविकशेषत्वानुसंधातेत्यर्थः । आसमिति शेषः । ततः इयं धीः मदीया एषा मतिः परे देवे त्वयि विलीयते त्वदाकाराकारिता भवतीत्यर्थः । अहंकारादिमलराहित्येन शुद्धान्तःकरणतया स्वाभाविकशेषतानुसंधातुर्मम सर्वग्रन्थिविप्रमोक्षहेतुभूता ध्रुवाऽनुस्मृतिर्भवतीति भावः । अत्र—

लीयते ब्रह्मणि मतिर्निर्ममस्यानहंकृतेः । इति,

मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥

इत्यादिकं च स्मार्यते ।

पक्षे—तव ईक्षणात् संकल्पात् सहकार्यैः एकादशेन्द्रियशब्दादितन्मात्राकाशादिभूतपञ्चकात्मककार्यैस्सहिते अहंकारे सात्त्विकाद्यहंकाराख्ये तत्त्वे महति महत्तत्त्वे स्वकारणभूते विलीने सति अयं महान् महत्तत्त्वमित्यर्थः । प्रकृतिस्थः मूलप्रकृतौ विलीन इत्यर्थः । इयं प्रकृतिः अव्यक्ताद्यपरपर्याया ततः अनन्तरं परे देवे परस्मिन् ब्रह्मणि त्वयि लीयते । क्रमादक्षरत्वतमस्त्वावस्थापन्ना सती एकीभवतीत्यर्थः । अत्र वेदान्तशास्त्रीयभगवद्भक्तिव्यवहारे प्रस्तुते अप्रस्तुतस्य तच्छास्त्रीयस्यैव 'अहंकारो महति विलीयते

महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवति' इति श्रुत्युक्तप्रलयव्यवहारस्यारोपः ॥

लौकिके व्यवहारे शास्त्रीयव्यवहारारोपो यथा—

**हारास्तव प्रतीकालम्बनभाजो यथोचितगुणाढ्याः । मुञ्चन्त्यर्चिस्सरणिं दूरान्नारायणाचलसुधांशो ॥ ७८५ ॥**

हे नारायणाचलसुधांशो! नारायणाचल इति शेषाद्रेरेवनामान्तरमित्यवोचाम । तव प्रतीकः वक्षोरूपोऽवयवः तस्य आलम्बनमाश्रयणं प्रतीकरूप आश्रयो वा तद्भजन्तीति तथोक्ताः । यथोचिताः यथार्हाः ये गुणाः सुवर्णादितन्तवस्तैः आढ्याः अभिरूपा इति यावत् । हाराः मुक्तादिरत्नमयाः सरा अर्चिस्सरणिं रोचिःपरंपरां 'सरणिः पङ्क्तिवर्त्मनोः' इति रत्नमाला । दूरात् मुञ्चन्ति प्रसारयन्तीति यावत् ।

पक्षे—प्रतीकालम्बनभाजः नामादिप्रतीकोपासकाः अत एव यथोचितगुणाढ्याः यथाक्रतुनयेन उपासनानुगुणयत्किंचिद्गुणसंपन्नाः न तु साक्षाद्ब्रह्मोपासकवदाविर्भूतापहतपाप्मत्वादिब्राह्मगुणा इति भावः । अर्चिस्सरणिं अर्चिरादिमार्गं दूरात् मुञ्चन्ति 'अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च' इति सूत्रेण भगवता बादरायणेनाप्रतीकालम्बनानामेवार्चिरादिगतेर्निर्णीतत्वेन प्रतीकोपासकानां तस्या असंभवादिति भावः । प्रतीकोपासनं नाम अब्रह्माणि नामादौ ब्रह्मदृष्टिः यद्विधीयते 'नाम ब्रह्मेत्युपासीत' इत्यादिभूमविद्यादौ । अत्र लौकिके भगवन्मुक्ताहारव्यवहारे प्रस्तुते अप्रस्तुतवेदान्तशास्त्रीयव्यवहारारोपः ॥

यथावा —

**देवच्छन्दानुगुणास्तमुपासीनाश्श्रितोज्ज्वलनसृतयः। मुक्ताख्यां लभमाना मणयोऽश्नुवते हरेः परं धाम ॥७८६॥**

देवच्छदस्य शतयष्टिकमुक्ताहारस्य 'देवच्छन्दोऽसौ शतयष्टिकः' इत्यमरः। अनुगुणाः अनुरूपाः तद्घटनार्हा इत्यर्थः। अत एव तं देवच्छन्दं उपासीना आश्रिता इत्यर्थः। श्रितोज्ज्वलनसृतयः। श्रिता प्राप्ता उज्ज्वलनस्य उत्कृष्टप्रकाशस्य सृतिः सरणं प्रसरः यैस्ते तथोक्ताः मुक्ता इत्याख्यां लभमानाः मणयः मौक्तिकानीत्यर्थः। हरेः श्रीनिवासस्य परं धाम दिव्यविग्रहं 'गृहदेहत्विट्प्रभावा धामानि' इत्यमरः। अश्नुवते प्राप्नुवन्ति तत्र प्रकाशन्त इति भावः।

अन्यत्र देवस्य परमात्मनः 'अध्यात्मयोगाधिगमेन देवम्' इत्यादौ देवशब्दस्य परमात्मनि प्रयोगात्। छन्दः अभिप्रायः वशो वा 'अभिप्रायवशौ छन्दौ' इत्यमरः। तस्यानुगुणाः भगवदधीनस्वरूपस्थितिप्रवृत्तय इति यावत्। तं देवमेव 'सर्वं वाक्यं सावधारणम्' इति न्यायात्। न तु तत्प्रतीकं नामादिकमिति भावः। उपासीनाः। अत एव श्रितोज्ज्वलनसृतयः प्राप्तोत्तमार्चिरादिमार्गास्सन्तः 'पदवी सृतिः' इत्यमरः। मुक्ताः प्रकृतिबन्धविमुक्ता इति भावः। हरेः परं धाम अश्नुवते 'तद्विष्णोः परमं पदम्' इत्युक्तमप्राकृतं देशविशेषं विन्दन्तीत्यर्थः। अत्रापि पूर्ववदेव लौकिके व्यवहारे शास्त्रीयव्यवहारारोपः॥

यथाच —

**मुक्ताः कतिचन मणयोतनवश्श्रीनाथ मूर्ति-**

भाजश्च । स्वैरं दिव्यालोकान् सृजन्ति हृद्यास्तव स्वराजश्च ॥ ७८७॥

हे श्रीनाथ! तव हृद्याः हृदयस्थाः 'शरीरावयवाच्च' इति भवार्थे यत् 'हृदयस्य हृल्लेख' इत्यादिना हृदयशब्दस्य हृदादेशः । स्वेन राजन्त इति स्वराजः अनन्याधीनप्रकाशा इत्यतिशयोक्तिः । अतनवः स्थूलाः । मूर्तिभाजः काठिन्यभाजश्च । 'मूर्तिः काठिन्यकाययोः' इत्यमरः । कतिचन मुक्ता इति मणयः स्वैरं यथेष्टं दिव्याश्च ते आलोकाश्च दिव्यालोकाः तान् रमणीयान् प्रकाशानित्यर्थः । 'दिव्यं वल्गुलवङ्गयोः' इति हेमचन्द्रः 'आलोको दर्शने द्योतौ' इत्यमरः । सृजन्ति प्रसारयन्तीति यावत् ॥

पक्षे—तव हृद्याः हृदयप्रियाः 'स च मम प्रियः' इति गानात् । 'हृदयस्य प्रियः' इति यत् । अत एव मुक्ताः प्रकृतिबन्धवियुक्ताः कतिचन चेतना इति गम्यते । स्वैरमित्येतदत्राप्यपकृष्यते । स्वैरं यथेष्टं अतनवः अशरीराः मूर्तिभाजः शरीरभाजश्च । दिव्याः दिवि परमपदे भवाः दिव्यास्सन्तः, दिगादित्वाद्यत् । स्वैरं यथेष्टं लोकान् 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ते' इत्याद्युक्तप्रकारान् लोकान् सृजन्ति । अत एव स्वराजश्च अनन्याधिपतयश्च भवन्तीति शेषः । अत्र पूर्वार्धेन अभावाधिकरणसिद्धान्तार्थः, उत्तरार्धेन संकल्पाधिकरणार्थश्च संगृहीतः ।

तत्र हि—अभावाधिकरणे शरीरस्य दुःखहेतुत्वान्मुक्तस्य शरीरं नेति 'अभावं बादरिराह ह्येवम्' इति सूत्रेण बादरिमतमनूद्य 'स एकधा भवति' इत्यादिना मुक्तस्यानेकधा भावश्रवणादच्छेद्यस्य निरवयवस्य शरीरेण विनाऽनेकीभावानुपपत्तेः कर्मकृ-

तशरीरस्यैव दुःखहेतुत्वाच्च सशरीर एवायमिति 'भावं जैमिनिर्विकल्पामननात्' इति जैमिनिमतेन प्रतिक्षिप्य सत्यसंकल्पत्वश्रुत्या इच्छानुरोधेन कदाचित्सशरीरः अशरीरश्च कदाचिदिति स्वमतमुपन्यस्तम्। 'द्वादशाहवदुभयविधं बादरायणोऽतः' इति सूत्रेण भगवता बादरायणेन। संकल्पाधिकरणे तु सत्यसंकल्पत्वेन व्यवह्रियमाणानां राज्ञां कार्यनिष्पादने प्रयत्नसापेक्षत्वदर्शनान्मुक्तस्यापि प्रयत्नसापेक्षैव पित्रादिसृष्टिरित्याशङ्क्य 'संकल्पादेवास्य पितरस्समुत्तिष्ठन्ते' इत्यवधारणात् प्रयत्नापेक्षत्वे प्रमाणाभावाच्च संकल्पमात्रादेव सृष्टिरिति 'संकल्पादेव तच्छ्रुतेः' इति सूत्रेण निर्णीय 'अत एव चानन्याधिपतिः' इति सत्यसंकल्पत्वमेव 'स स्वराड्भवति' इति श्रुत्युदाहरणेन स्थापितं शारीरकभाष्ये। तदेतत्सर्वं मूले यथास्थानं प्रत्यभिज्ञापितं तैस्तैः पदैरिति सावधानं द्रष्टव्यम्। अत्रापि लौकिके शास्त्रीयारोपः॥

यथावा—

**न क्षिप्तं न च मूढं न च विक्षिप्तं श्रयेत्त्वदीयजनः। त्वय्येकाग्रनिरुद्धस्थितिर्भवेद्देव सार्वभौमोऽयम्॥ ७८८॥**

अत्र लौकिके व्यवहारे प्रस्तुते अप्रस्तुतयोगशास्त्रीयव्यवहारारोपः। तथाहि—हे देव! त्वदीयजनः क्षिप्तं अन्यैरधिक्षिप्तं पुमांसं न श्रयेत्। मूढं अज्ञं च न श्रयेत्। विक्षिप्तं अनवस्थितात्मानं च न श्रयेत्। संभावनायां लिङ्। किंतु अयं त्वदीयजनः त्वयि एकाग्रं अव्यग्रं यथा स्यात्तथा निरुद्धस्थितिः निरुद्धचित्तवृत्तिरिति यावत्। सार्वभौमः सर्वभूमेरीश्वरः सर्व

भूमिविदितश्च भवेत् । न च पुंवाक्येष्वनेकार्थत्वं दोषमावहति । अत एव शिशुपालवधे—'क्रियासमभिहारेण' इत्यत्र 'भृशं पौनःपुन्येन चेत्यर्थः' इति मल्लिनाथः । 'तस्येश्वरः, तत्र विदित इति च' इत्यधिकारे 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण् । अनुशतिकादित्वादुभयपदवृद्धिः ॥

पक्षे—योगशास्त्रीयप्रक्रियया ऽर्थोऽनुसन्धेयः । तथाहि—'योगश्चित्तवृत्तिनिरोधः' इति पातञ्जलं सूत्रम् । चित्तस्य रजस्तमोवृत्तीनां निरोधो योग इति तदर्थः । 'स च सार्वभौमः' इति तद्भाष्यम् । चित्तस्य पञ्च भूमयो भवन्ति—क्षिप्तं मूढं विक्षिप्तं एकाग्रं निरुद्धमिति । तासु सर्वासु भूमिषु विदित इति तदर्थः यदाह भोजराजः—'स च निरोधस्सर्वासां चित्तवृत्तीनां सर्वप्राणिनां च धर्मः कदाचित्कस्यांचिद्बुद्धिभूमावाविर्भवति' इति । अयमाशयः—यदा चित्तस्य या बुद्धिवृत्तिरुदेति तदा तस्यामन्यस्या वृत्तेर्निरोधो दृश्यते । यथा क्षिप्तावस्थायां मूढावस्थानिरोध इति तस्मादयं निरोधस्सर्वास्वपि चित्तभूमिषूक्तप्रकारेण विदित इति । वाचस्पतिमिश्रस्तु—'एकाग्रस्य चित्तस्य तिस्रो भूमयः मधुमती मधुप्रतीका विशोकेति । निरुद्धस्य तु संस्कारशेषतैकैवेति । सर्वासु च तासु चतसृषु भूमिषु अन्यासां प्रमाणादिवृत्तीनां निरोधो विदितः' इति तदर्थमाह । युक्तं चैतत् क्षिप्तादिषु पञ्चसु भूमिषु क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमत्यन्तमस्थिरम् । मूढं तु तमस्समुद्रेकान्निद्रादिमत् । क्षिप्ताद्विशिष्टं विक्षिप्तम् । विशेषश्चास्थेमबहुलस्य कादाचित्कस्थेमा । तत्र क्षिप्तमूढयोस्सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारंपर्येणापि निश्श्रेयसहेतुताविरहात्तदुपघातुकत्वाच्च समाधिशङ्कैव नास्ति । विक्षिप्ते तु चेतसि कादाचित्कस्समाधिर्न

योगपक्षे वर्तते। किंतु तीव्रपवनविक्षिप्तप्रदीपवत्स्वयमेव नश्यति। एकाग्रं त्वेकविषयकधारावाहिकवृत्तिसमर्थं सत्त्वोद्रेकेण तमोगुणकृततन्द्रादिविलयादेकाकारा वृत्तिः। सा च रजोगुणकृतचाञ्चल्यरूपविक्षेपाभावादेकविषयैवेति शुद्धे सत्त्वे भवति चित्तमेकाग्रम्। अस्यां च भूमौ संप्रज्ञातः अत्र ध्येयाकारावृत्तिरपि भासते। तस्या अपि निरोधे निरुद्धं चित्तमसंप्रज्ञातसमाधिभूमिर्भवतीति क्रमः। तस्मात् क्षिप्तमूढविक्षिप्तेषु समाधेरसंभवादवशिष्टयोरेकाग्रनिरुद्धयोरेव समाधिभूमितया तदवान्तरभूतमधुमतीप्रभृतिभूमिचतुष्टयमादाय सार्वभौमत्वं योगस्य निर्व्यूढं वाचस्पतिमिश्रेणेति। अयमेव हि पक्षोऽस्मिन्नुदाहरणपद्ये विवक्षितः। क्षिप्तमूढविक्षिप्तभूमित्रयाश्रयणं प्रतिषिध्य एकाग्रनिरुद्धाख्यभूमिद्वयस्थित्यैव योगस्य सार्वभौमताया दर्शितत्वादित्यलम्॥

यथा वा—

**अविसन्निधिसातङ्कस्तव सेनारेणुरुल्ललन् शौरे।**
**मन्येऽभ्रसरित्सलिलोपस्पर्शात्सकलमपि खमस्प्राक्षीत्॥ ७८९॥**

हे शौरे! तव सेनारेणुः अवेः भानोः स्त्रीधर्मिण्याश्च।

> अविर्ना पर्वते सूर्ये मेषे मूषककम्बले।
> प्राकारे भवने भासि स्त्री तु पुष्पवतीभुवोः॥

इति रत्नमाला। सन्निधेः सन्निकर्षात् सातङ्कः तापान्वितः उपहतिशङ्कान्वितश्च 'रुक्तापशङ्कास्वातङ्कः' इत्यमरः। उल्ललन् ऊर्ध्वं गच्छन्। पक्षे उत्प्लवमान इत्याचारशीलानुभावोक्तिः। अ-

प्रसरितः सलिलस्य उपस्पर्शात् अवमर्शाद्धेतोः । पक्षे स्नाना-दाचमनाच्च तत्कृत्वेत्यर्थः । पुंवाक्येष्वनेकार्थत्वमदोषायेत्यनन्तर-पूर्वश्लोकव्याख्यायामवोचाम । ल्यब्लोपे पञ्चमी ‘उपस्पर्शस्स्पर्श-मात्रे स्नानाचमनयोरपि’ इति मेदिनी । सकलं खं अन्तरिक्षं अस्प्राक्षीत् । अस्पृशदेवेति मन्ये अनुमिनोमि अन्यथा मन्दा-किनीस्पर्शासंभवादिति भावः । पक्षे सकलं खं चक्षुरादीन्द्रियं अस्प्राक्षीत् उपास्पृशदित्यर्थः ।

चण्डालसूतिकोदक्यापतितान् दूरतस्त्यजेत् ।
अतस्सन्निधिमात्रेण सचेलं स्नानमाचरेत् ॥

इति, स्नात्वा पीत्वा च भुक्त्वा च सुप्त्वा क्षुत्वा द्विजोत्तमः ।
अनेन विधिना सम्यगाचान्तश्शुचितामियात् ॥

इति च संवर्तस्मृतेः,

अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ।
त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिस्समुपस्पृशेत् ॥

इति याज्ञवल्क्येन आचमनानन्तरं चक्षुरादीन्द्रियस्पर्शस्मरणाच्च । ‘इन्द्रियेऽपि खम्’ इत्यमरः । अत्र लौकिके भगवत्सेनारेणुव्य-वहारे धर्मशास्त्रीयव्यवहारारोपः ॥

यथा वा—

**हृद्गतमुक्तावलिकश्शितिकण्ठीयातिवेलरुचि-सुभगः । प्रौढशिरोमणिदीधितिपरिचयपरभाग-वान् हरिर्जयति ॥७१०॥**

हृद्गता वक्षस्स्था मनस्स्था च मुक्तावलिः मुक्ताहारः न्या-यग्रन्थविशेषश्च यस्य स तथोक्तः । ‘शेषाद्विभाषा’ इति कप् । शितिकण्ठीया मयूरसंबन्धिनी अतिवेला रुचिः त्विट् तया सु-

भगः। पक्षे शितिकण्ठीयमिति न्यायग्रन्थविशेषः। तस्मिन्नति-वेला रुचिः आस्थां तया सुभगः। प्रौढः शिरोमणिः चूडारत्नं तस्य दीधितेः प्रभायाः, पक्षे शिरोमणिदीधितिः न्यायग्रन्थवि-शेषः तस्य परिचयतः संपर्कात् व्यासङ्गाच्च परभागवान् गु-णोत्कर्षवान् 'परभागो गुणोत्कर्षे' इति कोशः। अत्र लौकिके श्रीनिवासदिव्यविग्रहव्यवहारे न्यायशास्त्रीयव्यवहारारोपः। अ-त्राप्रकृतव्यवहारस्यापि लौकिकत्वाभिसन्धौ प्राथमिकप्रभेदस्यैवेदं स्यादुदाहरणम् ॥

यथावा—

हस्तेऽनन्तोच्चे तव लग्नं धनुरुदितमुच्छ्रितं ननु राज्ये। सौम्यमिनं च दधानं सुश्रीकं स्वकलितो-दयं त्वातनुते ॥ ७९१ ॥

ननु अनन्त! हे भगवन्! उच्चे उत्कृष्टे उच्छ्रिते वा तव हस्ते पाणौ लग्नं अत एव उदितं उत्कर्षं प्राप्तं धनुः चापं कर्तृ उच्छ्रितं उत्कर्षेणाश्रितं जनं विशेषणादिकमिवेति भावः। राज्ये आधिराज्यस्थाने सौम्यं अनुग्रशासनं इनं राजानं च 'सौम्यो ज्ञे ना त्रिष्वनुग्रे' इति, 'इनः पत्यौ नृपार्कयोः' इति च मेदिनी। दधानं पुष्णत् राज्ये निराबाधं निवेशयदित्यर्थः। सुश्रीकं शोभनतेजसं स्वकलितोदयं स्वेन धनेन 'स्वोऽस्त्रियां धने' इत्यमरः। कलितः उदयः प्राभवं यस्य तं तथोक्तम्। तु-शब्दोऽवधारणे। उक्तविधमेवेत्यर्थः। नात्र संदेग्धव्यमिति भावः। आतनुते इति ॥

इतरत्र—ननु इति कस्यचित्संबोधनम्। हस्ते हस्तर्क्षे अनन्तोच्चे अनन्ते अन्तरिक्षे उच्चे सति द्रष्टुर्भ्रूमध्यतुल्यभागस्थे

सति उदितं उदयं प्राप्तं धनुः धनुराख्यं तव लग्नं त्वज्जन्मलग्नं, तथाचोक्तं ज्यौतिषोपकरणे—

अवाच्यभिमुखो भूत्वा निशि कालं खमध्यम ।
स्वभ्रूमध्यगतां योगतारां दृष्ट्वा वदेत्सुधीः ॥
अक्षराणां कटपयादीनां संख्याक्रमाश्रयात् ।
तत्तन्नक्षत्र उच्चस्थे लग्नानां गतिरुच्यते ॥

इत्युपक्रम्य 'हस्तो धनुर्गृहे बाला' इति । हस्तनक्षत्रमुच्चस्थं चेत् धनुर्लग्ने तिस्रो नाडिकाः त्रयो नाडिकाषष्ठांशाश्च गता इति तदर्थः ।

प्रतिवाक्यं पठ्यमानवर्णयुग्मादिमाक्षरम् ।
लग्नेऽवबोधयेन्नाडीं तदष्ठांशं पराक्षरम् ॥

इति तत्रैवोक्तेः । राज्ये दशमे कन्याराशौ उच्छ्रितं उच्चस्थमित्यर्थः । इदं सौम्यमित्यनेनैवान्वेति, तस्यैव कन्याया उच्चस्थानत्वात् । न त्विनमित्यनेन । तस्य हि मेषो राशिरुच्चस्थानम् । सौम्यं बुधं इनं भानुं च दधानं सत् स्वकलितोदयं स्वस्मिन् धनुर्लग्ने कलितोदयं प्राप्तजन्मानं त्वा त्वां सुश्लोकं शोभनैश्वर्यं तनुते । भाग्याधिपस्य भानोरुच्चगतेन राज्याधिपेन बुधेन सह राज्यस्थानेऽवस्थानादिति भावः । धनुर्लग्नस्य सिंहकन्ये भाग्यराज्यस्थाने । 'भाग्यं धर्मश्च नवमं, कर्म राज्यं च दशमम्' इति नवमदशमराश्योर्भाग्यराज्यस्थानत्वाभिधानात् । अत्र लौकिके भगवद्धनुर्व्यवहारे—

भाग्यराज्याधिपौ स्यातां भाग्ये राज्येऽपि वा यदि ।
तयोरेकोऽप्युच्चगश्चेन्महद्राज्यं प्रयच्छति ॥

इति ज्यौतिषव्यवहारारोपः ॥

यथावा—

फणिशिखरिणीश्वर त्वं निवसन्कोणे कवाऽपि सुरपूज्यः। भविता यदुदयदृष्टिर्धीमान् श्रीमान् भवेत्स च वपुष्मान् ॥ ७१२॥

फणिशिखरिणि शेषाद्रौ। ईश्वर! स्वामिन्! 'स्वामीश्वराधिपति' इत्यादिना सप्तमी। सुरपूज्यः देवाराधनीयः। पक्षे बृहस्पतिरित्यर्थः। त्वं कवाऽपि कोणे फणिशिखरिणीत्येतदत्रानुषज्यते। शेषाद्रौ कस्मिंश्चित्प्रदेशे इत्यर्थः। पक्षे लग्नात्पञ्चमे नवमे वा त्रिकोणाख्यस्थाने निवसन् सन् यस्य पुंसः उदये अभ्युदये। पक्षे—उदयशब्दः स्वद्रष्टव्यस्थानोपलक्षकः उदये जन्मलग्ने तदुपलक्षिते त्रिकोणान्तरे च। दृष्टिः अभिप्रायः दृक्च यस्य स तथोक्तो भविता। स पुमान् धीमान् श्रीमान् वपुष्मांश्च भवति। त्वत्कटाक्षितस्य किं दुर्लभमिति भावः। द्वितीयपक्षे यज्जन्मलग्नात्पञ्चमे नवमे वा कोणे विद्यमानो गुरुर्लग्नं त्रिकोणदृष्ट्या पश्यति स धीमान् श्रीमान् वपुष्मांश्च भवति। पञ्चमस्य बुद्धिस्थानत्वात्तत्र गुरुस्थितौ धीमान् तस्मात्पञ्चमकोणदृष्ट्या नवमस्थानदर्शने श्रीमान् नवमकोणदृष्ट्या वपुस्स्थानस्य लग्नस्य वीक्षणे वपुष्मांश्च भवति। एवं नवमस्य भाग्यस्थानत्वात्तत्र तदवस्थाने श्रीमान् तस्मात्पञ्चमकोणदृष्ट्या लग्नावलोकने पूर्ववद्वपुष्मान् नवमकोणदृष्ट्या पञ्चमस्थानावलोकने धीमांश्च भवेदिति विवेकः। अत्र लौकिके भगवत्कटाक्षितजनव्यवहारे,

पश्यन्ति सप्तमान् सर्वे शनिजीवकुजाः पुनः।
विशेषतस्तु त्रिदशत्रिकोणचतुरश्रकान् ॥

योयो भावस्स्वामिदृष्टो युतो वा ।
सौम्यैर्वा स्यात्तस्यतस्याभिवृद्धिः ॥
इत्यादिज्योतिश्शास्त्रीयव्यवहारारोपः ॥

यथावा—

**न नमय शिरो यतस्त्वयि ननु वृत्ते काऽपि मालिनी भवति कृतिन् । साध्वन्वयगुणरुचिरा ह्यतिशक्वर्यन्तरुज्ज्वलाऽनघलक्ष्मीः ॥ ७९३ ॥**

इदं पद्यं कंचित्कृतिनं प्रति कस्यचिद्वचनम् । हे कृतिन्! शिरः मूर्धानं न नमय न प्रह्वय । यतः यस्मात्कारणात् त्वयि वृत्ते चरित्रे विषये काऽपि मालिनी मालिन्यं 'गुणवचन' इति भावे ष्यञि षित्वलक्षणो ङीष् । न भवति नु । नु इत्येतदव्ययमनुनये । 'नु वितर्कापमानयोः । विकल्पानुनयातीते प्रश्ने हेत्वपदेशयोः' इति मेदिनी । यदि चारित्रे यत्किंचिदपि संभवेन्मालिन्यं तर्हि शिरो नमयितव्यं, तद्धि शिरोनमनकारणं, न हि त्वयि तद्दृश्यत इति भावः । तत्र हेतुमाह—साध्विति । हे अनघ! हि यस्मात् साध्वन्वयगुणरुचिरा साधुः अन्वयस्संबन्धः येषां ते नित्यसंबद्धा इत्यर्थः । तथाविधाः ये गुणाः सत्यत्वज्ञानत्वानन्दत्वादयः अपहतपाप्मत्वादयश्च कल्याणगुणाः तैः रुचिरा रमणीया । अतिशक्वरी दुरितनिग्रहाश्रितानुग्रहयोरतिमात्रशक्ता । शक्नोतेः 'अन्येभ्योपि दृश्यते' इति क्वनिप् । स्त्रीत्वविवक्षायां 'वनो र च' इति ङीप्, रश्चान्तादेशः । ईदृशी लक्ष्मीः श्रीः अन्तः तव हृदये उज्ज्वला दीप्ता त्वया ध्यातेति यावत् । उक्तप्रकारलक्ष्मीनिवासभूतहृदयतया तव मालिन्यस्पर्शो न भवत्येवेति भावः ॥

अन्यत्र – त्वयि इत्यत्र तु अयि इति छेदः । अयि कृतिन्! ननमयशिरोयतः ननमयाः क्रमेण नगणद्वयमगणयगणाः शिरसि आदौ यस्य स तथोक्तः । यः यगणः तस्मात् ननमयशिरोयतः । सार्वविभक्तिकस्तसिः । वृत्ते, जात्येकवचनम् । वृत्तेषु मध्ये काऽपि इयमप्येकेत्यर्थः । मालिनी भवति मालिनीनाम वृत्तं भवति । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणात् । तामेव विशिनष्टि—साध्विति । अन्वयः अविद्यमानः उवर्णो यस्य सः अनुः । नञ्पूर्वपदबहुव्रीहौ नञो नलोपे 'तस्मान्नुडचि' इति नुट् । स चासौ अयश्च अं यातीत्ययः । याधातोः 'आतोऽनुपसर्गे कः' इति कः । उकारस्थानिकाकारवानित्यर्थः । गुणः गण इत्यर्थः । गुणशब्दे उक्तरीत्या उकारोत्सारणे तत्रैव अकारन्यासे गण इति निष्पत्तेः । साधुः वक्ष्यमाणरीत्या शुभप्रदः यः अन्वयगुणः, जात्येकवचनम् । यद्वा—साधवः अन्वयगुणा इति बहुवचनान्तशब्दाभ्यामेव विग्रहः । अन्वयगुणाः पूर्वोक्ताः ननमययगणा इत्यर्थः । तैः रुचिरा । अतिशकरी तन्नामपञ्चदशं छन्दः । 'उक्ताऽत्युक्ता' इत्यारभ्य 'शकरी साऽतिपूर्वा स्यात्' इति तस्याः पञ्चदशत्वेन गणनात् तस्यां अन्तः मध्ये उज्ज्वला दीप्यमाना अनघाः निर्दोषाः लक्ष्म्यः संपदो यस्यास्सेति पञ्चमीबहुव्रीहिः । हीत्यवधारणे । अस्याः प्रबन्धादौ प्रयोगे कृतिनेतुस्तत्प्रणेतुश्च संपदस्सिद्ध्यन्त्येवेति भावः । यथोक्तमलंकारशिरोभूषणे—

नगणस्त्रिलघुर्ददात्यजस्रं सकलार्थानपि देवताऽस्य यज्वा ।
हरितालनिभो ग्रहेण हीनस्तदनुष्यारिगणो न कश्चिदस्ति ॥
मगणस्त्रिगुरुश्श्रियं विधत्ते बुधभूमिग्रहदेवतस्तटिच्छ्रीः ।
तनुते सगणान्वितोऽथ लक्ष्मीं भवति क्रूरयुतस्त्वशोभनोऽसौ ॥
यगणो जलदेवतोऽतिशुभ्रो धनदाद्यादिलघुः कविग्रहश्च ।

तगणेन युतोऽशुभं प्रदत्ते विषमिश्रौदनवत्कवेश्च नेतुः ॥

यस्य यस्य तु शुभाऽधिदेवता तस्य तस्य तु गणस्य सौम्यता ।

यस्य यस्य भवतीह साऽन्यथा क्रूरता भवति तस्य तस्य हि ॥

इति । एवंच नगणोपक्रमेऽस्मिन्वृत्ते नगणस्य ग्रहाविधुरतया सर्वगणयोगेऽपि शुभप्रदत्वात् बुधादिदेवताकस्य मगणादेरिव रिपुपापग्रहदेवताकत्वप्रयुक्ताशुभगणसंबन्धनिबन्धनाशुभत्वानवकाशान्निसर्गत एव शुभयोर्भगणयगणयोर्योगाच्च लक्ष्मीप्रदत्वमिति ध्येयम् । अत्रेदं बोध्यम्—'नद्यृतश्च' इति कप सिद्धे उरःप्रभृतिषु लक्ष्मीशब्दपाठस्य एकवचनान्तलक्ष्मीशब्दावयवकबहुब्रीहेरेव नित्यं कप्, अन्यत्र 'शेषाद्विभाषा' इति विकल्प एवेति नियमार्थतायाः उक्तत्वादिह च बहुवचनान्तलक्ष्मीशब्देन विग्रहस्य प्रदर्शितत्वान्न नित्यकप्प्रसक्तिः । 'शेषाद्विभाषा' इति कपश्च वैकल्पिकतयाऽत्र तस्याविवक्षणम् । नाप्युपसर्जनह्रस्वः 'गोस्त्रियोः' इत्यनेन स्त्रीप्रत्ययान्तस्यैव ह्रस्वविधानात् । लक्ष्मीशब्दस्य च स्त्रीप्रत्ययान्तत्वाभावादिति । अत्र लौकिके प्रस्तुतव्यवहारे अप्रस्तुतच्छन्दश्शास्त्रीयव्यवहारारोपः ॥

यथावा—

**रमणीयसन्धिबन्धं हृद्याङ्गं सर्वतोऽभिनन्द्यरसम् । रूपं तवाभिरूपं विलोक्य सभ्या मुकुन्द यान्ति मुदम् ॥७९४॥**

रमणीयस्सन्धिबन्धो यस्य तत् । अनेन—

अङ्गप्रत्यङ्गकानां यस्सन्निवेशो यथोचितम् ॥

सुस्निग्धसंधिबन्धं यत्तत्सौन्दर्यमितीर्यते ।

इत्युक्तलक्षणसौन्दर्यवत्त्वं द्योतितम् । पक्षे रमणीयाः सन्धीनां ।

'मुखं प्रतिमुखं गर्भस्सावमर्शोपसंहृतिः' इत्युक्ताः ये पञ्च सन्धयस्तेषां बन्धः यस्मिंस्तत्। हृद्यः हृदये भवः अङ्कः श्रीवत्सचिह्नं यस्य तत्। पक्षे हृदयप्रियाः अङ्काः॥

प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥

इत्युक्तलक्षणाः विच्छेदविशेषाः यस्मिंस्तत्। सर्वतः अभिनन्द्या रसा भूः येन तत् अभिनन्दनीयशृङ्गारादिरसमिति च। तव अभिरूपं मनोज्ञं रूपं दिव्यविग्रहं विलोक्य सभ्याः साधवः सामाजिकाश्च मुदं यान्ति। अत्र लौकिकव्यवहारे नाटकीयव्यवहारारोपः॥

शास्त्रीये लौकिकव्यवहारारोपो यथा—

**विजरो विमृत्युरपहतपाप्मा त्वं सत्यकाम इति भगवन्। त्वयि तत्परा प्रसूते श्रुतिरनघा काङ्क्षितार्थमखिलमपि ॥७१५॥**

अत्र वेदान्तशास्त्रीये व्यवहारे लौकिकवल्लभानुरक्तसुप्रजःकुटुम्बिनीव्यवहारारोपः। 'अपहतपाप्मा विजरः' इति श्रुत्यर्थोऽत्रानुसंहितः। पक्षे—सत्यकामः स्वनायिकानुरक्त इति यावत्। काङ्क्षितार्थं अपेक्षितं अभिधेयं प्रयोजनं च॥

यथावा—

**प्रविहाय भुक्तभोगामचितं प्रकृतिं स्वलाभसोत्कण्ठम्। तावकमच्युत धन्यं कुशलतरा संप्रतीक्षते मुक्तिः॥७१६॥**

भुक्तभोगां अनुभूतसुखां विरक्तेः प्रागेव भोगा भुक्ताः न तूपरिष्टाद्भोक्ष्यन्त इति भावः । अचितं अचेतनरूपां अज्ञां च प्रकृतिं प्रविहाय 'जहात्येनां भुक्तभोगामजोऽन्यः' इति श्रुतिरत्रानुसंहिता । स्वलाभे अपहतपाप्मत्वादिविशिष्टस्वस्वरूपप्राप्तौ सोत्कण्ठम् । पक्षे स्वलाभे आत्मप्राप्तौ सोत्कण्ठं—

सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते ।

तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुः ॥

इत्युक्तेच्छाविशेषसहितम् । हे अच्युत ! तावकं त्वद्भक्तं धन्यं कृतकृत्यं धनं लब्धारं च पुमांसं कुशलतरा अतिमात्रक्षेमंकरा चतुरतरा च 'पर्याप्तौ सुकृते क्षेमे कुशलं निपुणे त्रिषु' इति रत्नमाला । मुक्तिः प्रतीक्षते प्रतिपालयति । अत्र वेदान्तशास्त्रीये अकृते व्यवहारे भुक्तभोगमूढवनितापरित्यजनपूर्वकस्वाभिलाषिनायकप्रतिपालयितृवासकसज्जिकाव्यवहारारोपः ॥

यथावा—

**सा देवता विजयतेतरां परव्यूहविभवभेदेन ।**
**साध्वर्चा भुवनेऽन्तर्यामितया चापि विख्यात्या ॥**

सा देवता 'सेयं देवतैक्षत' इत्युक्तापरब्रह्मरूपा देवता । परव्यूहविभवभेदेन परः परवासुदेवः व्यूहाः वासुदेवसंकर्षणाद्याः विभवाः रामकृष्णाद्यवताररूपाः तद्रूपेण भेदेन विजयतेतराम् । किंच भुवने अस्मिन् जगति साध्वर्चा श्रीरङ्गवेंकटाचलादिदिव्यक्षेत्रनिवासरमणीयार्चारूपा । साध्वी अर्चा यस्यास्सेति बहुव्रीहिः । साध्वी च सा अर्चेति तत्पुरुषो वा । 'प्रतिकृतिरर्चा' इत्यमरः । अन्तर्यामितया अन्तर्यामिरूपेण, हेतौ तृतीया । विख्यात्या चापि अन्तर्यामित्वप्रयुक्तकीर्त्या चापीत्यर्थः ।

यद्वा--विशिष्टा ख्यातिर्यस्यास्सा तथोक्ता, अन्तर्यामितया चापीति योज्यम् । विजयतेतरामित्यनुषज्यते । परब्रह्मरूपा देवता परव्यूहविभवार्चान्तर्यामिरूपैर्जगति विजयतेतरामिति निर्गळितोऽर्थः । पक्षे—उत्तरार्धे भुवने अन्तः या अमितया इतिच्छेदः । भुवनेऽन्तः लोकस्य मध्ये इत्यर्थः । 'सप्तमी शौण्डैः' इति सप्तमीसमासविधायकसूत्रस्थशौण्डादिगणे अन्तश्शब्दपाठात् ज्ञापकात् तद्योग अवयविन आधारत्वविवक्षया सप्तमी वृक्षे शाखेतिवदिति ध्येयम् । या देवता परेषां वैरिणां व्यूहाः बलविन्यासाः तेषां विभवस्य भेदेन विदारणेन अमितया अपरिच्छिन्नया विख्यात्या कीर्त्या चापि साध्वी अर्चा यस्यास्सा तथोक्ता पूज्या भवतीत्यर्थः । सा देवता विजयतेतरामित्यन्वयः । अत्र प्रस्तुते पञ्चरात्रागमसिद्धे व्यवहारे--

महती देवता ह्येषा नररूपेण तिष्ठति ।

इत्युक्तप्रभावप्रतापयशस्सुभगमहाराजव्यवहारो लौकिक आरोप्यते ॥

यथावा—

**ननु नित्यदस्युवर्गत्रस्तोऽहं क्वापि रक्षणमविन्दन् । विश्वस्य त्वयि नाथ न्यस्तस्वो धन्य एव न कथं स्याम् ॥ ७१८ ॥**

ननु नाथ ! नित्याः अनपायिनः ये दस्यवः कामादयश्शत्रवः तेषां वर्गात् वर्गस्य वा त्रस्तः भीतः । पक्षे—नित्यं दस्युवर्गात् चोरनिवहात् त्रस्तः उद्विग्नः 'दस्युश्चोरे पुंसि रिपौ' इत्युभयत्रापि मेदिनी । क्वापि रक्षणमविन्दन् शरणमलभमानस्सन् विश्वस्य रक्षिष्यतीति प्रतीत्य त्वयि न्यस्तं अर्पितं स्वं आत्मा धनं च येन स तथोक्तः 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये

स्वोऽस्त्रियां धने' इत्युभयत्राप्यमरः । धन्यः कृतार्थ एव कथं न स्याम् । भगवति न्यस्तात्मरक्षाभरस्य कृतार्थता स्यादेवेति भावः ।

पक्षे—धनं लब्ध्वा धन्यः प्रत्यायिते सुजनसार्वभौमे न्यस्त-धनस्य कथं पुनस्तद्धनलाभो न स्यादिति भावः । अत्र भगवच्छ-ास्त्रीये व्यवहारे लौकिकव्यवहारारोपः ॥

यथावा—

**प्रोल्लसदमलाब्जकरः प्रकाशविभवैः प्रसाधि-ताशान्तः । प्रथते फणाधरगिरिप्रभोरपघनो घना-गमस्यान्ते ॥७९९॥**

प्रोल्लसन् अमलः अब्जश्शङ्खः करे यस्य सः, प्रोल्लसन्तः अमलाः अब्जकराः चन्द्रकिरणाः यस्मिन् स इति च । प्रकाशविभवैः प्रभातिशयैः प्रकृष्टैः काशकुसुमविभवैश्च प्रसाधिताशान्तः । फणा-धरगिरिप्रभोः अपघनः दिव्यविग्रहः घनस्य गम्भीरार्थस्य आगमस्य वेदस्य अन्ते उपनिषदीत्यर्थः । पक्षे—घनागमस्य प्रावृट्समयस्य अन्ते अवसाने इत्यर्थः । प्रथते । अत्रापि शास्त्रीये व्यवहारे लौ-किकशरत्समयव्यवहारारोपः ॥

संख्यावाञ्छस्सर्वविद्भिश्चमत्कारैकजीवितैः ।
उदाहरणभूयस्त्वं सोढव्यं चापलात्कृतम् ॥

इयं चालंकारान्तरेषु भूयस्स्वानुगुण्येन वर्तते । यथा—

**कटकश्चरणे व्यलसच्छिरो हरेरधिरुरोह मणिम-कुटी । दत्तेऽन्तरे वधूटी स्वल्पेऽपि विशृङ्खलप्रवृत्ति-स्स्यात् ॥८००॥**

अत्र समर्थ्यत्वेन वर्तमाना समासोक्तिरर्थान्तरन्यासानुगु-ण्यमाधत्ते ॥

यथावा—

गृह्णाति को नु हृदयान्यबलानां भुवि निसर्गचपलानाम्। दरमनभिमुखे भगवति चिरपरिचितमपि नरं त्यजति संपत्॥८०१॥

अत्र समर्थकत्वेन वर्तते॥

प्रसृमरघृणयो मणयो हारगताश्शौरिहृत्पदगताय। प्राभृतमर्पयितुं मणिवराय मन्ये प्रसारयन्ति करान्॥८०२॥

अत्र साम्राज्यसिंहासनाधिरूढसार्वभौमोपहारार्पणपरपरिच्छिन्नजनपदाधिपनरपतिसमुदयव्यवहारमूला करप्रसारणोत्प्रेक्षा। अनेनैव पथा अचेतनव्यवहारे प्रस्तुते चेतनव्यवहारसंबन्धिस्वरूपहेतुफलोत्प्रेक्षायां, चेतनव्यवहारे प्रस्तुते चाचेतनव्यवहारसंबन्धिस्वरूपहेतुफलोत्प्रेक्षायां च समासोक्तिरेव मूलम्। सारूप्यादपीयं समासोक्तिर्भवतीति दीक्षितैरभ्यधायि। न क्षमते तां समासोक्तिजीवातोर्विशेषणसाम्यस्य 'पुरा यत्र स्रोतः' इत्यत्राभावेन समासोक्तिताया एवानुपपत्तेरिति वदन्नसगङ्गाधरकृत्। तन्मते—'पुरा यत्र स्रोतः' इत्यादावप्रस्तुतप्रशंसैव, तथैव तेनव्यवस्थापनात्। तत्सर्वमप्युपरिष्टादप्रस्तुतप्रशंसालंकारनिरूपणावसरे दर्शयिष्यामः॥

इत्यलंकारमणिहारे समासोक्तिसरः पञ्चविंशः.

पूर्वभागस्समाप्तः.

## अशुद्धसंशुद्धिः.

| | | | |
|---|---|---|---|
| 72 | 18 | प्रक्षावत | प्रेक्षावत |
| 184 | 21 | लधमेवेति | लब्धमेवेति |
| ,, | 22 | पादातव्य | दाहर्तव्य |
| 198 | 9 | भवितुर्हति | भवितुमर्हति |
| 328 | 14 | इत्लाकारफ | इत्लाकारक |